Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

योगतन्त्र-ग्रन्थमाला

[ १० ]

# लुप्तागमसंग्रहः

[ द्वितीयो भागः ]




Q12:23x1
15M3.2

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

YOGATANTRA-GRANTHAMĀLĀ

[ Vol. 10 ]

# LUPTĀGAMASAṀGRAHA

] PART-II ]

Collected & Edited
by
**Pt. VRAJAVALLABHA DVIVEDĪ**
Ex. Professor & Head of Dept. of Yogatantra
&
Śāstracūdāmaṇi Professor
**Sampurnanand Sanskrit Vishvavidyalaya**
**Varanasi**




VARANASI
1983

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

Published by—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

Q12:23x1
15M3.2

Available at—
**Sales Department,**
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi-221002 ( India ).




First Edition : 500 Copies.
Price : Rs. 76.00

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDAL
LIBRARY
Jangamwadi Math, Varanasi
ACC No.........8532...............

Printed by—
Ghan Shyam Upadhyaya
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press,
Varanasi,

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

योगतन्त्र-ग्रन्थमाला

[ दशमं पुष्पम् ]

# लुप्तागमसङ्ग्रहः

[ द्वितीयो भागः ]

सङ्कलयिता सम्पादकश्च

प० श्रीव्रजवल्लभद्विवेदः

शास्त्रचूडामण्याचार्यः

सांख्ययोगतन्त्रागमविभागाध्यक्षचरः, आचार्यश्च

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये




वाराणस्याम्

२०४० तमे वैक्रमाब्दे १९०५ तमे शकाब्दे १९८३ तमे खैस्ताब्दे

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

प्रकाशकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी ।

प्राप्तिस्थानम्—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी - २२१००२.

प्रथमं संस्करणम्—५०० प्रतिरूपाणि
मूल्यम्—७६.०० रूप्यकाणि

मुद्रकः—
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

# प्रास्ताविकम्

अतलस्पर्शः खलु संस्कृतवाङ्मयपारावारः। आवैदिकसंहिताभ्य आलौकिकसाहित्यं भूयिष्ठाभिर्धाराभिरयं चिरकालात् प्रपूरितः साम्प्रतमपि प्रपूर्यते। तत्र सरस्वतीसरिदिव भूयस्यो वाङ्मयधारा अन्तःसलिलताम् अन्तरालकुल्यतां वा समुपेताः। ये ग्रन्था आद्यशङ्कराचार्यैः परिशीलिताः, येषां वचांसि च समुद्धृतानि तैः स्वग्रन्थेषु, सम्प्रति तेषामनेके विलुप्ताः। एवमेव व्याकरणनिरुक्तज्योतिषच्छन्दःशिक्षा-कल्प-पुराण-न्यायमीमांसाधर्मशास्त्रसांख्ययोगतन्त्रबौद्धजैनदर्शनसंगीतायुर्वेदार्थशास्त्रादिवाङ्मयेऽनेकेषामाचार्याणां नाममात्रस्मरणेन विज्ञायते यत् तैर्विरचितात् प्रभूताद् वाङ्मयाज्जिज्ञासवो विद्वांसश्च वञ्चिता अभूवन्।

व्याकरणशास्त्रे व्याडिविभावितः संग्रहाख्यो ग्रन्थः श्रूयते न तूपलभ्यते। केवलं तद्वचनान्येव बहुत्र विकीर्णानि दृष्टिपथमायान्ति। काशिकावृत्त्युपजीव्यभूतानां भूयिष्ठानां वृत्तीनां नामानि समाकर्ण्यन्ते, न तु ताः सम्प्राप्यन्ते। बृहत्संहिताव्याख्यायां भट्टलोल्लटप्रणीतायां सुमहितानां विलुप्तप्राचीनग्रन्थानां भूयांसि वचनानि भट्टलोल्लटेन समाकलितानि। महाभारतस्मृतेन यास्केन शाकटायनशाकपूण्यादयो विविधा निरुक्ताचार्या निरुक्ते सादरं स्मृताः। एवमेव ख्रीस्ताब्दात् पूर्वं पञ्चमे शताब्दे विद्यमानेन व्याकरणाचार्येण पाणिनिना समुद्धृतमतानां गार्ग्यगालवकाशकृत्स्नभारद्वाजादीनां वैयाकरणानां व्याकरणान्यनुमीयन्त एव। वार्त्तिककारेण कात्यायनेन समुद्धृतपतस्य पौष्करसादेर्व्याकरणाचार्यस्य व्याकरणं स्मृतिशेषतामगात्।

आगमवाङ्मये मुख्यतोऽभिनवगुप्तपादाचार्यैस्तन्त्रालोके राजानकजयरथेन तद्विवेके, महेश्वरानन्देन महार्थमञ्जरीस्वोपज्ञव्याख्याने परिमले, उत्पलवैष्णवेन च स्पन्दप्रदीपिकायां योगतन्त्राचार्याणां प्रभूतानि समुदाजह्रिरे वचांसि क्वचिद् ग्रन्थसंज्ञामाख्यापयता क्वचिदाचार्यनाम व्याहरता क्वचिच्चोभयोराख्यामुल्लिखितवता। अभिनवगुप्ताचार्यादिभिस्ते सर्वे ग्रन्था नूनमक्षिसाक्षीकृताः स्युर्येषां वचनानि तैः समुद्धृतानि सन्ति। ततोऽपि प्राक्तनेषु ग्रन्थेषु व्याख्याग्रन्थेषु वा समुल्लिखितानि वचनानि गुप्तपादादिभिः पुनः स्वकीयेषु ग्रन्थेषु समुदहारिषतेतीदमपि सम्भाव्यते। वस्तुतस्तु प्रतिशास्त्रमेव स्वातन्त्र्येण रत्नाकरः। अनूनकं वाङ्मयं खलु महोदधिः।

आगमशास्त्रस्य विलुप्तरत्नानां विचयनं वाराणसेयसंस्कृतविश्वविद्यालये योगतन्त्रविभागाध्यक्षचराणां स्वनामधन्यानां म० म० गोपीनाथकविराजमहोदयानां सदाशयतया प्रयासेन च समुपक्रान्तम्। तत्र विभागेऽष्टचत्वारिंशत्संख्याकान् तन्त्रागमविषयकान् ग्रन्थान् निर्मथ्य विलुप्तागमवचनानि समाहृतानि। कानिचिदाचार्यमतेन कतिचिच्च ग्रन्थनाम्ना व्यवस्थापितानि निर्मथितागमग्रन्थोल्लेखानुरोधेन। इत्थमिह विलुप्तागमा-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



नामागमकाराणां च चतुःशतीं संगृह्य तदीयानि यावदुपलब्धानि वचनानि निरदिश्यन्त । पादटिप्पणीषु संबद्धानामुपजीव्यग्रन्थानां पृष्ठसंख्यादिनिर्देशो विहितः । लुप्तागमसंग्रहोऽयं भागद्वयेन प्रकाशितः । पूर्वार्द्धमेतदीयं कविराजमहोदयेषु पाञ्चभौतिककलेवरमधिष्ठितेष्वेव १९६९ तमे ख्रीस्ताब्दे वाराणसेयसंस्कृतविश्वविद्यालयेन जिज्ञासूनामुपकाराय प्राकाश्यमानीतम् । तत्र भूमिकायां लुप्तागमानामागमकाराणां च परिचयादिकं नैव विवृतम् । उत्तरार्द्धेऽस्मिन् द्वितीये भागे पूर्वार्द्धस्यापि लुप्तागमानामागमकाराणां च परिचयात्मकं विवरणं महतायासेन समुपनिबद्धमुपोद्घाते सम्पादनकलानिष्णातेन योगतन्त्रागमविभागाध्यक्षचरेण पण्डितप्रवरेण श्रीव्रजवल्लभद्विवेदमहोदयेन ।

'तन्त्राणां कापि दार्शनिकी महनीयता नास्ति । तन्त्रदर्शनांशस्तन्त्रागमवर्णनाद् दर्शनान्तरीयग्रन्थेषु समीचीनतर उपवर्णितः' इति संस्कृतसाहित्येतिहासे कीथमतम् । यद्यपि दर्शनान्तराणामिव योगतन्त्रस्यापि दर्शनत्वप्रतिष्ठा प्रथते, तथापि तन्निर्देशकानां ग्रन्थानामङ्गुलिगण्यत्वमेव तज्ज्ञैः प्रतिपद्यते । इहोपोद्घाते लुप्तागमवचनाधारेण दार्शनिकानि तत्त्वानि सम्प्रतिपादितानि । विविधनामावलीपरीक्षणे शैवसिद्धान्तागमानामुपागमानाम्, शिवस्य पञ्चवक्त्रेभ्यो निर्गतानां तन्त्राणां चतुष्षष्टितन्त्राणां-चतुष्षष्टिभैरवागमानां च सूच्यो महते लाभाय कल्पते जिज्ञासूनाम् । एवं खलूपोद्घातोऽयं स्वतन्त्रो ग्रन्थ एव समजनि तान्त्रिकस्य वाङ्मयस्य । सोपोद्घातस्य तस्यास्य लुप्तागमसंग्रहस्य द्वितीयो भागो योगतन्त्रग्रन्थमालाया दशमपुष्पतया विरचितो नूतनसूचनोपबृंहितो नूनमुपकारको भविष्यति जिज्ञासूनामिति ध्रुवं विश्वसिति ।

भागीरथप्रसादत्रिपाठी 'वागीशःशास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

बुद्धपूर्णिमायां
२०४० वै०
(२७-५-१९८३ ख्री०)

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

# उपोद्घातः

## पूर्वार्धः

लुप्तागमसंग्रहस्य द्वितीयोऽयं भागः साम्प्रतं समुपस्थाप्यते तन्त्रागमानुशीलनरुचीनां विदुषां पुरतः। प्रथमे भागे श्रद्धेया गुरुचरणा म०म०प०श्रीश्रीगोपीनाथकविराज-महोदया अस्वास्थ्यवशात् संकलितानां ग्रन्थानां ग्रन्थकाराणां तत्प्रतिपादितानां सिद्धान्तानां च समालोचनं नैव कृतवन्त इत्युभयोरपि भागयोरुपोद्घातोऽयं समारभ्यते तदीयोपदेशपद्धत्या। अत्र संकलितानां ग्रन्थानां तासां तासां तन्त्रागमशाखानां चैतिहासिकी स्थितिः, संगृहीतेषु वचनेषु प्रतिपादिनामागमशाखानां समा विषमा च दार्शनिकी दृष्टिः, शास्त्रस्यास्य पुराकाले साम्प्रतमपि च कीदृशं सांस्कृतिकं महत्त्वमिति विषयत्रयी सविस्तरमत्र प्रस्तूयते।

### लुप्तागमपदाभिप्रेतोऽर्थः

ये तन्त्रागमग्रन्थाः साम्प्रतं मुद्रिता हस्तलिखिता वा नोपलभ्यन्ते, त एवात्र लुप्तागमपदेनाभिप्रेताः। ईदृशानां ग्रन्थानामुद्धरणादिमुखेन समुपलब्धानां वचनानां संग्रहात्मकोऽयं ग्रन्थ इत्यासीद् यद्यपि संग्रहकारयोर्मनीषा, तथाप्यत्र केषाञ्चन मुद्रितानां हस्तलिखितानां च ग्रन्थानां वचांसि समुपलभ्यन्त इति बाहुल्येन व्यपदेशा भवन्तीति न्यायेन, छत्रिणो यान्तीति न्यायेन च नामसंगतिः संगमनीया। इदं चावधेयमत्र यत् प्रथमभागस्य सामग्री बहुभ्यो वर्षेभ्यः पूर्वं संकलिताऽऽसीत्, तदत्र प्रथमभागीयं गुरुचरणानां वक्तव्यं द्रष्टव्यम्। द्वितीयभागसंकलितसामग्रीमुद्रणमपि च १९७२ ई० वर्ष एव सम्पन्नमभवत्।

प्रायश्चतुश्शताधिकानां ग्रन्थानां ग्रन्थकाराणां च वचनानि संगृहीतान्युभयोरपि भागयोः। तदत्र सर्वप्रथमं तेषामाधारग्रन्थानां ससंकेतं परिचयः प्रदीयते, येभ्यो हि वचनानीमानि संगृहीतानि।

### ससंकेतमाधारग्रन्थपरिचयः

१. अ० र०— अर्थरत्नावली, नित्याषोडशिकार्णवटीका विद्यानन्दकृता। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीययोगतन्त्रग्रन्थमालायां वाराणसीतः १९६८ ई० वर्षे प्रकाशिता।

२. ई० प्र० वि०— ईश्वरप्रत्यभिज्ञाविमर्शिनी, अभिनवगुप्तकृता [1]भास्करकण्ठ-विरचितभास्करीसमाख्यया व्याख्यया सहिता। सरस्वती-भवनग्रन्थमालायां वाराणसीतः प्रकाशिता (प्रथमो भागः १९३८ ई० वर्षे, द्वितीयश्च १९५० ई० वर्षे प्रकाशितः)।

---

१. ईश्वरप्रत्यभिज्ञाविमर्शिन्यामुद्धृतानि वचनान्येवात्र संगृहीतानि, न तु भास्करकण्ठीयानि।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



३. ई०प्र०वि०वि०— ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, अभिनवगुप्तकृता। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतो भागत्रयेषु (प्रथमः १९३८, द्वितीयः १९४१, तृतीयश्च १९४३ ई०) प्रकाशिता।

४. ऋ० वि०— ऋजुविमर्शिनी, नित्याषोडशिकार्णवटीका शिवानन्दप्रणीता। अर्थरत्नावलीवत्।

५. चि०— चिद्वल्ली, पुण्यानन्दविरचितस्य कामकलाविलासस्य टीका नटनानन्दनाथविरचिता। गणेश एण्ड कम्पनी, मद्रास—इत्यतः १९६१ ई० वर्षे प्रकाशिता।

६. ज्ञा० वि०— ज्ञानदीपविमर्शिनी (त्रिपुरापद्धतिग्रन्थः), विद्यानन्दविरचिता। १९६१ संख्याका, १-५६ पत्रात्मिका मातृका, गायकवाड़ ओरियण्टल इंस्टीट्यूट, बड़ोदा—इत्यत्र संगृहीता।

७. त० नि०— तत्त्वत्रयनिर्णयः, स्वायम्भुवागममनुसृत्य तद्वृत्तिकृता सद्योज्योतिषा शिवाचार्येण संदृब्धः, अघोरशिवाचार्यकृतवृत्तिसहितः। देवसालपुरीशिवागमसिद्धान्तपरिपालनसंघेन श्रीरङ्गे वाणीविलासमुद्रणालये १९२३ ई० वर्षे मुद्राप्य अष्टप्रकरणस्य प्रथमे भागे प्रकाशितः।

८. त० प्र०— तत्त्व० प्र०. तत्त्वप्रकाशः (तत्त्वप्रकाशिका वा), भोजदेवनृपतिना निबद्धः, अघोरशिवाचार्यकृतवृत्तिसहितः। तत्त्वत्रयनिर्णयवत्।

९. त०व्या०कु०— तत्त्व०व्या०कु० तत्त्वप्रकाशव्याख्या (तात्पर्यदीपिकाख्या) कुमारकृता। अनन्तशयनग्रन्थमालायां १९२० ई० वर्षे प्रकाशिता।

१०. त० सं०— तत्त्वसंग्रहः, रौरवागमसुवृत्तिकृता सद्योज्योतिषा शिवाचार्येण तदागममनुसृत्य निबद्धः, अघोरशिवाचार्यकृतवृत्तिसहितः। तत्त्वत्रयनिर्णयवत्।

११. तन्त्र० अभि०—तन्त्रसारः, अभिनवगुप्तविरचितः। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९१८ ई० वर्षे प्रकाशितः।

१२. त० आ०— त०आ०वि०, तन्त्रा०,त०वि०, तन्त्रा०वि० तन्त्रालोकः, श्रीमदभिनवगुप्तविरचितः, राजानकजयरथकृतविवेकाख्यया व्याख्यया सहितः। काश्मीरग्रन्थावल्यां श्रीनगरतः १९१८-१९३८ ई० पर्यन्तेषु वत्सरेषु द्वादशखण्डेषु प्रकाशितः।

१३. त्रि० ल० वृ०— त्रिपुराभैरवीलघुस्तुतिवृत्तिः, सोमतिलकसूरिविरचिता। राजस्थानपुरातत्त्वग्रन्थमालायां १९५२ ई० वर्षे प्रकाशिता।

१४. न० प०— न० प० टी० नरेश्वरपरीक्षा, सद्योज्योतिषा शिवाचार्येण विरचिता, नारायणकण्ठसुतरामकण्ठविरचितप्रकाशाख्यटीकया सहिता। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९२६ ई० वर्षे प्रकाशिता।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



१५. ना० का०— नादकारिका, नारायणकण्ठसुतरामकण्ठविरचिता, अघोरशिवाचार्यकृतव्याख्यासहिता। देवसालपुरीशिवागमसिद्धान्तपरिपालनसंघेन श्रीरङ्गे वाणीविलासमुद्रणालये १९२५ ई० वर्षे मुद्रापितेऽष्टप्रकरणस्य द्वितीये भागे प्रकाशिता।

१६. ने० उ०— नेत्रतन्त्रोद्योतः, क्षेमराजविरचितः। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतो भागद्वये (प्रथमः १९२६, द्वितीयश्च १९३९ ई०) प्रकाशितः।

१७. प० का०— परमोक्षनिरासकारिका, सद्योज्योतिःशिवाचार्यकृता, भट्टनारायणकण्ठसुतरामकण्ठकृतवृत्तिसहिता। नादकारिकावत्।

१८. पर० योग०— परमार्थसंग्रहस्य श्रीमदभिनवगुप्तविरचितस्य योगराजकृता वृत्तिः। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९१६ ई० वर्षे प्रकाशिता।

१९. परा० अभि०— परात्रिंशिका अभिनवगुप्तविरचिततत्त्वविवेकाख्यव्याख्यासंवलिता। काश्मीरसंस्कृतग्रन्थावल्यां १९१८ ई० वर्षे प्रकाशिता।

२०. प्र० हृ०— प्रत्यभिज्ञाहृदयम्, क्षेमराजविरचितम्, ठाकुरजयदेवसिंहकृतं संस्करणम्। मोतीलाल बनारसीदास, वाराणसी—इत्यतः १९६३ ई० वर्षे प्रकाशितम्।

२१. भा०— भास्करी, भास्करकण्ठकृता ईश्वरप्रत्यभिज्ञाविमर्शिनीव्याख्या। ई० प्र० वि० वत्।

२२. भो० का०— भोगकारिका, सद्योज्योतिःशिवाचार्यकृता। अघोरशिवाचार्यकृतवृत्तिसहिता। नादकारिकावत्।

२३. म० म० प०— महार्थमञ्जरी स्वोपज्ञपरिमलव्याख्यासहिता, महेश्वरानन्देन विरचिता। अनन्तशयनसंस्कृतग्रन्थमालायां १९१९ ई० वर्षे, वाराणसेयसंस्कृतविश्वविद्यालयीययोगतन्त्रग्रन्थमालायां च १९७२ ई० वर्षे प्रकाशिता।

२४. मृ० वृ० क्रि०— मृगेन्द्रागमवृत्तिक्रियापादः। वृत्तिकारो नारायणकण्ठः। पांडिचेरीफ्रेंचशोधसंस्थानतः १९६२ ई० वर्षे प्रकाशितः।

२५. मृ० वृ० च०— मृगेन्द्रागमवृत्तिचर्यापादः। पूर्ववत्।

२६. मृ० वृ० यो०— मृगेन्द्रागमवृत्तियोगपादः। वृत्तिकारो नारायणकण्ठः। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९३० ई० वर्षे प्रकाशितः।

२७. मृ० वृ० वि०— मृगेन्द्रागमवृत्तिविद्यापादः। पूर्ववत्।

२८. मो० का०— मोक्षकारिका, सद्योज्योतिःशिवाचार्यविरचिता, नारायणकण्ठसुतभट्टरामकण्ठकृतवृत्तिसमेता। नादकारिकावत्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



२९. य० च०— यशस्तिलकचम्पूः सोमदेवसूरिविरचिता। निर्णयसागर प्रेस, बम्बई—इत्यतो द्वयोर्भागयोः (१९०१, १९०३ ई०) प्रकाशिता।

३०. यो० दी०— योगिनीहृदयदीपिका, पुण्यानन्दशिष्य-अमृतानन्दयोगिविरचिता। सरस्वतीभवनग्रन्थमालायां वाराणसीतः १९६३ ई० वर्षे प्रकाशितं द्वितीयं संस्करणम्।

३१. र० त्र०— रत्नत्रयम्, श्रीकण्ठसूरिणा विरचितम्, अघोरशिवाचार्यकृतव्याख्यया समेतम्। नादकारिकावत्।

३२. ल०सौ०टी०— लक्ष्मीधरा सौन्दर्यलहरीटीका, गणेश एण्ड कम्पनी, मद्रास—इत्यतः १९५७ ई० वर्षे प्रकाशिता।

३३. वि०प०वि०— विरूपाक्षपञ्चाशिकाविवृतिः, विद्याचक्रवर्तिना विरचिता। वाराणसेयसंस्कृतविश्वविद्यालयीययोगतन्त्रग्रन्थमालायां तन्त्रसंग्रहप्रथमभागे १९७० ई० वर्षे प्रकाशिता।

३४. वि०भै०वि०— विज्ञानभैरवविवृतिः,[1] शिवोपाध्यायविरचिता। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९१८ ई० वर्षे प्रकाशिता।

३५. श० र० सं०— शतरत्नसंग्रहः, स्वोपज्ञशतरत्नोल्लेखिनीव्याख्यायुतः। उमापतिशिवाचार्यविरचितः। कलिकातास्थ-आगमानुसन्धानसमितिद्वारा १९४३ ई० वर्षे प्रकाशितः।

३६. शि० दृ० वृ०— शिवदृष्टिवृत्तिः, सोमानन्दकृतशिवदृष्टिग्रन्थस्य भट्टोत्पलविरचिता वृत्तिः। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९३४ ई० वर्षे प्रकाशिता।

३७. शि० वि०— शिव० विम० शिवसूत्रविमर्शिनी, क्षेमराजकृता। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९११ ई० वर्षे प्रकाशितं प्रथमं संस्करणम्, तत्रत्यमेव च द्वितीयं संस्करणम्।

३८. शि०स्तो०वि०— शिवस्तोत्रावलीविवृतिः, क्षेमराजकृता। भट्टोत्पलरचितग्रन्थस्य व्याख्यानभूता। चौखम्बा संस्कृत सिरीज, काशी—इत्यतः १९६४ ई० वर्षे प्रकाशितं द्वितीयं संस्करणम्।

३९. श्रीत० चि०— श्रीतत्त्वचिन्तामणिः, पूर्णानन्दपरमहंसविरचितः। कलिकातासंस्कृतग्रन्थमालायां १९३६-१९३८ ई० वर्षेषु भागत्रयेषु प्रकाशितः।

४०. सा०प०टी०— साम्बपञ्चाशिकाटीका, क्षेमराजविरचिता, वाराणसेयसंस्कृतविश्वविद्यालयीययोगतन्त्रग्रन्थमालायां तन्त्रसंग्रहप्रथमभागे १९७० ई० वर्षे प्रकाशिता।

---

१. हिन्दूविश्वविद्यालयमातृकयोः (पृ० २२०, ७६६) सिद्धयोगीश्वरो विज्ञानभैरवस्य कर्ता स्मर्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



४१. सौ० ल० अरु०—सौन्दर्यलहर्या अरुणामोदिनी टीका। ल० सौ० टी० वत्।

४२. सौ० ल० लक्ष्मी०—सौन्दर्यलहर्या लक्ष्मीधराटीका। ल० सौ० टी० वत्।

४३. सौ० ल० सौभा०—सौन्दर्यलहर्याः सौभाग्यवर्धनीटीका। ल० सौ० टी० वत्।

४४. स्त० क्षेम०— स्तवचिन्तामण्या भट्टनारायणविरचितायाः क्षेमराजकृता व्याख्या। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९१८ ई० वर्षे प्रकाशिता।

४५. स्प० प्र०— स्पन्दप्रदीपिका, उत्पलवैष्णवविरचिता। पूर्वं विजयनगरसंस्कृतग्रन्थमालायां वाराणसीतः प्रकाशिता। तदनु च वाराणसेयसंस्कृतविश्वविद्यालयीययोगतन्त्रग्रन्थमालायां तन्त्रसंग्रहप्रथमभागे १९७० ई० वर्षे प्रकाशिता।

४६. स्पन्द० क्षेम०—स्पन्दनिर्णयः क्षेमराजविरचितः। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९२५ ई० वर्षे प्रकाशितः।

४७. स्पन्द० राम०—स्पन्दकारिका राजानकरामकण्ठविरचितविवृतिसमेता। काश्मीरसंस्कृतग्रन्थावल्यां श्रीनगरतः १९१३ ई० वर्षे प्रकाशिता।

४८. स्व० उ०— स्वच्छन्दोद्योतः क्षेमराजविरचितः। काश्मीरसंस्कृतग्रन्थावल्यां षट्सु भागेषु ई० १९२१ वर्षतः १९३५ ई० पर्यन्तं प्रकाशितः।

## आधारग्रन्थविश्लेषणम्

एतेषु तन्त्रालोके तद्विवेके च, महार्थमञ्जरीपरिमले, स्पन्दप्रदीपिकायां चेति चतुर्षु ग्रन्थेषु प्राधान्येन भूयांसि ग्रन्थग्रन्थकारवचांसि संगृहीतानीति त एवात्र प्रधाना आधारभूता ग्रन्था मन्तव्याः। नामोल्लेखपुरस्सरमुद्धृतान्यत्रत्यानि सर्वाणि वचनानि संप्रयत्नमुभयोरपि भागयोः संगृहीतानि। शतरत्नसंग्रहे मूले स्वायम्भुव-निश्वास-मतङ्ग-देव्यामत-मृगेन्द्र-किरण-पराख्य-देवीकालोत्तर-विश्वसार-ज्ञानोत्तराख्यानां दश शैवागमानां ९१ संख्याकाः श्लोकाः सन्ति। प्रायः सर्वे तेऽत्र प्रथमद्वितीयभागयोरुपोद्घाते च संगृहीता विहाय मृगेन्द्रागमश्लोकान् मुद्रितान्। उल्लेखिन्यां तस्य टीकायामन्येऽपि ग्रन्था ग्रन्थकाराश्च समुद्धृता दृश्यन्ते। [1]न तेषां सर्वेषामत्र संग्रहः समजायत। शिवानन्द-विद्यानन्द-अमृतानन्द-जयरथ-योगराज-क्षेमराज-अभिनवगुप्त-भट्टोत्पलरचितेषु पूर्वोक्तेषु ग्रन्थेषु विद्यमानानि वचनान्यपि सावधानमत्र संगृहीतानि। एवं सत्यपि कानिचन

---

१. अत्र सद्योज्योतिःपाद-रामकण्ठ-नारायणकण्ठ-अघोरशिवाः (पृ० २), संग्रहकारः (पृ० ६), सिह्लनकृतं शान्तिशतकम् (पृ० ३३), त्रयोदशशतिका (पृ० ४२), तत्त्वप्रकाशवृत्तिः (पृ० ४४), मोक्षकारिकावृत्तिः (पृ० ८३), वायव्यम् (पृ० ९३) इत्येते ग्रन्थकारा ग्रन्थाश्च स्मृता वर्तन्ते। तत्र संग्रहकारवचनानि स्वायम्भुवागमे समुपलभ्यन्ते। संग्रहकारोऽत्र शतरत्नसंग्रहकार एव मन्तव्यः। तेन हि स्वग्रन्थस्य परतने भागे स्वायम्भुवागमवचनमेतत् संगृहीतम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



वचनानि न समाविष्टानि स्युरिति तदर्थं क्षन्तव्या वयं विचक्षणशेमुषीकैर्विपश्चिद्भिः। सौन्दर्यलहरीटीका-श्रीतत्त्वचिन्तामणिसदृशेषु नूतनेषु ग्रन्थेषु संगृहीतानि कानिचन वचनानि विद्यन्तेऽत्र, न सर्वाणि। आधारग्रन्थानामेषां समेषां विशेषतोऽवधेयानि स्थलान्युपोद्घातभागे तत्रत्यासु टिप्पणीषु समावेशितानि द्रष्टव्यानि।

प्रथमे भागे महार्थमञ्जरीपरिमलस्य प्रथमं संस्करणम्, द्वितीये च द्वितीयं संस्करणमुपयुक्तम्। शिवसूत्रविमर्शिन्याः स्पन्दप्रदीपिकायाश्च उभयोरपि भागयोः प्रथममेव संस्करणम्, उपोद्घातभागे च द्वितीयमेव संस्करणं सहायकमभूत्। तत्त्वप्रकाशस्य कुमाराघोरशिवव्याख्यावृत्तिभ्यां सहितस्य नूतनं संस्करणं साम्प्रतमुपलभ्यते। तत्र परिशिष्टादीनामव्यवस्थितत्वादुभयोरपि भागयोः प्रथमसंस्करणस्यैव प्रयुक्तत्वाच्च उपोद्घातभागेऽपि तस्यैवोपयोगो विहितः, न नूतनस्य संस्करणस्य। अत एवास्माभिराधारग्रन्थानां तेषामेव संस्करणानां परिचयः प्रदत्तः, येषां हि साहाय्येनात्र सामग्री संकलिता। यद्यपि सन्ति पूर्वतनानि पश्चात्तनानि वा संस्करणानि विरूपाक्षपञ्चाशिका-साम्बपञ्चाशिका-शिवस्तोत्रावली-सौन्दर्यलहरी-योगिनीहृदयदीपिकाप्रभृतीनां ग्रन्थानाम्। अत्र संगृहीतानि वचनानि प्रायः प्राचीनप्रकृतिकानां तन्त्रागमग्रन्थानां सन्ति, तथापि पञ्चषा ग्रन्था नूतनां पद्धतिमुपजीवन्तः सौन्दर्यलहरीटीकासु अरुणामोदिन्यादिषूद्धृता अप्यत्र दृश्येरन्।

## आधारग्रन्थकर्तृकालक्रमः

शिवदृष्टिकारेण[1] सोमानन्देन स्वायम्भुवागमव्याख्याकारः खेटपालः (सद्योज्योतिः), मतङ्गतन्त्रव्याख्याता व्याख्यानिगुरुश्च स्मर्येते। सोमानन्दस्य समय ईशवीया नवमी शताब्दी निश्चीयते। ततः पूर्वतनः सद्योज्योतिः शिवाचार्यः। भट्टोत्पलः सोमानन्दस्य शिष्यस्तत्कृतिं शिवदृष्टिं व्याख्याति। [2]स्पन्दप्रदीपिकाकार उत्पलवैष्णवः प्रत्यभिज्ञाकारिकां स्मरतीति भट्टोत्पलात् पश्चात्तनः। भट्टोत्पलस्य समय ईशवीयदशमशताब्द्याः पूर्वार्धो निर्धार्यते। सोमदेवसूरिणा यशस्तिलकचम्पूः ९५९ ई० वर्षे समापिता। अभिनवगुप्तेन च दशमशताब्द्या अन्तिमे भागे, एकादशशताब्द्या आदिमे

१. "तथा चाह खेटपालः शब्दराशेर्विशेषताम्॥ स्वायम्भुवस्य टीकायां बाढमित्यादिना गुरुः। तथा मतङ्गटीकायां व्याख्यानिगुरुणोदितम्॥ (३।१३-१४) इत्यत्र शिवदृष्टौ। एतेन सोमानन्दाविर्भावात् पूर्वं सिद्धान्तशैवदर्शनं सुप्रतिष्ठितमासीदित्यपि प्रतीयते। "प्रायश्च सिद्धान्तप्रियो लोकः" (स्वच्छन्दो० २।२५) इति क्षेमराजवचनात् तत्समयेऽपि तस्य प्रामाण्यमप्रतिहतमासीत्।

२. अस्य ग्रन्थस्याद्यापि शोभनं संस्करणं नास्ति। अपेक्षितं च तत्। कक्ष्यास्तोत्र-रहस्यस्तोत्र-विद्याधिपति-संवित्प्रकाश-सिद्धनाथ-सिद्धोक्तस्तुतिप्रभृतीनामुद्धरणान्यत्र त्रुटिपूर्णानि प्रतीयन्ते। स्वबोधोदयमञ्जरीप्रभृतिनाम्नामपि परीक्षणमपेक्षितम्। एवं च भाण्डारकरशोधसंस्थानमातृकयाऽन्याभिश्च मातृकाभिस्तद्विधेयम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



भागे च केचन ग्रन्था रचिताः। उत्पलवैष्णवः, [1]स्पन्दशास्त्रव्याख्याता रामश्चाभिनवगुप्तपूर्ववर्तिनौ स्याताम्। मृगेन्द्रवृत्तिकारो नारायणकण्ठोऽभिनवगुप्तसमसामयिकः पूर्ववर्ती वा स्यात्, [2]क्षेमराजेन हि तच्छिष्येण स्वच्छन्दोद्योते (४।२०८) स स्मर्यते। रत्नत्रयकारः श्रीकण्ठो नारायणकण्ठेन सादरं स्मृतस्य रामकण्ठस्य शिष्यश्चेत् ततः प्राचीनः, अथ नारायणकण्ठसुतरामकण्ठस्य शिष्यस्तर्हि ततोऽर्वाचीनो मन्तव्यः।

स्तवचिन्तामणिकारो भट्टनारायणोऽभिनवगुप्तेन परात्रिंशिकाविवरणे (पृ० ६९), ईश्वरप्रत्यभिज्ञाविमर्शिन्यादिषु (पृ० ८२) च स्मृत इति सोऽपि ततः प्राचीन एव। धाराधिपस्य भोजदेवस्य समयः १०१८-६० ई० निर्धार्यते। अतः स अभिनवगुप्तपश्चाद्भवः स्वीकर्तव्यः। अघोरशिवेन भोजनृपतेस्तत्त्वप्रकाशो व्याख्यातः। स च ११५८ ई० वर्षे स्वपद्धतिग्रन्थं जग्रन्थ, व्याख्यातवांश्च नारायणकण्ठसुतरामकण्ठकृतां नादकारिकामिति रामकण्ठस्ततः प्राचीनः। रामकण्ठपितरं नारायणकण्ठं क्षेमराजः स्मरतीति तस्य पुत्रो रामकण्ठः क्षेमराजसमसामयिको मन्तव्यः। एवं चाघोरशिवो रामकण्ठस्य शिष्य इति [3]प्रायोवादमात्रम्। तत्त्वप्रकाशव्याख्याता[4] कुमारश्च गुर्जरदेशे

---

१. "श्रीमदुत्पलदेवपादपद्मानुजीविनो राजानकश्रीरामकण्ठस्य" (पृ० १६८) इति स्पन्दकारिकाविवृतिपुष्पिकावाक्यतस्तस्य भट्टोत्पलशिष्यत्वं प्रतीयते।

२. राजानकक्षेमराजस्य तद्ग्रन्थादीनां च संक्षिप्तः परिचयो न्यू० V, पृ० १६३-१६४ इत्यत्र, विस्तृतश्च डॉ० कान्तिचन्द्रपाण्डेय-डॉ० नवजीवनरस्तोगीप्रभृतिभी रचितेषु ग्रन्थेषु द्रष्टव्यः। इदमत्रावधेयम्—षट्त्रिंशत्तत्त्वसन्दोहो न कश्चन स्वतन्त्रो ग्रन्थः, किन्तु सौभाग्यसुधोदयस्य अमृतानन्दकृतस्य भागविशेषः। एवं च नायं क्षेमराजस्य ग्रन्थः। डॉ० जगदीशचन्द्रचटर्जीग्रन्थे (पृ० ३५) तत्त्वसन्दोहाख्यः कश्चन ग्रन्थः स्मर्यते। प्रत्यभिज्ञाहृदयं शक्तिसूत्रपदेन नित्याषोडशिकार्णवसेतुबन्धे स्मर्यते, न तु योगिनीहृदयदीपिकायाम्। हृदयसूत्रादीनां चोल्लेखः कामकलाविलासटीकायां चिद्वल्ल्यां वर्तते, न तु कामकलाविलासे। महार्थमञ्जरी तस्या वृत्तिश्च स्वयं क्षेमराजेन रचिता। सा च महेश्वरानन्दकृतमहार्थमञ्जरीतो भिन्ना। तां च महेश्वरानन्दोऽपि व्याख्याति। क्षेमराजकृतमहार्थमञ्जर्या महेश्वरानन्दकृतसुरभिव्याख्यासहिताया मातृका हि० वि० (पृ० ७६०) सी ४०४४ संख्याका वर्तते। तत्रत्ये (पृ० ७६०) सी ४३२६, सी ४५९७ संख्याके मातृके अपि परीक्षणीये। नायं स्तवचिन्तामणिकारप्रशिष्यः, किन्तु स्तुतिसूक्तिकार(भट्टोत्पल)प्रशिष्यस्य अभिनवगुप्तस्य शिष्य इति। लक्ष्मीकुलार्णवः क्षेमराजेन आत्मतत्त्वविलासे स्मर्यत इति आ० I, पृ० ५३७ इत्यत्र वर्ण्यते। एतन्नामको न कोऽपि ग्रन्थः क्षेमराजस्यान्यस्य वा कस्यचन लेखकस्य समुपलभ्यते। आगमतत्त्वविलासोऽवश्यं रघुनाथतर्कवागीशस्य शिवरामपुत्रस्य वर्तते।

३. मतमेतदस्माभिः "काश्मीरेतिहासः" इत्याख्ये निबन्धे (तन्त्रयात्रा, पृ० १०४-१०५) सप्रमाणं प्रत्याख्यातम्।

४. कुमार एष ईशानशिवगुरुदेवपद्धतिं स्मरति। तत्र च सोमशम्भुः स्मर्यते। सोमशम्भुना च ११३० वैक्रमे (१०७३ ई०) वत्सरे स्वग्रन्थः समापितः। एतेनाप्युपर्युक्तस्यानुमानस्य पुष्टिः संजायते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



चालुक्यराज्यसंस्थापकस्य मूलराजस्य नृपतेः (१०९० ई०) गुरुः कुमारशिवः प्रतीयते।

योगराजः क्षेमराजस्य शिष्य इति तस्य समय एकादशशताब्द्या उत्तरार्धो मन्तव्यः। जयरथस्य च समयो द्वादशशताब्द्या उत्तरार्धे स्थाप्यते। अयमेव वर्तते वामकेश्वरीमतविवरणस्य रचयिता। महेश्वरानन्दस्य परमगुरुः शिवानन्द ऋजुविमर्शिनी-कर्ता। स च त्रिपुरासारसमुच्चयाख्यं नागभट्टग्रन्थं स्मरति (पृ० ११९)। लघुस्तव-व्याख्याता सोमतिलकसूरिरपि तं नागभट्टग्रन्थं कविहस्तिमल्लकृतित्वेनोद्धरति (पृ० २) सोमतिलकसूरिणा स्वकीया व्याख्या १३९७ वैक्रमे वत्सरे (१३४० ई०) पूरितेति नागभट्टस्तत्पूर्ववर्ती वर्तते। हस्तिमल्लः कर्णाटकशासकस्य पाण्ड्यराजस्य (१२९० ई०) आश्रितः कविरासीत्। एवं च नागभट्टस्मर्ता शिवानन्दस्तत्परभावीति तस्य समय-श्चतुर्दश्यां शताब्द्यां निर्धारणीयः। एष एव समयो विद्यानन्दस्य, अमृतानन्दस्य, महेश्वरा-नन्दस्य च स्यात्। विद्यानन्देन विरचिताया हि ज्ञानदीपविमर्शिन्या मातृका १३८०-९४ ई० लिखिता समुपलभ्यते। तेन तस्य तत्पूर्वभावित्वं सुतरां सिद्धयति। चिदम्बरे क्लृप्तमठ उमापतिशिवाचार्यः पौष्करागमव्याख्याता विद्यारण्यकृतां पञ्चदशीं स्मरतीति (पृ० ९१-९२) सोऽपि चतुर्दशशताब्दीभव एव स्वीकर्तव्यः।

सौन्दर्यलहरीव्याख्याकारस्य लक्ष्मीधरस्य समयः श्रीमता चिन्ताहरणचक्रवर्तिना १४९७-१५३९ ई० मध्ये निर्धार्यते। सौन्दर्यलहरीव्याख्या सौभाग्यवर्धनी लक्ष्मीधरातः प्राचीना, अरुणामोदिनी च नवीना प्रतिभाति। पूर्णानन्दपरमहंसेन श्रीतत्त्वचिन्तामणिः १४९९ शकाब्दे (१५७७ ई०) पूरिता। नटनानन्दो राघवानन्दशङ्करानन्दादीन् स्मरतीति तत्परवर्तित्वं तस्यावसेयम्। राघवानन्दः कृष्णानन्दशिष्यो लघुस्तुतिपरमार्थसारयो-र्व्याख्याता। शङ्करानन्दश्च सुन्दरीमहोदयनिर्माता प्रतीयते। [1]शिवोपाध्यायः, [2]भास्कर-कण्ठश्चाष्टादश्यां शताब्द्यां स्वजनुषा काश्मीरभुवमलञ्चक्रतुरिति साधयन्त्यैतिहासिकाः।

## ग्रन्थग्रन्थकारविश्लेषणम्

उपरि वर्णितेषु ग्रन्थेषूपलब्धानां प्रायश्चतुःशताधिकानां ग्रन्थानां ग्रन्थकाराणां च वचनानि संगृहीतान्युभयोरपि भागयोः। तेषु कर्मकाण्डक्रमावली-तन्त्रराज-कुलार्णव-कुलचूडामणि-मानसोल्लासादयो मुद्रिताः सन्ति, किन्तु तेष्वत्र संगृहीतानि वचनानि नोपलभ्यन्ते। नारायणमुनिविरचितस्य ज्ञानगर्भस्तोत्रस्य मातृका काशीहिन्दूविश्वविद्या-लयसंग्रहे वी० ९०० संख्याका शारदालिपिमयी वर्तते, किन्तु तत्र अत्र संगृहीता ज्ञान-गर्भस्य श्लोका न दृश्यन्ते। एवं च मुद्रितानां हस्तलिखितानां च ग्रन्थानां परीक्षणं-मावश्यकम्, तत्रेमानि वचनानि सन्ति न वेति। देवनागरीलिपिमुद्रितानां ग्रन्थानां

१. डॉ० रस्तोगीग्रन्थे (पृ० २२५-२२८), अस्मदीये विज्ञानभैरवोपोद्घाते (पृ० ५-६) च परिचयोऽस्य द्रष्टव्यः।

२. भास्करकण्ठस्यास्य मोक्षोपायटीकाया लल्लादेवीवाक्यजातस्य च मातृका हिन्दूविश्व-विद्यालयसंग्रहे समुपलभ्यन्ते। तत्रैव (पृ० ७४४) राजानकभास्करस्य चित्तानु-बोधस्यापि सी ७८४ संख्याका मातृका विद्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



परीक्षणमस्माभिर्विहितम्, कासाञ्चन मातृकाणां च। विभिन्नेषु पुस्तकालयेषु संगृहीतानां मातृकाणां परीक्षणमायाससाध्यं बहुकालसाध्यं च कर्म। तन्नाधुना संभवीत्युभयोरपि भागयोः संगृहीतानां ग्रन्थानां ग्रन्थकाराणां च सर्वविधः परिचयो यथोपलब्धोऽत्र दीयते। अस्माभिरज्ञातेषु मुद्रितेषु ग्रन्थेषु विभिन्नपुस्तकालयसंगृहीतासु मातृकासु च वचनान्यत्रत्यान्युपलभ्येरन्। तेन च तेषां तासां च प्रामाणिकत्वं प्राचीनत्वं च सुतरां सिद्ध्येत्।

उपर्युक्तेषु ग्रन्थेषु केचन ग्रन्था ग्रन्थकाराश्च नाममात्रेण स्मृताः। न तेषां वचनानि तत्र दृश्यन्ते। तेषामपि परिचयाय प्रयत्यतेऽत्र। केषाञ्चनावशिष्टानां वचनानां च संग्रहः क्रियते। सर्वमेतदक्षरानुक्रमणीसरण्या प्रदर्शयिष्यते।

## अभिन्नानि शुद्धानि वा ग्रन्थग्रन्थकर्तृनामानि

इदं चात्रावधेयम्—चिन्त्यागम इत्येव शुद्धं नाम। अचिन्त्य इति तु लेखकप्रमादजम्। अथवा अचिन्त्यविश्वस्य तद् बोधकम्, यस्य हि मातृका फ्रेंचशोधसंस्थाने पांडिचेरीस्थे वर्तते। अद्वयसम्पत्तिरित्येव शुद्धं नाम, द्वयसम्पत्तिरिति तु लेखनीदोषप्रयुक्तम्। छन्दःसाम्यादात्मसम्बोधः स्वात्मसम्बोध इत्येकस्यैव ग्रन्थस्य नामनी स्याताम्। आनन्दभैरव-आनन्दशासनादीन्येकस्यैव ग्रन्थस्य नामानि। उत्तरषट्कमित्येव शुद्धं नाम, उत्तरपदमिति तु लेखकदोषप्रयुक्तम्। ऊर्मिकौलसिद्धसन्तानशास्त्रं सिद्धसन्तानं चाभिन्नमेव स्यात्। कालपरा, कालपादा, कालोत्तरतन्त्रमित्येकस्यैव ग्रन्थस्य नामानि स्युः। साम्प्रतमेव मुद्रिते सार्धत्रिशतिकालोत्तरागमेऽत्रत्यानि कानिचन वचनानि समुपलभ्यन्ते। कालिकाक्रम एव देविकाक्रम इत्यप्यभिधीयते। कुब्जिकामतं षट्सहस्रिकानाम्नाऽपि प्रसिद्धम्। कुब्जिकामतवत् त्रिकसारग्रन्थोऽपि षट्सहस्रश्लोकात्मक इति शिवसूत्रवार्त्तिके (२।६) भट्टभास्करकृते दृश्यते। कुलरत्नमाला रत्नमाला चेत्यभिन्नस्यैव ग्रन्थस्य नामनी। शम्भुनाथस्य क्रमस्तोत्रमेव स्तोत्रभट्टारकनाम्नाऽपि परिचीयते। खेटकनन्दन-खेटपाल-खेटकबाल-सद्योज्योतिः-सिद्धगुरुप्रभृतिनामभिरेक एव शैवागमाचार्यः प्रथते। चन्द्रज्ञानविद्यैव भैरवयामलम्। ज्ञानेन्दुकौमुदी विज्ञानेन्दुकौमुदी चाभिन्ने स्याताम्। ज्ञानोत्तरमेव सर्वज्ञानोत्तरमित्यभिधीयते। तन्त्रराज एव तन्त्रराजभट्टारकः, त्रिककुलमेव त्रिकरत्नकुलम्, त्रिकशासनमेव षडर्धशास्त्रमिति च मन्तव्यम्। त्रिकसारः, त्रिकहृदयम्, सारशास्त्रं चैकस्यैव ग्रन्थस्य नामानि स्युः। कुत्रचिद् मालिनीविजयमपि सारशास्त्रनाम्ना समभिधीयते। देवीपञ्चशतिकम्, पञ्चशतिकम्, पञ्चशतिकेत्यप्यभिन्नस्य ग्रन्थस्य नामानि। देवीयामलम्, देव्यायामलम्, देवीमतसूत्रं चाभिन्नस्यैव ग्रन्थस्य नामानि स्युः। धातुसमीक्षैव षड्धातुसमीक्षा, निशाचार एव निशाटनम्, निश्वासागम एव नैश्वासतन्त्रम्, पराख्यसंहितैव परातन्त्रम्, मुकुटतन्त्रमेव मुकुटसंहिता, योगसंचर एव योगसंचारोऽपीति च ध्येयम्। शम्भ्वैक्यदीपिकैव शाम्भवदीपिका स्यात्। सर्ववीरभट्टारक एव सर्वाचारहृदयम्। सिद्धयोगीश्वरमतम्, सिद्धातन्त्रम्, सिद्धामतमिति चैकस्यैव ग्रन्थस्य नामानीति।

२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## मुद्रिता ग्रन्थाः

अनुत्तराष्टकम्, अर्चनात्रिंशिका, अवधूतसिद्धपादस्य भक्तिस्तोत्रम्, आचारप्रकरणम् ( देवीकालोत्तरागमस्य ), ऋजुविमर्शिनी, कर्णिकाकारस्य स्तवचिन्तामणिः। कर्मकाण्डक्रमावली, कामिकागमः (ग्रन्थलिप्याम्), किरणागमः (ग्रन्थलिप्याम्), क्रमवासना (सुभगोदयवासना), जयाख्यसंहिता, देवीकालोत्तरम्, नवरत्नमालिका, पदसंगतिः(शिवदृष्टिवृत्तिः), परमार्थसंग्रहः, परापञ्चाशिका, पर्यन्तपञ्चाशिका, पौष्करागमः (ग्रन्थलिप्याम्), मतङ्गसूत्रम्, मालिनीमतम्, मोक्षोपायः (योगवासिष्ठम्), रत्नत्रयम्, रौरवागमः, वायवीयसंहिता, सम्बन्धसिद्धिः, सार्धत्रिशतिकालोत्तरागमः, सुप्रभेदागमः (ग्रन्थलिप्याम्), सुभगोदयः, सौभाग्य(सुभगो?सुधो)दयः, सौभाग्यहृदयस्तोत्रम्, स्तोत्रावली (भट्टोत्पलस्य), स्वतन्त्रतन्त्रं कादिमताख्यम्—इत्येते ग्रन्थाः साम्प्रतं मुद्रिता लभ्यन्ते। एतेषु केचन ग्रन्थाः प्रथमभागसंकलनावसरे, अपरे च द्वितीयभागमुद्रणावसरेऽपि (१९७२ ई० यावत्) मुद्रिता नासन्। केचन केवलं ग्रन्थलिप्यां मुद्रिताः सन्ति। पदसंगतिरिति शिवदृष्टिवृत्तेर्नाम, कर्णिकाकारश्च स्तवचिन्तामणिकारो नारायणभट्ट इति तु पश्चाज्ज्ञातम्।

ग्रन्थेषु आगम-उत्तर-कल्प-कुल-कौल-तन्त्र-मत-यामल-शास्त्र-संहिता-सूत्र-स्तोत्र-शब्दान्ता ग्रन्थाः, नाथ-पाद-भट्टारक-भैरव-राज-शिवशब्दान्ता ग्रन्थकाराश्च सन्ति। तेषां तदनुवर्तिनां च शास्त्राणां नामावली साम्प्रतं प्रस्तूयते।

## आगमादिग्रन्थाः

कामिक-किरण-चिन्त्य-तोतुल-देवीसंस्थान-निश्वास-पारमेश्वर-पौष्कर-भैरव-मायावैभव-रौरव-सुप्रभेद-सूक्ष्मस्वायम्भुव-सौरभेय-स्वायम्भुवानामागमपदान्तानां ग्रन्थानां नामान्यत्र वर्तन्ते। तत्र देवीसंस्थान-भैरव-मायावैभवागमाः क्रमेण शाक्त-भैरव-पाञ्चरात्रागमानां प्रातिनिध्यं कुर्वन्ति। अन्ये सर्वे सिद्धान्तशैवसम्प्रदायमनुसरन्ति।

क्रम-त्रिक(प्रत्यभिज्ञा)-त्रिपुरा-पाशुपत-भैरव-वैष्णव-शैवसम्प्रदायानामागमग्रन्था ग्रन्थकाराश्च अत्र संगृहीताः सन्ति। वर्तन्ते च केचन, येषां सम्प्रदायो न ज्ञायते। क्रमेण सर्वेषामत्र परिचयः समुपस्थाप्यते। अज्ञातसम्प्रदायानां च सर्वान्ते दर्शनयोगविभागे समावेशः क्रियते।

क्रम०—कालिकाक्रमः, कालिकामतम्, क्रमकेलिः, क्रमरहस्यम , क्रमवासना, क्रमसद्भावः, क्रमसिद्धिः, क्रमसूत्रम् , क्रमस्तुतिः, क्रमस्तोत्रम्, क्रमोदयः, चतुष्कपञ्चाशिका, चिल्लाचक्रेश्वरीमतम्, ज्ञानगर्भस्तोत्रम्,. तत्त्वगर्भस्तोत्रम्, तन्त्रराजः, तन्त्रराजभट्टारकः, तन्त्रसद्भावः, तत्त्वार्थचिन्तामणिः, देवीपञ्चशतिका, नयसंगतिः, पञ्चशतिकम्, परासूक्तम्, परास्तोत्रम्, पादुकोदयः, मनोनुशासनस्तोत्रम्, महानयपद्धतिः, महाम्नायः, महार्थोदयः, मुख्याम्नायक्रमः, मुख्याम्नायरहस्यविधिः, रसान्वयः, राजभैरवसूत्रम्, वाजसनेयतन्त्रम्, संविस्तोत्रम्, संविदुल्लासः, सार्धशतिकम्, स्तोत्रभट्टारकः, हस्तनय इत्येते सन्ति क्रमसम्प्रदायग्रन्थाः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



अवंतारकनाथः (शिवानन्दः प्रथमः), ओजराजः, कल्लटः, जयरथगुरुः, जयरथपरमगुरुः, तपस्विराजः, दामोदरः, नाथपादाः, निष्क्रियानन्दनाथः, भूतिराजः, महावनमुनिः, महेश्वरानन्दः, रत्नदेवः, वामननाथः, सोमराज इत्येते च सन्ति क्रमसम्प्रदायस्य आचार्या अत्र स्मृताः ।

**त्रिक(प्रत्यभिज्ञा०)**—अनुप्रत्यभिज्ञा, तत्त्वविचारः, त्रिककुलम्, त्रिकरत्नकुलम्, त्रिकशास्त्रम्, त्रिकसारः, त्रिकहृदयम्, पदसंगतिः (शिवदृष्टिवृत्तिः), परमार्थसंग्रहः, पर्यन्तपञ्चाशिका, पूजनस्तोत्रम्, प्रबोधपञ्चदशिका, बहुरूपगर्भस्तोत्रम्, भोगमोक्षप्रदीपिका, मालिनीतन्त्रम्, मालिनीमतम्, मालिनीसारः, विमर्शदीपिका, विवेकाञ्जनम्, विंशतिकत्रिकम्, शिवसूत्रम्, श्रीकण्ठीसंहिता, षडर्धशास्त्रम्, सम्बन्धसिद्धिः, सारशास्त्रम्, सिद्धयोगीश्वरीमतम्, सिद्धातन्त्रम्, सिद्धामतम्, स्तोत्रावली (भट्टोत्पलस्य), स्वबोधोदयमञ्जरी, स्वात्मसम्बोध इत्येते ग्रन्थाः, त्रिविक्रमः, योगिनाथः, योगीश्वराचार्यः, श्रीकण्ठपाद इतीमे आचार्याश्च त्रिक(प्रत्यभिज्ञा)सम्प्रदायस्य सन्ति ।

**त्रिपुरा**— अशेषकुलवल्लरी, उत्तरषट्कम् (उत्तरपदम्), उदयाकरपद्धतिः, ऋजुविमर्शिनी, कामसिद्धिस्तोत्रम्, चन्द्रज्ञानविद्या (भैरवयामलम्), ज्ञानदीपविमर्शिनी, तत्त्वविमर्शिनी, त्रिपुरसुन्दरीदण्डकम्, देवीसंस्थानागमः, [1]नवनित्यातन्त्रम्, नवरत्नमालिका, नवशतीशास्त्रम्, पद्यवाहिनी, भैरवयामलम् (चन्द्रज्ञानविद्या), मातृकाहृदयम्, मानसोल्लासः, रससारसंग्रहः, लघुबृंहणी, श्रीपराक्रमः, संकेतपद्धतिः, सुभगोदयः, सुभगोदयव्याख्या, सौभाग्यकाण्डम्, सौभाग्य(सुभगो?सुधो)दयः, सौभाग्यहृदयस्तोत्रम्, स्वतन्त्रतन्त्रम् (कादिमतम्)—इत्येते सन्ति त्रिपुरासम्प्रदायग्रन्थाः । नित्यातन्त्रविद इति च त्रिपुरासम्प्रदायविद एवोच्यन्ते ।

**पाशुपत०**—अनुभवस्तोत्रम्, पञ्चार्थप्रमाणम्, प्रमाणस्तुतिरिति त्रयो ग्रन्थाः, आचार्यो विद्याधिपतिश्च पाशुपतागमप्रातिनिध्यमाचरन्ति ।

**भैरव०**—आनन्दभैरवः, आनन्दशासनम्, उच्छुष्मभैरवः, त्रिशिरोमतम्, पञ्चामृतम्, भैरवागमः, मन्त्रराजः, महास्वच्छन्दः, महास्वच्छन्दसंग्रहः, मन्त्रराजः, सर्वज्ञभैरवः, सर्वमङ्गलाशास्त्रम्, स्वच्छन्दः, स्वच्छन्दभैरवः, स्वच्छन्दसंग्रह इत्येते सन्ति भैरवसम्प्रदायग्रन्थास्तदाचार्याश्च भैरवनामान्ताश्चत्वारः ।

**वैष्णव०**—कालपरा, चिच्छक्तिसंस्तुतिः, जयाख्यसंहिता, जाबालिसूत्राणि, ज्ञानसम्बोधः, धातुसमीक्षा, नारदसंग्रहः, पञ्चरात्रश्रुतिः, पञ्चरात्रोपनिषदः, बौ(द्धा ?-धा)यनसंहिता, मायावामनसंहिता, मायावैभवागमः, लक्ष्मीसंहिता, विश्वसंहिता, विष्णुयामलम्, वैहायसीसंहिता, षड्धातुसमीक्षा, षाड्गुण्यविवेकः, सङ्कर्षणसूत्राणि, सात्वतसंहिता—इत्येते ग्रन्थाः प्रायः सर्वे स्पन्दप्रदीपिकायामुत्पलवैष्णवकृतायामुद्धृताः पाञ्चरात्राख्यस्य वैष्णवागमस्य प्रतीयन्ते ।

---

१. षोडशनित्यावन्नवनित्यानामपि सम्प्रदायः कश्चन आसीदिति तदनेन नाम्ना प्रतीयते ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



शं०—अचिन्त्यागमः, अध्वसिद्धिः, अनन्तविजयागमः, आचारप्रकरणम् (देवीकालोत्तरस्य), कचभार्गवम् (कवचभार्गवम्), कर्मकाण्डक्रमावली, कालोत्तरम्, क्रियाकरणमण्डनम्, क्रियाकालगुणोत्तरम्, चन्द्रगर्भः चन्द्रज्ञानम्, जयद्रथाधिकारः, ज्ञानतिलकम्, ज्ञानोत्तरम्, दीक्षोत्तरागमः, देवीकालोत्तरम्, देव्यामतसूत्रम्, नरेश्वर-विवेकः, नन्दिशिखातन्त्रम्, निश्वासकारिका, निश्वासोत्तरम्, नैश्वासतन्त्रम्, पराख्य-संहिता, परातन्त्रम्, प्रयोगमञ्जरी, बृंहणी, भार्गवोत्तरम्, भूतशुद्धितन्त्रम्, मतङ्गटीका, मतङ्गसूत्रम्, मन्त्रवार्त्तिकम्, मन्त्रवार्त्तिकटीका, मयसंग्रहः, मलयमतम्, मुकुटतन्त्रम्, मुकुटसंहिता, मुकुटोत्तरम्, मूलतन्त्रम्, मृगेन्द्रोत्तरम्, योगपादः (मतङ्गस्य), रत्नत्रयम्, रुद्ररहस्यम्, रौरववार्त्तिकम्, रौरवसंग्रहः, रौरवागमवृत्तिः, ललिता, वरुणपद्धतिः, वातुलोत्तरम्, विश्वसारोत्तरसूत्रम्, व्यासाक्षिणी, शिवज्ञानबोधसंग्रहः, शिवतत्त्वविलासः, शिवतनुशास्त्रम्, शैवतन्त्रम्, षट्सहस्रिका, सर्वज्ञानोत्तरम्, सर्वज्ञानोत्तरवृत्तिः, सर्व-स्रोतःसंग्रहसारः, सर्वागमप्रामाण्यम्, सारसंग्रहः, सिद्धान्तम्, सिद्धान्तशास्त्रम्, सिद्धान्त-दीपिका, सिद्धान्तरहस्यसारः, सिद्धान्तसारावलिः, सिद्धान्तहृदयम्, सिद्धान्तागमः, स्तोत्रावली, स्वायम्भुववृत्तिः, स्वायम्भुवशास्त्रटीका—इत्येते सिद्धान्तशैवागमस्य ग्रन्थाः सन्ति ।

अमी च सन्ति सिद्धान्तशैवाचार्याः—अनिरुद्धः, अवधूतसिद्धः, ईशानशिवः, खेटकनन्दनः, धर्मशिवः, बृहस्पतिपादः, रामकण्ठः, लीलाकारः, वार्त्तिककारः, वृत्तिकारः, सद्योज्योतिः, सिद्धगुरुः, सिद्धपाद इति ।

लिङ्गोद्भवम्, वायवीयसंहिता, शिवधर्मः, शिवधर्मोत्तरम्, सौरसंहिता—इत्येता-न्युपपुराणानि शैवसम्प्रदायमनुसरन्ति, मोक्षोपायश्च योगवासिष्ठरामायणस्यैवापरं नाम । शैवसम्प्रदायग्रन्थानां बाहुल्यम् "प्रायश्च सिद्धान्तप्रियो लोकः" (स्वच्छ० २।३५) इति क्षेमराजोक्ति सत्यामेव प्रमाणयति ।

**उत्तरतन्त्राणि**—कालोत्तर-ज्ञानोत्तर-दीक्षोत्तर-देवीकालोत्तर-निर्वाणयोगोत्तर-निश्वासोत्तर-भार्गवोत्तर-मतोत्तर-मुकुटोत्तर-मृगेन्द्रोत्तर-वातुलोत्तर-विश्वसारोत्तर-शिव-धर्मोत्तर-सर्वज्ञानोत्तराख्यानि सन्ति उत्तरपदान्तानि तन्त्राणि, उपपुराणानि, आगमा वा ।

**कल्पाः**—कालिकाकल्पः, देवीमन्त्रकल्पः, भुवनेश्वरीकल्प इति त्रयोऽपीमे कल्पग्रन्थाः शाक्तं सम्प्रदायमनुसरन्ति ।

**कुल कौल च**—कालीकुलम्, त्रिककुलम्, त्रिकरत्नकुलम्, निशाकुलम्, भैरव-कुलम्, माधवकुलम्, मीनकुलम्, रात्रिकुलम्, लघुचर्चाकुलम्, श्रीकुलम्—इत्येते कुल-शब्दान्ता ग्रन्थाः; ऊर्मिकौलम्, प्रभाकौलम्, योगिनीकौलम्, लक्ष्मीकौलार्णव इति च कौलशब्दान्ता अत्र दृश्यन्ते । अपि च, अनुत्तरभट्टारकः, अनुत्तराष्टकम्, आद्यवर्ण-त्रिशिका, कुलकमलम्, कुलकालीविधिः, कुलक्रमोदयः, कुलक्रीडावतारः, कुलगुह्वरः, कुलचूडामणिः, कुलपञ्चाशिका, कुलमूलावतारः, कुलयुक्तिः, कुलरत्नमाला, कुल-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सारः, कुलाम्नायः, कुलार्णवः, गमशास्त्रम्, ज्ञानामृतरसायनम्, तत्त्वरक्षाविधानम्, तिमिरोद्घाटः, निर्मर्यादशास्त्रम्, निशाचारः, निशाटनम्, परापञ्चाशिका, पूर्वतन्त्रम्, भर्गशिखा, भूतक्षोभः, योगसंचरः(संचारः), रहस्यविधिः, रहस्यसिद्धिसोपानम्, लक्षणसारः, लाद्यादिशास्त्रम्, वाद्यतन्त्रम्, श्रीपञ्चाशिका, श्रीमाला, सर्ववीरः, सर्वाचार-हृदयम्—इत्येते ग्रन्थाः, पद्महस्तभट्टारकः, वासुदेवः, सिद्धनाथपादश्चेत्याचार्याश्च कुलं कौलं च सम्प्रदायमनुवर्तन्ते ।

**तन्त्राणि**—उद्धारोर्ध्व-कुब्जिका-गुप्त-गुह्ययोगिनी-नन्दिशिखा - नवनित्या-नित्या-नैश्वास-परा-भूतशुद्धि-मलय-मालिनी-मूल-वाजसनेय-वाद्य-शैव-सिद्धा-स्वतन्त्र-हंसाख्यानि तन्त्रपदान्तानि शास्त्राण्यत्र संगृहीतानि वर्तन्ते ।

**मततन्त्राणि**—कालिका-कुब्जिका-चिल्लाचक्रेश्वरी-त्रिशिरोमत - देव्यामत-परा-मत-पिचुमत-मालिनो-शची-सिद्धयोगीश्वरी-सिद्धामताख्यानि मतपदान्तानि शास्त्राण्यत्र द्रष्टव्यानि । अपि च, मतदेवः, मतशास्त्रम्, मतोत्तरम्, शम्भ्वैक्यदीपिका, शाम्भव-दीपिका—इत्येते ग्रन्था अपि मतसम्प्रदायस्यैव प्रतीयन्ते ।

**यामलानि**—देवीयामलम्, ब्रह्मयामलम्, भैरवयामलम्, विष्णुयामलम्, वीरया-मलम्, सङ्कर्षिणीयामलम्, स्कन्दयामलम्—इत्येतानि यामलतन्त्राण्यत्र स्मृतानि सन्ति । रुद्रयामलसारस्तु विज्ञानभैरवस्यैवापरं नाम ।

**शास्त्राणि**—आनन्द-गम-त्रिक-नवशती-निर्मर्याद-पिचु-मत-रहस्य-लाद्यादि-वीरा-वली-शिवतनु-सर्वमङ्गला-सार-सिद्धान्ताख्याः शास्त्रपदान्ता ग्रन्था अत्र स्मर्यन्ते ।

**संहिता**—कालपरा-कालावली-जयाख्या-पराख्या-बौद्धायन - मायावामन - मुकुट-लक्ष्मी-वायवीय-विश्व-वैहायसी-श्रीकण्ठी-सात्वत-सौरसंहिता अत्र द्रष्टव्याः ।

**सूत्राणि**—क्रम-चरण-यज्ञ-राजवैभव-शिव-सङ्कर्षण-सारस्वतसंग्रहसूत्राणां वचना-न्यत्रोपलभ्येरन् ।

**स्तोत्राणि**—अनुभव-कक्ष्या-कामसिद्धि-क्रमस्तुति-क्रमस्तोत्र-ज्ञानगर्भ-तत्त्वगर्भ-नवरत्नमाला-नायक-परा-पूजन-प्रमाणस्तुति-बहुरूपगर्भ-मनोनुशासन-रहस्यविधि- रहस्य-संवित्-सौभाग्यहृदय-स्तोत्रभट्टारकाख्यानि स्तोत्रग्रन्थवचनान्यप्यत्र सबहुमानं संगृहीतानि ।

## आचार्याः

**नाथान्ता**—अवतारकनाथः, निष्क्रियानन्दनाथः, योगिनाथः, वामननाथः, सिद्धनाथ इत्येते ।

**पादान्ताः**—अनन्तपादः, अवधूतसिद्धपादः, नाथपादः, प्रशस्तिभूतिपादः, बृहस्पतिपादः, सिद्धपाद इत्येते ।

**भट्टारकान्ताः**—अनन्तशक्ति-अनुत्तर-पद्महस्त-सर्ववीर-स्तोत्रभट्टारकाः । भट्टा-रकशब्दोऽत्र आदरवाची । अत्र अनुत्तर-स्तोत्रभट्टारकौ ग्रन्थनामनी, अन्ये च ग्रन्थ-काराः सन्ति ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



राजान्ताः—ओजराजः, तपस्विराजः, भूतिराजः, सोमराज इत्येते ।
शिवान्तौ—ईशानशिवः, धर्मशिवश्च ।

## दर्शनयोगग्रन्थाः

अद्वयसम्पत्तिवार्त्तिकम्, अद्वयोल्लासः, अभेदकारिका, अर्चनात्रिंशिका, आगमरहस्यम्, आज्ञावतारः, आत्मसम्बोधः, आत्मसप्ततिः, आलोकमाला, इष्टोपदेशः, उपायविंशतिः, कक्ष्यास्तोत्रम्, गीतानिष्यन्दः, ज्ञानसारः, ज्ञानेन्दुकौमुदी (विज्ञानेन्दुकौमुदी), तत्त्वयुक्तिः, तन्त्रसमुच्चयः, नायकस्तोत्रम्, प्रज्ञालङ्कारः, रहस्यस्तोत्रम्, विषयपञ्जिका, विवेकमार्तण्डः, संवित्प्रकरणम्, संवित्प्रकाशः, सत्कार्यसिद्धिः, समाधिपञ्चदशी, सारस्वतसंग्रहसूत्रम्, सिद्धोक्तम्, सुबोधमञ्जरी, सोमसिद्धान्तः, स्वस्वभावसम्बोधनम्—इत्येतेऽज्ञातसम्प्रदाया दर्शनयोगग्रन्थाः, अनन्तपादः, अनन्तशक्तिभट्टारकः, आर्याकारः, देवलाचार्यः, नागार्जुनः, प्रशस्तिभूतिपादः, महाबलः, शम्भुभट्टारक इत्येते आचार्याश्च सन्ति ।

केषाञ्चन आगमतन्त्रवचनानां पश्चिम-यज्ञसूत्र-हंसनिर्णय-हंसभेदानां पुष्पदन्तस्य च सम्प्रदायो न ज्ञायते ।

एवमत्र आधारग्रन्थानामुद्धृतग्रन्थानां च विश्लेषणमक्रियत । अथाधुना ग्रन्थानां ग्रन्थकाराणां च समुद्धृतानां प्रत्येकं विभज्य परिचयः समुपस्थाप्यते ।

## ग्रन्थग्रन्थकारपरिचयः

१. **अघोरेशतन्त्रम्**—इह प्रथमद्वितीययोरुभयोरपि भागयोर्यद्यपि तन्त्रमेतन्नोद्धृतम्, तथापि—"उक्तं तन्त्रेऽप्यघोरेशे स्वच्छन्दे विभुना तथा" (तन्त्रा० २७।५८) इत्यभिनवगुप्तेन स्वच्छन्दतन्त्रमेवाघोरेशतन्त्रनाम्ना प्रख्यापितम् । शिवस्याघोराख्यदक्षिणवक्त्रनिःसृतेषु हि चतुष्षष्टिभैरवागमेषु श्रीकण्ठीसंहितापठितेषु प्रथममेतदिति तस्याघोरेशत्वोक्तिः समुचितैव । अत एव नेत्रतन्त्रं मृत्युञ्जयभट्टारकापरनामधेयं यथा [1]अमृतेशनाम्ना प्रसिद्धम्, तथैव स्वच्छन्दतन्त्रमेतदघोरेशतन्त्रनाम्नाऽपि प्रसिद्धं स्यात् । क्षेमराजकृतोद्योतव्याख्यायुते स्वच्छन्दतन्त्रे काश्मीरग्रन्थावल्यां मुद्रिते तन्त्रालोकस्मृतं प्रकरणमेतदन्वेषणीयम् । यद्यपि भैरवागमान्तर्गतमेतत् तन्त्रम्, तथापि भुल्लकेनास्य[2]

---

१. नेपालराजकीयवीरपुस्तकालयबृहत्सूचीपत्रस्य चतुर्थभागीये प्रथमे खण्डे पृ० ५ द्रष्टव्यम् ।

२. "गतानुगतिकप्रोक्तभेदव्याख्यातमोऽपनुत् । पराभेदरसोल्लासी स्वच्छन्दोद्योत उत्थितः ॥" इति प्रथमपटलसमाप्तिश्लोके, "नाम्नैव भेददृष्टिर्विधुता येनास्वतन्त्रतातत्त्वा । श्रीमत्स्वतन्त्रतन्त्रं भेदव्याख्यां न तत् सहते ॥" इति ग्रन्थसमाप्तिश्लोके च सिद्धान्तागमीयां भेदव्याख्यां स्वतन्त्रतन्त्रस्य प्रत्याख्याति क्षेमराजः । "ये सिद्धान्तदर्शनभ्रान्ताः" (२।३५), "ये तु जात्युद्धारपरभैरवरूपत्वोन्मीलकेऽप्यस्मिन् भैरवनये सुराशब्दं जलवाचिनमपि व्याचक्षते" (२।१३६), "ये····व्याचक्षते, एवंप्रायं व्याख्यानं बहु असमञ्जसं टीकाकृतामस्ति" (४।२४४), "केचिदत्र····

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सिद्धान्तागमपरकं व्याख्यानं कृतम्। प्रायेण हि सिद्धान्तप्रियो लोकस्तदाऽऽसीत्[1]। काशीहिन्दूविश्वविद्यालयमातृका सी ९१ संख्याकाऽत्र परीक्षणीया।

२. (अ)चिन्त्यागमः—अस्य ग्रन्थस्य श०र०सं० ५३, ५६ पृष्ठयोरचिन्त्य इति, ७६,८५ पृष्ठयोश्च चिन्त्य इति नाम दृश्यते। क०सू० १४७१ संख्यायामचिन्त्याह्वयागमनाम्ना, १५१० संख्यायां च चिन्त्यागमनाम्ना सोऽयं स्मृतः। एवमेव न्यू० I, पृ० ७१ इत्यत्र, VII, पृ०६३ इत्यत्र चाभ्यामेव नामभ्यां सोऽयमुद्धृतः। वस्तुतस्तु दशविधशिवागमेषु चिन्त्यागमनाम्नैव सोऽयं ग्रन्थः स्मर्यत इति विभावनीयम्। मातृकाऽपि चास्य समुपलभ्यते। ता०सा०, पृ० ७-८, रौरवागमद्वितीयभागे, पृ० २२५ प्राप्तमातृकाविवरणं चात्र द्रष्टव्यम्। एवं च सिद्धान्तशैवानामयमागमग्रन्थो दशविधशिवागमेषु तृतीय इति ज्ञेयम्। रौरवागमद्वितीयभागे (पृ० २२५), अजितागमद्वितीयभागे (पृ० २०३) चाचिन्त्यविश्वसादाख्यग्रन्थस्य मातृकाया निर्देशो द्रष्टव्यः। अचिन्त्यविश्वयोश्चिन्त्यविश्वयोर्वा शतरत्नसंग्रहे उद्धरणद्वयमेतदधिकं दृश्यते—

[2]महार्थसंहारकाले मायाऽऽत्मानश्च सर्वशः।
शिवश्चाशुद्धमायाभिस्तिष्ठन्त्यन्यश्च लीयते॥
आत्मनामुपभोगार्थमेते तिष्ठन्ति सर्वतः।
[3]दीक्षयित्वा विधानेन षट्त्रिंशत्तत्त्वकोपरि।
निष्कले निर्मले तत्त्वे योजयत्येव निश्चयः॥ इति।

३. अद्वयसम्पत्तिवार्त्तिकम् (१४२ द्वयसम्पत्तिः)—शिवोपाध्यायेन वि०भै०वि०, पृ० ७८ इत्यत्र द्वयसम्पत्तिनाम्ना, पृ० ७९ इत्यत्र च अद्वयसम्पत्तिनाम्ना ग्रन्थोऽयं स्मृतः। अभिनवगुप्तेन प० त्रि०, पृ० १९८ इत्यत्र अद्वयसम्पत्तिवार्त्तिकनाम्ना एष एव स्मर्यते। न्यू०I. पृ० १२२ इत्यत्राद्वयसम्पत्तिरद्वयसम्पत्तिवार्त्तिकमिति च नामनी दृश्येते। वस्तुतोऽस्य अद्वयसम्पत्तिरित्येव नाम, अद्वयप्रक्रियाया एवात्र प्रतिपादनात्। द्वयसम्पत्तिरिति त्वनवधानप्रयुक्तं नाम प्रतिभाति। विज्ञानभैरवः, सिद्धादिष्टः सिद्धान्तसंग्रहश्चात्र समुल्लिखितौ स्तः। सोऽयं क्रमप्रत्यभिज्ञादर्शनयोरन्यतरस्य ग्रन्थः स्यात्। वामननाथ-

---

अन्यैस्तु.... अपरैस्तु.... तत्सर्वमुपक्रमोपसंहारानानुरूपत्वादुपेक्ष्यम्। एवं च प्रायशो ग्रन्थान्तरप्रक्षेपो ग्रन्थविपर्यासः पाठविपर्यासश्चास्य ग्रन्थस्य दुर्मेधोभिः परिकल्पितः शतशाखो दृश्यते। सोऽस्माभिः पुरातनपुस्तकान्वेषणतो यावद्गति अपसारितः" (१४।१९) इत्यत्र च विनैव नामनिर्देशं स्वतन्त्रतन्त्रव्याख्यातॄन् स समालोचयति। १०।६१७, ६६०, ११३१; ११।२२८, २५७ इत्यत्र च नामनिर्देशपुरस्सरं भुल्लकमतं तेन प्रत्याख्यायते।

1. "प्रायश्च सिद्धान्तप्रियो लोकः सिद्धान्तक्रममाश्रितः" (स्वच्छन्दो० २।२५) इति क्षेमराजवचनमत्र प्रमाणम्।
2. श० र० सं०, पृ० २८
3. श० र० सं०, पृ० ६९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



(२८८)विवरणमप्यत्र द्रष्टव्यम्। हर्षदत्तसूनुना ह्रस्वनाथेनायमद्वयसम्पत्तिनामा ग्रन्थो रचित इति न्यू० I, पृ० १२२ इत्यत्र वर्ण्यते।

४. **अद्वयोल्लासः**—महेश्वरानन्देन परिमले बन्धमोक्षस्वरूपविवेचनावसरे ग्रन्थस्यास्य श्लोक एकः समुद्धृत इत्यतोऽधिकं न किमपि विवरणं कुत्राप्यस्योपलभ्यते। सोऽयं क्रमप्रत्यभिज्ञादर्शनयोरन्यतरस्य ग्रन्थः प्रतिभाति।

५. **अध्वसिद्धिः**—तत्त्वप्रकाशव्याख्याकारेण कुमारेण शिवतत्त्वस्वरूपव्याख्यान-प्रसङ्गे ग्रन्थस्यास्य श्लोक एकः समुद्धृत इत्यतोऽधिकमस्य विषये किमपि विवरणं कुत्रापि नोपलभ्यते। सोऽयं सिद्धान्तशैवानां ग्रन्थ इति मन्तव्यम्।

६. **अनन्तपादः, अनन्तशक्तिभट्टारकश्च**—अभिनवगुप्तेन कल्पना(विकल्प)-स्वरूपनिरूपणप्रसङ्गे ग्रन्थकारस्यास्य वाक्यमेकं समुद्धृतम्। कोऽयं ग्रन्थकारः? कश्चास्य ग्रन्थ इति तु किमपि वक्तुं साम्प्रतं न पारयामः। "अन्ते पुराणतां दृष्ट्वा प्रतिक्षणं नवत्वहानिरनुमीयते" इत्येवं क्षणभङ्गवादं समर्थयन्नेष कश्चन बौद्ध आचार्यः स्यात्। अभिनवगुप्ततः प्राचीनोऽयमाचार्योऽर्वाचीनादनन्तशक्तिपादतो वातूलनाथसूत्र-वृत्तिकारात् सर्वथा भिन्नः। अनन्तशक्तिभट्टारकश्च ज्ञानदीपविमर्शिन्यां स्मृत आभ्यां भिन्न एव स्यात्[1]। अभिनवगुप्तो महाभाष्यकारं पतञ्जलिमाधारकारिका(परमार्थसार)-कारं चानन्तनाम्ना स्मरति। न्यू० I, पृ० १८३ इत्यत्रानन्तशक्तिपादस्य बहुरूपगर्भ-स्तोत्रव्याख्यायाः, वातूलनाथसूत्रवृत्तेश्च मातृका विवृताः। तत्कृतस्य श्रीविद्यापद्धति-ग्रन्थस्य बी० २३९९, बी० ३३८९ संख्याके मातृके हि० वि०, पृ० ७७२ इत्यत्र विवृते। नि० उ०, पृ० ३१ इत्यपि द्रष्टव्यम्। डॉ० रस्तोगीग्रन्थोऽपि (पृ० २२४-२२५) द्रष्टव्यः।

७. **अनन्तविजयागमः**—"अनन्तविजयाख्यात् सिद्धान्तशास्त्रात्" (तन्त्रा० वि०, भा०, आ० ४, पृ० २८०) इति जयरथप्रामाण्येन सिद्धान्तशास्त्रस्य ग्रन्थोऽयम्। रुद्रा-गमान्तर्गतविमलागमस्य प्रथमोपागमत्वेन अनन्तागमः स्मर्यते। अनन्तविजयागमश्च प्रतिष्ठालक्षणसारसमुच्चये (२।१२४) वामतन्त्रेषु परिगण्यते। "एवमपेक्षायां सत्यां समानादसमानाद्वा शास्त्रान्तरात् तावदपेक्षणीयं यावदपेक्षाया निवृत्तिः स्यात्" (पृ० २८१) इत्यत्रैव वदन् जयरथः—"अनुक्तमन्यतो ग्राह्यम्" इति न्यायं स्मारयति।

८. **अनन्तशक्तिभट्टारकः**—अनन्तपादविवरणं (६) पश्यतु।

९. **अनिरुद्धः**—"मतङ्गे गुरवो मम" (९।२६१) इत्यत्र "मतङ्गशास्त्रव्याख्यातारः श्रीमदनिरुद्धप्रभृतय इत्यर्थः" (तन्त्रा० वि०, भा० ६, आ० ९, पृ० २१०), "श्रीमताप्य-निरुद्धेन···व्याचक्षाणेन मातङ्गे" (तन्त्रा० १३।२९३-२९४) इत्याभ्यामुद्धरणाभ्या-मनिरुद्धोऽयमभिनवगुप्तस्य गुरुर्मतङ्गशास्त्रव्याख्याता चेति ज्ञायते। एवं चायं कश्चनाभि-

1. न्यू० VII, पृ० ३२५ इत्यनुसारं १३८०-९४ ई० लिखिता ज्ञानदीपविमर्शिनी-मातृका समुपलभ्यत इति तत्रोद्धृतोऽनन्तशक्तिभट्टारको नूनं ततः प्राचीनः। अनन्त-शक्तिपादस्य च समयो डॉ० रस्तोगीग्रन्थे १७००-१७५० ई० निर्धार्यते। एतेनानन्त-शक्तिभट्टारकस्यानन्तशक्तिपादस्य च पार्थक्यं निश्चितं भवति।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



नवगुप्तपूर्ववर्ती सिद्धान्तशैवागमव्याख्याता आचार्यः। व्याख्यानिगुरुणा सोमानन्दपूर्वंभवेनापि मतङ्गागमो व्याख्यातः। तेनागमस्यास्य वैशिष्ट्यं प्रतीयते। रामकण्ठकृत-मतङ्गवृत्तौ विद्यापादे प्राचीनाचार्यद्वयस्योक्तस्य कुत्रापि चर्चा न दृश्यते नामोल्लेखपुरस्सरम्। किन्तु—"कैश्चिद्वेदेऽनुनीतः कुलदृशि तु परैर्न्यायदृष्टावथान्यैस्त्यक्त्वा सिद्धान्त-सिद्धं गुरुवरगदितं वर्त्म नीतः कुमार्गे" इति ग्रन्थारम्भचतुर्थश्लोके तेन प्राचीनं टीकात्रयं सूच्यते।

**१०. अनुत्तरभट्टारकः**—"उक्तं च भैरवस्रोतसि अनुत्तरभट्टारके" इत्युक्त्वा शिवोपाध्यायेन ग्रन्थस्यास्य केचन श्लोकाः समुद्धृताः। अनुत्तरतन्त्रनाम्नः कस्यचन ग्रन्थस्य मातृका न्यू० I, पृ० २०० इत्यत्रोल्लिखिता वर्तते। तत्रैते श्लोकाः सन्ति न वेति परीक्षणीयम्। ता० सा०, पृ० ११ इत्यत्र "अनुत्तरस्तोत्रमस्य नामान्तरम्। तच्च विद्याधिपतिकृतम्" इति विवरणं दृश्यते। तन्न, महार्थमञ्जरी-तन्त्रसारप्रभृतिषु विद्याधिपतेरनुभवस्तोत्रस्यैव स्मरणात्। एतच्चाग्रे भविष्यति। अनुत्तरत्रिकपदेन तन्त्रालोके तद्विवेके (१।१।४९, ७।११।७०) च [1]सिद्धा-[2]नामक-मालिन्याख्यं तन्त्रत्रयं निर्दिश्यते। अनुत्तरत्रिंशिकापदेन च परात्रिंशिका परामृश्यते। अनुत्तरभट्टारकश्च सर्वैरेतैर्भिन्न एवेति मन्तव्यम्। अभिनवगुप्तकृतस्य निरुत्तरभट्टारकस्य शारदालिपिमयी मातृका सी ४७७ संख्याका हि० वि०, पृ० ७५० इत्यत्र विवृता द्रष्टव्या।

**११. अनुत्तराष्टकम् (मुद्रितम्)**—ग्रन्थ एष 'अनुत्तराष्टिका'नाम्ना 'अभिनवगुप्त०' इत्यस्य ग्रन्थस्य द्वितीयसंस्करणे ९४३-९४४ पृष्ठयोः परिशिष्टरूपेण मुद्रितो वर्तते। तत्रत्यस्य द्वितीयस्य श्लोकस्य कियानंशोऽत्र प्रथमे भागे उक्तशीर्षकेण सह समुद्धृतः।

**१२. अनुप्रत्यभिज्ञा**—जयरथेन "यदुक्तं श्रीप्रत्यभिज्ञाकृता" इत्युक्त्वा "अनुप्रत्यभिज्ञाकृताऽप्यनेनैवाभिप्रायेण" इति प्रतीकमुखेन अनुप्रत्यभिज्ञाश्लोकः समुद्धृतः। डॉ० रस्तोगीमहोदयोऽनुमिनोति यदेष अनुप्रत्यभिज्ञाकारोऽभिनवगुप्त एवेति (पृ० १६०)। सोऽयमनुप्रत्यभिज्ञाशब्दः स्वतन्त्रस्य कस्यचन ग्रन्थस्य नाम्नि प्रवर्ततेऽथवा विशेषण-मुखेनास्य प्रवृत्तिरित्यधुनाऽनुसन्धानसापेक्षं वर्तते। प्रत्यभिज्ञाकार उत्पलः, तदनु तस्य प्रत्यभिज्ञादर्शनस्य व्याख्याताऽभिनवगुप्तोऽनुप्रत्यभिज्ञाकार इति वक्तुं शक्यते। किन्त्वेवं व्याख्यानेऽस्य श्लोकस्याभिनवगुप्तकृतिषूपलब्धिरावश्यकी।

---

१. सिद्धापदेन सिद्धयोगीश्वरीमतं परामृश्यते। अस्य विवरणमत्रैव (३५६) द्रष्टव्यम्। समुपलब्धासु मातृकास्वत्र संगृहीतानि वचनान्युपलभ्यन्ते चेदस्य महत्त्वपूर्णस्य ग्रन्थस्य परिष्कृतं संस्करणमतीवावश्यकम्।

२. अत्र विज्ञानभैरवस्थाऽस्मदीया टिप्पणी (पृ० १, टि० I) द्रष्टव्या। तन्त्रालोकविवेक-धृतश्रीकण्ठीपरिगणितानां चतुष्षष्टितन्त्राणां नामावली तत्र अपूर्णा दृश्यते, वर्तते चात्र नामकनाम्नि सन्देहः। तेन समुपलब्धमातृकासाहाय्येन सविवेकस्य तन्त्रालोकस्य संशोधनमपेक्षितम्।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



**१३. अनुभवस्तोत्रम्**—"तदर्थमेव विद्याधिपतेरनुभवस्तोत्रे महान् संरम्भः" (त० सा०, पृ० ३१) इति, "ऊचिवानत एव श्रीविद्याधिपतिरादरात्" (तन्त्रा० ११२०१) इति, "यदुक्तं श्रीविद्याधिपतिना" (स्तव० योग०, पृ० ५४) इति, "इति श्रीमद्विद्याधिपतिना" (ई० प्र० वि०, भा० १, पृ० २०) इति च प्रमाणैः स्तोत्रमेतद्विद्याधिपतेः कृतिरिति साधु सिद्ध्यति। ई० प्र० वि० वि० (भा० ३, पृ० २६१) इत्यत्र चास्य कर्ता विद्याधिपतिरेव विद्यागुरुनाम्ना स्मृतः। विद्याधिपति(२९४)विवरणमप्यत्र द्रष्टव्यम्। अस्य स्तोत्रस्यान्यदपि श्लोकत्रयं रामकण्ठकृतमतङ्गपारमेश्वरसार्धत्रिशतिकालोत्तरवृत्त्योः (पृ० ६४, २२४; ३८) समुपलभ्यते।

**१४. अभेदार्थकारिका**—"प्रोक्तं चैतत् सिद्धनाथेन अभेदार्थकारिकासु" (पृ० ८५) इति वैष्णवोत्पलभट्टप्रामाण्येन कश्चन सिद्धनाथोऽस्य ग्रन्थस्य कर्ता प्रतीयते। ता० सा०, पृ० १६ इत्यत्र अभेदकारिका अभेदार्थकारिका वा एकस्यैव ग्रन्थस्य नाम निर्दिश्यते। अभेदार्थकारिकाकारः स्तोत्रकारश्च सिद्धिनाथः सिद्धनाथो वाऽभिन्न इति डॉ० रस्तोगी (पृ० १४२) वदति। ३५४ सिद्धनाथपादविवरणमपि द्रष्टव्यम्।

**१५. अर्चनात्रिंशिका (मुद्रिता)**—नागविपश्चिन्नाम्नः कस्यचनाचार्यस्य कृतेरस्या मातृकाः साम्प्रतं वाराणसेयसरस्वतीभवन-लक्ष्मणपुरीयाखिलभारतीयसंस्कृतपरिषत्-जोधपुरीयराजस्थानपुरातत्त्वमन्दिर-काशीहिन्दूविश्वविद्यालयीयसंग्रहेषु समुपलभ्यन्ते। ग्रन्थ एष साम्प्रतं "शारदापीठ रिसर्च सिरीज" (भा० १, अ० ३, सन् १९६०) इत्यत्र नागार्जुनकृतित्वेन परमार्चनत्रिंशिकानाम्ना तस्यैव कृतिनश्चित्तसन्तोषत्रिंशिकया सह मुद्रितः समुपलभ्यते। दुर्वासःकृताया अर्चनात्रिंशिकाया मातृका 'त्रिवेन्द्रम् २५२३ बी' इति संकेतेन न्यू० I, पृ० ३७९ इत्यत्र विवृता नागविपश्चितः कृतेर्भिन्नैव स्यात्। अत्र ३०२ वीरनागविवरणमपि द्रष्टव्यम्।

**१६. अवतारकनाथः (शिवानन्दनाथः)**—क्रमदर्शनावतारकस्यास्य शिवानन्दनाथस्य विस्तृतं विवरणं डॉ० रस्तोगीग्रन्थे (पृ० ८३, १०४-१०८) द्रष्टव्यम्।

**१७. अवधूतसिद्धपादः**—अवधूतसिद्धपादकृतस्य भक्तिस्तोत्रस्य सर्वाङ्गपूर्णं संस्करणं गुर्वाज्ञामुपलभ्यास्माभिः कृतम्। ग्रन्थ एष साम्प्रतं लक्ष्मणपुरीयाखिलभारतीयसंस्कृतपरिषदा १९७८ ई० वर्षे तन्नाम्ना प्रकाशितः समुपलभ्यते। तत्रत्यायां प्रस्तावनायां ग्रन्थस्य ग्रन्थकारस्य च विशिष्टः परिचयो द्रष्टव्यः। ३०७ व्यासाक्षिणीविवरणमपि द्रष्टव्यम्।

**१८. अशेषकुलवल्लरी**—गणनाथभट्टकृतेरशेषकुलवल्लरीग्रन्थस्य मातृका वत्सराजकृतवामकेश्वरीस्तुतिसहिता वीरपुस्तकालयीयनूतनतन्त्रसूच्यां प्रथमे भागे (पृ० ७) विवृता द्रष्टव्या, तुलनीया चात्रत्येन श्लोकेन। न्यू० I, पृ० ४३२ इत्यपि द्रष्टव्यम्।

**१९. आगमः**—आगमनाम्नाऽत्र प्रथमे भागे संगृहीतं प्रथमं वचनं शिवसूत्रविमर्शिन्यामन्यानि च चत्वारि तन्त्रालोकविवेके समुद्धृतानि सन्ति। शिवसूत्रविमर्शिनीस्थं वचनं कस्यागमस्येति न निर्णेतुं शक्यते। तन्त्रालोकविवेकस्थं प्रथमं वचनं त्रिपुरागम-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



संबद्धं क्रमागमेनापि योजयितुं शक्यते। अन्यानि वचनानि स्पष्टतया क्रमागमसंबद्धानि सन्ति। इमे श्लोकाः प्रत्यभिज्ञादिमतप्रतिपादकेषु ग्रन्थेष्वन्वेषणमपेक्षन्ते।

२०. **आगमरहस्यम्**—"आगमरहस्यस्तोत्रे"[1] (स्प० प्र०, पृ० ८३) इति वचनेन स्तोत्रग्रन्थोऽयं प्रतीयते। एष च छन्दोभेदाद् रहस्यस्तोत्रेणात्रैवोद्धृतेन (२६४) भिन्न एव मन्तव्यः। न्यू० II, पृ० १४ इत्यत्र विवृता स्पन्दप्रदीपिकाभाण्डारकरमातृका परीक्षणीया। वसन्ततिलकाच्छन्दोनिबद्धमवधूतसिद्धविरचितभक्तिस्तोत्रमत्रत्यैः श्लोकैस्तुलनीयम्।

२१. **आचारप्रकरणम् (मुद्रितम्)**—अत्रत्यः श्लोकः पाठान्तरेण सह वाराणस्यां योगतन्त्रग्रन्थमालायां प्रकाशितस्य तन्त्रसंग्रहस्य द्वितीये भागे मुद्रिते देवीकालोत्तरागमे (पृ० ३३९) दृश्यते। "तत्रैवाचारप्रकरणे" (पृ० ८६) इति शतरत्नसंग्रहे 'तत्रैव' इति पदेन प्रसङ्गवशाद् देवीकालोत्तरागमस्यैव ग्रहणं कर्तव्यम्। एवं च नैतद् ग्रन्थान्तरम्, अपि तु मुद्रितस्य देवीकालोत्तरागमस्य आचारप्रतिपादकं प्रकरणमिति ज्ञेयम्।

२२. **आज्ञावतारः**—नित्याषोडशिकार्णवीय उपोद्घातो (पृ० ३१) द्रष्टव्यः। भास्कररायकृतललितासहस्रनामभाष्यतो (पृ० ८२) ज्ञायते यत् "इच्छामात्रं प्रभोः सृष्टिः" इति वचनमपि तत्रत्यमेवेति। माण्डूक्यकारिकायास्तु गौडपादकृतायाः (१।८) वचनमेतत् प्रसिद्धम्।

२३. **आत्मसप्तति:**[2]—न्यू० II, पृ० ५८ इत्यत्र विवृतया स्पन्दप्रदीपिकाभाण्डारकरमातृकया तुलनीयम्। स्वात्मसप्ततिरिति नामान्तरमस्यैव ग्रन्थस्येति तत्रैवोक्तम्। एतन्नामकः कश्चन जैनसम्प्रदायग्रन्थोऽपि तत्र विवृतः।

२४. **आत्मसम्बोधः (३९२ स्वात्मसम्बोधः)**—न्यू० II, पृ० ५८ इत्यत्र विवृतया स्पन्दप्रदीपिकाभाण्डारकरमातृकया तुलनीयम्। एतन्नामकः कश्चन जैनसम्प्रदाय-

---

१. ईदृशानां महत्त्वपूर्णानां दार्शनिकस्तोत्रग्रन्थानां परम्परा बौद्धवैष्णवशैवादिसम्प्रदायेषु कदा कथं प्रवृत्तेति गवेषणाक्षेत्रे नितान्तं मनोरञ्जकोऽयं विषयः। अत्र संगृहीतानि ज्ञानगर्भ-तत्त्वगर्भ-भक्तिस्तोत्रादीनि स्वीयं किमप्यनिर्वचनीयं वैशिष्ट्यं ख्यापयन्ति।

२. "सुभगोदये सुभगोदयवासनायां सुभगोदयप्रभायां च सप्ततिसंख्यामिताः श्लोकाः सन्तीति स्वयमेव ग्रन्थकारो वदति। महेश्वरानन्दोऽपि महार्थमञ्जर्यां सप्ततिसंख्यामिताः कारिका अनुबध्नाति। शिवानन्दपौत्रचिदानन्दपुत्रश्रीकण्ठानन्दविरचितायां निष्कलक्रमचर्चायां चापि तावन्त एव श्लोकाः सन्ति। शिवानन्दमहेश्वरानन्दादीनामस्यां संख्यायामभिनिवेशः किंमूलक इति विचार्यम्"(नि० उ०, पृ० २०; म० उ०, पृ० च) इत्यस्माभिः प्रोक्तमासीत्। प्रो० ए० एन० उपाध्येमहोदयेन स्वकीये "प्राकृत लेंग्वेजेज एण्ड काश्मीर शैविज्म' इत्याख्ये निबन्धे डॉ० एस० के० वेलवेलकर-अभिनन्दनग्रन्थे मुद्रिते (पृ० १९३) सप्ततिग्रन्थविषयश्चर्चित इति डॉ० रस्तोगीग्रन्थटिप्पणीतो (पृ० २१८, टि० ४) ज्ञायते। इयमात्मसप्ततिरपि किं तस्यामेव परम्परायां प्रावर्तत ?

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



ग्रन्थोऽपि समुपलभ्यते (न्यू० II, पृ० ५८)। अत्रैव संगृहीतः स्वात्मसम्बोध इतोऽभिन्न एव प्रतीयते। छन्दःसाम्यं हि तत्र हेतुः।

२५. **आद्यवर्णत्रिंशिका**—नि०उपोद्घात(पृ० ३२)धृतविवरणान्नाधिकं किमपि समुपलभ्यते। अबिन्दुमित्यत्रत्यः श्लोको विज्ञानभैरवेऽपि (श्लो० ८८) दृश्यते। अविसर्गमिति तत्रत्यः पाठः।

**आनन्दताण्डवविलासस्तोत्रम्**—अस्य स्तोत्रस्य वयं त्विमामिति श्लोको महार्थ-मञ्जरीपरिमले (पृ० १६०) समुद्धृतः। "यच्चोक्तमस्मद्गुरुभिः" (पृ० १५९) इति तत्रत्येन वचनेन महेश्वरानन्दगुरुर्महाप्रकाशोऽस्य स्तोत्रस्य कर्तेति ज्ञायते। मनोनुशासनस्तोत्रम्, मातङ्गीस्तोम्, संवित्स्तोत्रं च महाप्रकाशेन विरचितानीति तत एव ज्ञायते। मातङ्गी-स्तोत्रश्लोक एकः परिमले (पृ० ४२) समुद्धृतः। अन्यद् ग्रन्थद्वयमत्रैव विवृतं द्रष्टव्यम्।

२६. **आनन्दभैरवः**, २७. **आनन्दशासनम्**—अत्र प्रथमभागसंग्रहेऽस्य नाम आनन्दभैरव इति, द्वितीभागप्रथमोद्धरणे आनन्दाधिकशासनम्, द्वितीये आनन्दः, तृतीये आनन्दगह्वरम्, चतुर्थषष्ठसप्तमाष्टमेषु आनन्दशास्त्रम्, पञ्चमनवमयोरानन्देश्वरः, दशमे च पुनरानन्दभैरव इति नाम दृश्यते। सर्वाण्येतानि कस्यचन एकस्यैव ग्रन्थस्य नामानि, भिन्ना वा एते ग्रन्था इति नाधुना किमपि वक्तुं शक्यते। आनन्दभैरवस्य आनन्दशास-नस्य च पृथक् पृथग् विवरणं दृश्यते न्यू० II, पृ० १०९, II, पृ० ११८ इत्यत्र च। ता० सा०, पृ० ४५-४६ इत्यत्र आनन्दगह्वरतन्त्रम्, आनन्दतन्त्रम्, आनन्दभैरवतन्त्रं च पृथक् पृथग् विवृतम्। तत्रैव पृ० ४९ इत्यत्र च आनन्दाधिकशास्त्रम्, आनन्देश्वरतन्त्रं च पृथगेव विवृतम्। आनन्देश्वरतन्त्रं द्वादशसहस्रश्लोकात्मकमिति जयरथवचनेन(त०वि०, भा० ९, आ० १५, पृ० १३९) ज्ञायते। शिवभेदस्य दीप्तागमस्य उपागमेष्वानन्द-मिति गीयते। प्र० सा० (२।१२३) इत्यत्र च वामतन्त्रेष्वस्य परिगणनं विद्यते। सिद्धान्त-भैरव (दक्षिण)-वामतन्त्रेषु मौलिकभेदस्य सत्त्वात् तान्येतानि भिन्नान्येव तन्त्राणि स्युः। अत्रोद्धृतानि च वचनानि तदेतस्य वामतन्त्रत्वमेव साधयन्ति। न्यू० II, पृ० १०९ इत्यत्रत्यं विवरणं द्रष्टव्यम्। हठयोगप्रदीपिकायां हठयोगस्य कश्चनाचार्य एतन्नामको वर्ण्यते, शक्तिसंगमतन्त्रेऽपि च।

२८. **आर्याकारः**—परमार्थसारादिषूपलब्धेषु आर्यावृत्तनिबद्धेषु ग्रन्थेषु नैष श्लोक उपलभ्यत इत्यस्य आर्याकारस्य विषये साम्प्रतं किमपि वक्तुं न शक्यते।

२९. **आलोकमाला**—अत्रत्यमन्तिमं पङ्क्तिद्वयं स्पन्दनिर्णयेऽपि (पृ० २८) दृश्यते। स्पन्दप्रदीपिकास्थं नागार्जुनवचनमपि तत्र (पृ० २७) तेनैव क्रमेण समुप-लभ्यते। उद्धरणद्वयमप्येतद् विज्ञानभैरवोद्योतेऽपि (पृ० ११०) विनैव नामनिर्देशं वर्तते। तत्र उत्पलवैष्णवः स्वमन्तव्यसमर्थने वचनद्वयमेतत् समुद्धरति, क्षेमराजस्तत् समुद्धृत्य प्रत्याख्याति, शिवोपाध्यायश्च बौद्धशून्यवादविलक्षणं शाक्तागमसम्मतं शून्य-लक्षणमिदमिति स्वीकरोति। सर्वालम्बनधर्मैश्चेति नागार्जुनवचनं बौद्धदार्शनिकस्य नागार्जुनस्य ग्रन्थेषु नोपलभ्यत इति तद्दर्शनमनीषी श्रीमान् जगन्नाथोपाध्यायो वक्ति।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तान्त्रिकस्य नागार्जुनस्येदं वचनं स्यात्। आलोकमाला च वैष्णवसम्प्रदायस्य ग्रन्थः स्यात्। समन्वयवादिनो हि केचनाचार्यास्तदा वैष्णवेषु, बौद्धेषु, शैवेषु, शाक्तेषु च सम्प्रदायेषु समभूवन्। तां परम्परां न स्वीकरोति क्षेमराजः, अनुसरति च तां शिवोपाध्यायः। शिवोपाध्यायकृतां विज्ञानभैरवोद्योतविवृतिं दृष्ट्वा तत्समक्षं क्षेमराजकृता वृत्तिर्नासीदिति वचनमश्रद्धेयमिव प्रतीयते।

३०. **इतिहासरहस्यम्**—अस्य विषये किमपि न ज्ञायते। न्यू० II, पृ० २४६ इत्यत्रापि नैव विवृतम्।

३१. **इष्टोपदेशः**—एतन्नामकः कश्चन जैनसम्प्रदायग्रन्थः पूज्यपाददेवनन्दिकृतो मुद्रित उपलभ्यते। तत्र श्लोकस्यास्यानुपलम्भात्ततो भिन्न एवैष ग्रन्थो मन्तव्यः। एष च वैष्णवसम्प्रदायस्य ग्रन्थः स्यात्, पाञ्चरात्रागमीयसात्वतसंहितायाम्—"इष्टोपदेशः कर्तव्यः" (२१।४५) इति समयोपदेशप्रकरणे इष्टोपदेशस्य विधानात्।

३२. **ईशानशिवः**—"इत्युक्तवान् स्वपद्धत्यामीशानशिवदेशिकः। श्रीदेव्यायामलोयोक्तितत्त्वसम्यक्प्रवेदकः॥" (तन्त्रा० २२।३०-३१) इत्येवमभिनवगुप्तेन स्मृत एष ईशानशिवाचार्यो मुद्रितेशानशिवगुरुदेवपद्धतिकारतोऽर्वाचीनादीशानशिवाद् भिन्न एव। गुरुदेवपद्धतिकार ईशानशिवः सोमशम्भुं स्मरति (भा० ३, पृ० ९७, २०७, २१४, २१८, ३२०), येन हि ११३० वैक्रमे वत्सरे (ई० १०७३) कर्मकाण्डक्रमावली निर्मिता। एवं चायं गुरुदेवपद्धतिकारः सोमशम्भुग्रन्थानन्तरमेव स्वकीयां पद्धतिं संदृब्धवानिति बाढमभिनवगुप्ताचार्यादीशवीयदशमशतकोत्तरार्धभवादर्वाचीन इति मन्तव्यम्। अथापि देव्यायामलग्रन्थस्तत्रत्यमुद्धरणं च मुद्रितायामीशानशिवपद्धत्यां[1] परीक्षणीयम्। वस्तुतस्तु प्रतिष्ठालक्षणसारसमुच्चयकर्तुर्वैरोचनस्य[2] गुरुरयं (३२।७२) स्यात् प्राचीन ईशानशिवः। तेनैव च देव्यायामलाख्यग्रन्थस्य काचन व्याख्या कृता स्यात्। अथवा—"ईशाननामा शिवतुल्यधामा तस्यापि शिष्यो विमलेशनामा। तस्यापि शिष्यः स शिवाभिधानस्तस्यापि शिष्यः खलु सोमशम्भुः॥" (पृ० १८७) इति कर्मकाण्डक्रमावलीवर्णित ईशानशिवः स स्यात्। अत्र 'स शिवा०' इत्यस्य स्थाने 'खशिवा०' इति पाठेन भाव्यम्।

---

१. तन्त्रपद्धतिनाम्नाऽपि ग्रन्थोऽयं प्रथते। अन्तिमभागश्च सिद्धान्तसार इति ख्यायते (ता० सा०, पृ० ६०)।

२. मत्तमयूरवंश्यो विमलशिवस्तस्य शिष्य ईशानशिवस्तस्य च वैरोचन इति क्रमस्तत्र वर्ण्यते(३२।७२)। उपरि निर्दिष्टे सोमशम्भुवाक्ये ईशानः प्रथमः, विमलेशश्च द्वितीय आचार्यो वर्ण्यते। शिवनामान्तानां सिद्धान्तशैवाचार्याणां राजगुरूणां नामावली डॉ० वासुदेवमिराशीसंदृब्धप्राच्यविद्यानिबन्धावल्याश्चतुर्थे खण्डे संगृहीते "पतङ्गशम्भु का ग्वालियर संग्रहालय शिलालेख" इति शीर्षके निबन्धे (पृ० १७४-१८२), डॉ० बी० एस० पाठकनिर्मिते "हिस्ट्री आफ शैव कल्ट इन नार्दर्न इण्डिया" इत्याख्ये ग्रन्थे (पृ० ४६-५०) च द्रष्टव्या। ईशानशिवगुरुदेवपद्धतिद्वितीयभागप्रस्तावनायामपि विषय एष चर्च्यते। एतैराचार्यैर्निर्मिता विमलावत्यादयो ग्रन्था: साम्प्रतमप्रकाशिता एव विद्यन्ते। ग्रन्थानामेषां साहाय्येन पूर्वोक्ता नामावली परिष्करणीया।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



व्योमशिव इति तदर्थः। न्यू० II, पृ० २६५-२६६; आ० I, पृ० ३६१ इत्यत्रत्यं विवरणमपि द्रष्टव्यं परीक्षणीयं च।

३३. **उच्छुष्मभैरवः**—उच्छुष्मशास्त्रम् उच्छुष्मतन्त्रमिति वा नाम्नाऽप्ययमेव ग्रन्थः स्मृतः स्यात्। अद्वयवज्रसंग्रहे—"शिवशक्तिसमायोगात् सत्सुखं परमाद्वयम्। न शिवो नापि शक्तिश्च रत्नान्तर्गतसंस्थितम्॥" (पृ० २८) इत्येष श्लोक उच्छुष्मतन्त्रस्य दृश्यते। उच्छुष्मतन्त्रमेतदुच्छुष्मभैरवादभिन्नं भिन्नं वेति परीक्षासापेक्षम्। अत्रत्यं यावन्नेति वचनमुच्छुष्मभैरवनाम्नैव (शि० वृ०, पृ० १; स्व० उ० ३।७।३१५, ५।१०। ३८२) स्मर्यते। अभिनवगुप्तेन (त० सा०, पृ० ३२; परा० अभि०, पृ० १५६) उच्छुष्म-शास्त्रनाम्ना ग्रन्थ एष स्मृतः। प्र० सा० (२।११८) इत्यत्र दक्षिणागमेष्वयं परिगणितः। उच्छुष्मभैरव उच्छुष्मशास्त्रं वा न्यू० II, पृ० २८७ इत्यत्रापि विवृतम्। ता० सा०, पृ० ६८-६९ इत्यपि द्रष्टव्यम्।

३४. **उत्तरपदम्**, ३५. **उत्तरषट्कम्**—नि० उपोद्घात(पृ० ३२)धृतं विवरणं द्रष्टव्यम्। ता० सा०, पृ० ७६ इत्यत्र विवृतं यदेष ग्रन्थो विद्यानाथकृत इति। अत्र च न्यू० II, पृ० ३०९ प्रमाणत्वेन स्थापितम्। तत्र च विद्यापीठ इति ग्रन्थकारस्य नाम विद्यते। विद्यापीठविनिर्गतमेतत् तन्त्रमिति तस्याभिप्रायः। सटीकस्यास्य ग्रन्थस्य मातृकाप्रतिलिपिरस्मत्सविधे वर्तते। कुलदीपिकेति व्याख्याया नाम। व्याख्याकारस्य तु नाम न दृश्यते। रुद्रयामलसारभूतं त्रिपुरातन्त्रमेतत्। टीकाकारोऽत्र ब्रह्मानन्द-भट्टारकसम्प्रदायमनुसरति।

**उत्फुल्लकमतम्**—तन्त्रालोके (२९।१६६) उत्फुल्लतन्त्रं स्मर्यते। "उत्फुल्लेति उत्फुल्लकमतम्" इति तत्रैव जयरथ आह। तन्त्रालोकविवेकधृतश्रीकण्ठीसंहितायाम्—"अतः परं महादेवि मतभेदान् शृणुष्व मे। रक्ताख्यं लम्पटाख्यं च मतं लक्ष्म्यास्तथैव च॥ पञ्चमं चालिका चैव पिङ्गलाद्यं च षष्ठकम्। उत्फुल्लकं मतं चान्यद्विश्वाद्यं चाष्टमं स्मृतम्॥" इत्येवं मताष्टकतन्त्राणि परिगण्यन्ते। अत्र सप्तैव नामानि दृश्यन्ते, किन्तु तत्र दृश्यते उत्फुल्लकमतम्। ता० सा०, पृ० ७७ इत्यत्र 'उत्फुल्लिकामत' इति नाम दृश्यते। तच्च लेखनादिदोषजं मन्तव्यम्। नित्याषोडशिकार्णवे (१।१७-२०) चतुष्षष्टितन्त्रपरिगणनावसरे कुब्जिकामत-महापिचुमत-महालक्ष्मीमत-सिद्धयोगीश्वरीमत-कुरूपिकामत-रूपिकामत-सर्ववीरमत-विमलामताख्यान्यष्टौ मततन्त्राणि निर्दिश्यन्ते। समेषामेषां मततन्त्राणां मताख्येन सम्प्रदायेनाभिनवगुप्तादिस्मृतेन सम्बन्धोऽन्वेषणीयः। उत्फुल्लकमतं तन्त्रालोके आदि(कौलिक)यागप्रकरणे स्मर्यते। वर्तन्ते च कालिकामत-चिल्लाचक्रेश्वरीमत-त्रिशिरोमत-देव्यामत-परामत-पिचुमत-मालिनीमत-शचीमतानां वच-नान्यत्र संगृहीतानि। नैतेषां सर्वेषां भैरवान्तर्गतमततन्त्रैः कश्चन संबन्धः स्यात्। क्रम-कुल-त्रिकादीनामिव मततन्त्राणां स्वरूपमभिनवगुप्तादिग्रन्थेभ्यो न स्पष्टं विज्ञायते। तदत्र प्रयतनीयम्।

३६. **उदयाकरपद्धतिः**—नि० उपोद्घात(पृ० ३२)धृतं विवरणं द्रष्टव्यम्। न्यू० II, पृ० ३३१ विवरणानुसारमेष ग्रन्थो नवमीसिंह(दामोदर)कृततन्त्रचिन्तामणौ मालासंस्कारे च समुद्धृतः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



३७. **उद्धारोर्ध्वतन्त्रम्**—नेपालदरबारपुस्तकालयेऽस्य मातृका विद्यत इति ता० सा०, पृ० ७९ इत्यनेन ज्ञायते। किमेष उद्धारकोशादभिन्नो ग्रन्थः ? अस्यानेका मातृकाः समुपलभ्यन्ते (ता०सा०, पृ० ७८-७९ इत्यत्र द्रष्टव्यम्)। [1]उद्धारकोशो मुद्रितोऽपि वर्तते। का० हि०, पृ० ७३८ इत्यत्र च सी ३८४८, सी ३९३२ संख्याके मातृके विवृते। "क्वचित् तन्त्रे रमाशक्तिबीजोद्धारे" (यो०हृ०, पृ० २९) इति तु भास्कररायोऽत्र पठति।

३८. **उपचारोपनिषत्**—नि० उ०, पृ० ३३ द्रष्टव्यम्।

३९. **(उपायद्विशती) उपायविंशतिः**—महार्थमञ्जरीपरिमले "प्राणादिभूमिकैराद्याः सिद्धयन्त्युच्चाटनादिभिः। विकल्पैर्मध्यमाः शुद्धैरन्त्याः प्रशमितैस्तु तैः॥" (पृ० १४१) इत्येष श्लोक उपायद्विशतीग्रन्थस्योद्धृतः। उपायद्विशती,उपायविंशतिश्चेति भिन्नावेतौ ग्रन्थौ, अथवा मातृकादोषादेकस्यैव कस्यचन ग्रन्थस्य भिन्ने द्वे नामनी सञ्जाते इति परीक्षासापेक्षम्। कश्चास्य कर्तेति विषयोऽपि तथैव।

४०. **ऊर्मिकौलसिद्धसन्तानशास्त्रम्**—ऊर्मिमहाशास्त्रे सिद्धसन्तानरूपके, सिद्धसन्तानश्रीमदूर्मिमहाकुले, सारशास्त्रेषु (ऊर्मिकौलादिषु), श्रीमदूर्मौ, ऊर्मिशासने, ऊर्मिशास्त्रे इति च नामपुरस्सरमुद्धृतानि वचनान्यस्योपलभ्यन्ते। न्यू० III, पृ० ४ इत्यत्र ऊर्मि-ऊर्मिशास्त्र-ऊर्मिमहाशास्त्र-ऊर्मिशासननामभिर्विवृतमेतत्। सिद्धसन्तान इति वारद्वयं स्थितेनास्य विशेषणेन सिद्धसन्तान-योगिनीसन्तानभेदेन स्थितेषु द्विविधेषु कौलागमेष्वयं ग्रन्थः सिद्धसन्तानपरम्परामनुसरतीति ज्ञायते। योगिनीकौल-सिद्धकौलाख्यौ भेदौ मृगेन्द्रागमे चर्यापादे (१।४०-४१) द्रष्टव्यौ। सिद्धसन्तान (३५७) विवरणमप्यत्रावलोकनीयम्।

४१. **ऋजुविमर्शिनी (मुद्रिता)**—शिवानन्दविरचितो नित्याषोडशिकार्णवव्याख्यानरूप एष ग्रन्थः साम्प्रतमस्माभिरेव सम्पादितः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीययोगतन्त्रग्रन्थमालायाः प्रथमप्रसूनत्वेन १९६८ ई० वर्षे प्रकाशितो वर्तते। महेश्वरानन्देन महार्थमञ्जरीपरिमले स्मृतानि स्वपरमगुरोः शिवानन्दस्यास्य ग्रन्थस्य सर्वाणि वचनान्यत्र समुपलभ्यन्ते। शिवानन्दस्य कालादिविषयेऽस्माभिरन्यत्र प्रोक्तमिति तस्य जयरथपरवर्तित्वात् शिवानन्दस्य स्तोत्रभट्टारक-महानयप्रकाशकर्तृत्वप्रतिपादनं[2] प्रमाणपराहतं मन्तव्यम्। १२९. त्रिपुरसुन्दरीमन्दिरस्तोत्रादिविवरणमत्र द्रष्टव्यम्।

४२. **ओजराजः**—"तत्र (देवीपञ्चशतिकायां) च श्रीमदोजराजस्य पाठव्यत्यासान्मतान्तरमिति तद् गुरव एव प्रमाणम्" (त० वि०, भा० १२, आ० ३०, पृ० १९७) इति जयरथवचनात् कश्चन क्रमदर्शनस्याचार्योऽयमिति ज्ञायते। पञ्चशतिका हि निर्विवादं क्रमदर्शनग्रन्थः। डा० रस्तोगीग्रन्थो (पृ० २००, २३१) द्रष्टव्यः।

---

१. लाहौरनगरतः १९३८ ई० वर्षेऽस्य दक्षिणामूर्तिरचितस्य ग्रन्थस्य प्रथमं संस्करणम्, १९७८ ई० वर्षे च दिल्लीनगरतो "मुंशीराम मनोहरलाल" इति प्रकाशकेन द्वितीयं संस्करणं प्रकाशितम्।

२. डॉ० रस्तोगीग्रन्थे (पृ० ८७, २०२-२०७) सविस्तरमेतत् प्रतिपाद्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



४३. **कक्ष्यास्तोत्रम् (भट्टदिवाकरवत्सस्य)**—कक्ष्यास्तोत्रनाम्ना दिवाकरवत्सनाम्ना च त्रिविधच्छन्दोबद्धानि वचनानि समुपलभ्यन्ते। तैः कक्ष्यास्तोत्रकारो दिवाकरवत्स इति तु निश्चप्रचं ज्ञायते, किन्तु तानि सर्वाणि वचनानि कक्ष्यास्तोत्रस्यैवेति निश्चितं वक्तुं न शक्यते। छन्दोभेदेन वचनानामेषामुपलम्भादेकस्मिन्नेव स्तोत्रग्रन्थेऽनेन विविधानां छन्दसामुपयोगः कृतोऽथवा भिन्ना ग्रन्था निबद्धा इति नाधुना किमपि निश्चेतुं पार्यंत। दिवाकरवत्सो विवेकाञ्जनमपि रचयामासेत्यग्रे भविष्यति। सोऽयं दिवाकरवत्सो भट्टभास्करात् शिवसूत्रवार्त्तिककारादभिन्न इति "दैवाकरिर्भास्करः" (शि० वा० १।९) इति शिवसूत्रवार्त्तिकवचनेन सिद्ध्यति। डा०रस्तोगीग्रन्थे (पृ० १४४-१४६) अन्यदपि विवरणमस्य द्रष्टव्यम्। ता० सा०, पृ० ९० इत्यत्र तदेतत् कक्ष्यामालास्तोत्रनाम्नापि स्मृतम्। ज्ञानं प्रशान्तमित्यादिना पाञ्चरात्रसंमतं षाड्गुण्यं विवेचयन्नयं वैष्णवसम्प्रदायग्रन्थमपि जग्रन्थेति ज्ञायते।

४४. **कचभार्गवम्**—तन्त्रालोके (२३।६) अभिनवगुप्तेन स्मृतोऽयं ग्रन्थो गुरुलक्षणप्रसङ्गे। मतङ्गपारमेश्वरविद्यापादवृत्तौ (पृ० १७) कवचभार्गवश्लोक एष प्रमाणीकृतः— "देवानां साधुशब्दैर्यन्मनुष्याणां स्वभाषया। व्यवहारास्ततो रक्ष्याः साधूनां लक्षणैः सदा॥" इति। कवचभार्गवमेतत् कचभार्गवतोऽभिन्नं स्यात्। कवचं च उपागमेषु प्रोद्गीतभेदेषु पठ्यते।

४५. **कर्णिकाकारः (स्तवचिन्तामणिर्मुद्रितः)**—कर्णिकाकारोऽयं भट्टनारायणकण्ठेन मृगेन्द्रागमक्रियापादवृत्तौ स्मृतस्तत्रभवानिति समादरसूचकविशेषणपुरस्सरम्। अत्रत्यः श्लोकश्च भट्टनारायणकृतस्तवचिन्तामणिस्थः ४७ संख्याको वर्तते। तेन भट्टनारायण एव नारायणकण्ठेन कर्णिकाकारनाम्ना स्मृत इति विज्ञायते। तेनैतन्नामकः कश्चन व्याख्यानग्रन्थो[1] विरचितः स्यात्। स्तवचिन्तामणिव्याख्याता क्षेमराज एवं भट्टनारायणस्य परिचयं ददाति—"स्तोत्रकारस्य पितामहः परमेश्वराख्यः, अपराजितः पिता, श्रीदयाख्या माता, शङ्कराभिधानो ज्येष्ठो भ्राताऽभवत्" (पृ०१०)इति। "श्रीरामेण कृताऽत्र सद्विवृति०" (पृ० १३०) इत्यनेन च श्रीरामस्य तद्व्याख्यातृत्वं द्योत्यते। श्रीराम एष स्पन्दशास्त्रव्याख्याता स्तोत्रकारश्च स्यात्। "इत्याख्यायिकाविदः" (पृ० १०) इति क्षेमराजवचनात् "भट्टनारायणः क्षेमराजस्य परमगुरुः" इत्युक्तिः कल्पनाविलसितप्राया भवति। "तत्रभवत्स्तुतिसूक्तिकारप्रशिष्य०" (पृ० १३०) इति पुष्पिकावाक्यस्थस्तुतिसूक्तकारप्रशिष्यपदेन हि तत्राभिनवगुप्तः स्मर्यते! स किल स्तुतिसूक्तिकारस्य भट्टोत्पलस्य प्रशिष्य इति। प्रसङ्गेनानेन नारायणकण्ठरामकण्ठयोर्भट्टनारायणश्रीरामाभ्यां भेदश्च सुतरामवगम्यते।

४६. **कर्मकाण्डक्रमावली**—सोमशम्भुविरचितायाः कर्मकाण्डक्रमावल्याः साम्प्रतं संस्करणत्रयमुपलभ्यते। देवकोट्टैनगरतः १९३१ ई० वर्षे प्रकाशितं प्रथमम्, काश्मीरग्रन्थावल्यां १९४७ ई० वर्षे प्रकाशितं द्वितीयम्, पाण्डिचेरीतश्च भागत्रयेषु (१९६३, १९६८, १९७७ ई०) प्रकाशितं तृतीयम्। किन्तु सर्वेष्वेतेषु संस्करणेषु कर्मकाण्ड-

१. कर्णिकाकारवद् त० वि० ९।३०५ इत्यत्र स्मृतो ज्योत्स्नाकारः, त० वि० ८।१०८ इत्यत्र स्मृतो लीलाकारश्चापि ग्रन्थव्याख्यातारौ स्याताम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



क्रमावल्या अत्र संगृहीतः श्लोको न दृश्यते। तेन भिन्नैव काचन कर्मकाण्डक्रमावली स्यादेषा। ईशानशिव(३२)विवरणमपि द्रष्टव्यम्।

**४७. कल्लटः**—स्पन्दसम्प्रदायप्रवर्तकस्य शिवसूत्रवृत्त्योर्मधुवाहिनीतत्त्वार्थचिन्तामण्योः कर्तुः कल्लटस्य विषयेऽनेकेषु ग्रन्थेषु बहुधा लिखितमिति नात्र प्रपञ्च्यते। स मुकुलभट्टस्य अभिधावृत्तिमातृकाकारस्य पिता, वसुगुप्तस्य शिष्यः, तत्त्वविचारस्वस्वभावसम्बोधनादिग्रन्थानां कर्ता, प्रद्युम्नभट्टस्य मातुलो गुरुश्च, काश्मीरनृपतिनाऽवन्तिवर्मणा ८५४ ई० वर्षे सत्कृतश्च। तत्त्वार्थचिन्तामणिः शिवसूत्रस्य चतुर्थं खण्डम्, मधुवाहिनी च आद्यं खण्डत्रयं व्याख्यातीति हि तस्य संक्षेपः। स्पन्दप्रदीपिकाकार उत्पलवैष्णवः 'अयम्, ग्रन्थकृत्, कर्ता, संग्रहकृत्' इत्यादिभिर्विशेषणैः कल्लटमेव स्मरति। तत्र १०१ तमे पृष्ठे काचन प्राकृतभाषामयी गाथा समुद्धृता दृश्यते। तत्रैव "ग्रन्थकर्तुश्च स्वस्त्रभावसम्बोधने" (पृ० ८८) इत्युक्त्या स्पन्दकारिकाकर्तुः कल्लटस्यैव स्वस्वभावसम्बोधननामा ग्रन्थोऽपि वर्तत इति विवृण्वन् वैष्णव उत्पलः स्पष्टतया स्पन्दकारिकाकर्तारं कल्लटमङ्गीकरोति। कश्मीरेषु शिवपारम्यवादिनां शक्तिपारम्यवादिनां च सम्प्रदायद्वयं प्रवृत्तमासीत्। शिवपारम्यवादिनां मते स्पन्दकारिकाऽपि शैवशास्त्रं वसुगुप्तश्च तत्कर्तेति स्वीक्रियते। शक्तिपारम्यवादिनश्च स्पन्दकारिकां शक्तिपारम्यप्रतिपादिकां कल्लटं च तत्कर्तारमङ्गीकुर्वते। क्षेमराजादयः प्रथमम्, उत्पलवैष्णवभास्करादयश्च द्वितीयं मतं स्वीकुर्वन्ति। शक्तिपारम्यवादिनां मतं सोमानन्देन भट्टोत्पलेन च समालोचितम्। तदेतन्मतं क्रमदर्शनादभिन्नं स्पन्दकारिका च तस्याद्यो ग्रन्थः स्यात्। डॉ० रस्तोगी(पृ० १११-१२०)ग्रन्थे न्यू० III, पृ० २६२ इत्यत्र च कल्लटस्य विस्तृतः परिचयो द्रष्टव्यः। तत्त्वविचाराख्यो ग्रन्थोऽप्यनेन लिखित इति तद्विवरणे (११३) द्रष्टव्यम्। सुभाषितावल्यामपि केचनास्य श्लोकाः समुपलभ्यन्ते।

**४८. कात्यः**—"तदुक्तं श्रीभगवता कात्येन श्रीपूर्ववार्त्तिके" (ने० उ०, भा० २, पृ० २७४) इति क्षेमराजवचनेन ज्ञायते यदयमाचार्यः श्रीपूर्वशास्त्रस्य मालिनीविजयाख्यस्य वार्त्तिककार इति। अभिनवगुप्तकृते मालिनीविजयवार्त्तिके तु ग्रन्थस्यास्य कापि चर्चा नास्ति। कात्य एष न्यू० III, पृ० ३१९-३२० इत्यत्र नैव विवृतः।

**४९. कामसिद्धिस्तोत्रम् (वत्सराजकृतम्)**—वत्सराजविरचिताया वामकेश्वरीस्तुतेर्मातृका नेपालराजकीयवीरपुस्तकालयतन्त्रसूच्यां (भा० १, पृ० ७) अशेषकुलवल्लरीमातृकायां विवृता दृश्यते। तस्याः स्तुतेः प्रतिलिपिरस्माकं सविधे वर्तते। तत्र न दृश्यतेऽयं श्लोक इति कामसिद्धिस्तोत्रमेतत् ततो भिन्नमेव। तत्र "महाराजाधिराजविद्याधरचक्रवर्ती" इति वत्सराजस्य विशेषणमवधानार्हम्। न्यू० III इत्यत्र नैतद् विवृतम्।

**५०. कामिकागमः ( मुद्रितः )**—दशाष्टादशभेदभिन्नेषु सिद्धान्तशैवागमेषु प्रथमोऽयं कामिकागमो भागद्वयात्मकः १९०० ई० वर्षे मद्रासनगरतो ग्रन्थलिप्यां मुद्रितः। दक्षिणभारतीय-अर्चकसंघद्वारा च मद्रासनगरे एव १९७५ ई० वर्षे मुद्रितमपरं संस्करणम्। न्यू० III, पृ० ३६३-३६४ इत्यत्र मातृका विवृताः।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



५१. **कालपरा**—श्रीकालपरा काचन पाञ्चरात्रसंहितेति डॉ० श्रादरमहोदयो वदति (इण्ट्रोडक्शन०, पृ० १८)। पाञ्चरात्रसंहितानामावलीषु चास्याः कुत्रापि नाम न दृश्यते। कालपरा सेयं कालोत्तरादभिन्ना भिन्ना वेति परीक्षणीयम्। कालोत्तर(५७)-विवरणमत्र द्रष्टव्यम्।

५२. **कालावली**—स्वच्छन्दतन्त्रे सप्तमपटले निरूपितस्य प्राणचारक्रमस्य व्याख्यानावसरे—"क्रमः श्रीकालोत्तरादिशास्त्रोक्त उदयज्ञप्त्यर्थं स्मर्तव्यः" इत्युक्त्वा क्षेमराजः कालावलीश्लोकद्वयमेतदुद्धरतीत्यतोऽधिकं न किमप्येतद्विषये ज्ञायते।

५३. **कालिकाकल्पः**—अर्थरत्नावलीकारेण विद्यानन्देन ज्ञानदीपविमर्शिन्यां स्मृत एष ग्रन्थः। न्यू० IV, पृ० ४६-४७ इत्यत्र कालिकाकल्प-कालीकल्पनामभ्यामस्य मातृकाणां विवरणं द्रष्टव्यम्।

५४. **कालिकाक्रमः** (१३५ **देविकाक्रमः**)—योगराजेन परमार्थसारव्याख्यायाम् (पृ० ९०, ११९), क्षेमराजेन नेत्रोद्योते (भा० २, पृ० २८३) चात्रत्याः श्लोकाः स्मृताः। क्षेमराजकृतसाम्बपञ्चाशिकाटीकायां (पृ० ३८) सार्धश्लोकमेतदधिकमत्रत्यं दृश्यते—

अमृतं चन्द्ररूपेण द्विधा षोडशधा पुनः।
पिबन्ति च सुराः सर्वे दश पञ्च पराः कलाः॥
अमाशेषगुहान्तःस्थाऽमावस्या विश्वतर्पिणी। इति।

स्वच्छन्दोद्योते (भा० ३, पृ० २१३) तु कामिकागमीयमेतदित्युक्तम्। अत्रत्यं प्रथम-मुद्धरणं महेश्वरानन्देन परिमले देविकाक्रमनाम्ना स्मृतम्। कालीक्रम इति नामान्तर-मस्यैव (ता० सा०, पृ० ११९)। अत्रैव (पृ० १२२) कालीक्रमस्य पृथगपि विवरणं दृश्यते। डॉ० रस्तोगीग्रन्थोऽपि (पृ० २३५-२३९) द्रष्टव्यः। न्यू० IV, पृ० ४९ इत्यत्र कालिकाक्रम-कालीकल्पनामभ्यां मातृकाविवरणं द्रष्टव्यम्।

५५. **कालिकामतम्**—महेश्वरानन्देन महार्थमञ्जरीपरिमलेऽत्रत्यः श्लोकः स्मृत इत्यतोऽधिकं किमपि न ज्ञायते।

५६. **कालीकुलम्**—तन्त्रालोके (२७।४४, २८।१५, २९।४३), नेत्रोद्योते (१।३०) च कालीकुलनाम्ना, स्वच्छन्दोद्योते (११।३-४) च कालिकाकुलनाम्ना ग्रन्थोऽयमुद्धृतः। न्यू० IV, पृ० ४८-४९, ७२-७३ इत्यत्र पृथक् पृथग् विवृतमप्येतन्नैव ग्रन्थान्तरम्, नेत्रोद्योते स्वच्छन्दोद्योते चैकस्यैव श्लोकस्य नामभेदेन समुद्धरणात्। नेपालवीर-पुस्तकालयतन्त्रसूच्यां कालिकाकुल-क्रमसद्भाव-कालिकाकुलपञ्चक्रमार्चन-कालिका-कुलपञ्चाशत्-कालिकाकुलसद्भाव(पृ० ३७-३८)प्रभृतयः, कालीकुलक्रम-कालीकुल-क्रमार्चन-कालीकुलार्णवादयश्च (पृ० ४०-४२) ग्रन्था दृश्यन्ते। तेष्वत्रत्याः श्लोका अन्वेषणीयाः। न्यू० IV, ४८-४९ इत्यत्र कालिकाकुल(सद्भाव)तन्त्रस्य, कालिकाकुल-सर्वस्वस्य च मातृका विवृताः।

५७. **कालोत्तरम् (कालपादा)**—शिवदृष्टौ कालपादानाम्ना (पृ० १०२,१२२) स्मृत एष ग्रन्थस्तद्विवृतिकारेण भट्टोत्पलेन तत्रैव कालोत्तरनाम्नोद्धृत इति कस्यचनै-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



कस्यैव ग्रन्थस्येमे नामनी मन्तव्ये। स्पन्दप्रदीपिकायामुद्धृता कालपरा कालपादातो भिन्नाऽभिन्ना वेति मातृकावलोकनानन्तरमेव वक्तुं शक्येत। कालज्ञानापरपर्यायस्य कालोत्तरस्य मातृके ता० सा०, पृ० ११५-११६ इत्यत्र विवृते दृश्येते। एवमेव पृ० १३०-१३१ इत्यत्र कालोत्तरतन्त्रस्यानेका मातृकास्तत्र विवृताः सन्ति, ग्रन्थ एष येषु ग्रन्थेषूद्धृतस्तेषां नामानि च लिखितानि सन्ति। परीक्षणार्हा अत्रत्याः सर्वा मातृकाः। कालोत्तरस्य मातृके मद्रासराजकीयपुस्तकालयेऽपि विद्येते। नेपालवीरपुस्तकालये (तन्त्र० भा० १, पृ० ४६-५५) चानेका मातृकाः सन्ति। उपलब्धानामेतासां मातृकाणां साहाय्येन ग्रन्थस्यास्य शोभनं संस्करणं कर्तुं शक्यते, कालज्ञान-कालपरा-कालपादा-कालोत्तरादिनाम्नां च परीक्षणं भवितुमर्हति। स्वच्छन्दोद्योते (भा० ३, पृ० २६९; भा० ६, पृ० ९१), सा० प० टी०, पृ० ३५ इत्यत्रापि च कालोत्तरनाम्नैव स्मर्यते ग्रन्थोऽयम्। शैवोपागमेषु कालज्ञानं वातुलस्य, कालाख्यं च तन्त्रद्वयं रौरवस्य किरणस्य चोपागमतया स्मर्यन्ते। वामकेश्वरीमते चतुष्षष्टितन्त्रेषु कालपादा परिगण्यते। परा० अभि०, पृ० १५६ इत्यत्र कौलोत्तरं स्मर्यते। कालोत्तरमेवैतद् भिन्नं वा तन्त्रमिति साम्प्रतं वक्तुं न शक्यते। चतुष्कलभट्टारको ह्यत्र विवृत इति कालोत्तरे प्रकरणमेतदन्वेषणीयम्। नादाख्यमित्यस्योत्तरार्धः—"मुक्तिदं परमं दिव्यं सर्वसिद्धिप्रदायकम्" (पृ० ३१८) इत्येवं मतङ्गपारमेश्वरवृत्तौ दृश्यते। सार्धत्रिशतिकालोत्तरं रामकण्ठवृत्तिसहितं पाण्डिचेरीशोधसंस्थानतः साम्प्रतमेव प्रकाशितम्। तत्रैषः (११५) श्लोकः समुपलभ्यते। तत्रोपोद्घातारम्भे कालोत्तरागमस्य त्रयोदशभेदाः प्रदर्शिताः। शतरत्नसंग्रहे (पृ० ९४) "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। नान्यशास्त्रे यदासक्तिर्ज्ञानं तस्मिन्नु दापयेत्॥" इत्यत्रत्यः श्लोको दृश्यते। न्यू० IV, पृ० ३१,८२ इत्यत्र कालपरायाः कालोत्तरायाश्च विस्तृतं विवरणं द्रष्टव्यम्।

५८. **किरणागमः (मुद्रितः)**—दशाष्टादशभेदभिन्नेषु सिद्धान्तशैवागमेषु रौद्रागमान्तर्गतोऽयं ग्रन्थो ग्रन्थलिप्यां संमुद्रय शिवागमसिद्धान्तपरिपालनसंघद्वारा देवकोट्टैनगरतः १९३२ ई० वर्षे प्रकाशितः। पाण्डिचेरीस्थफ्रेंचशोधसंस्थानेऽस्यागमस्य कस्याश्चन वृत्तेरपि टि० २९० संख्याका मातृका समुपलभ्यते। "शैवशब्देन अनुत्तीर्णशिवपदप्रापकं कैरणादिसिद्धान्तशास्त्रमुच्यते" (स्वच्छन्दो० ११।७४), "प्रायश्च सिद्धान्तप्रियो लोकः" (स्वच्छन्दो० २।२५) इति च क्षेमराजः शैवसिद्धान्तशब्दौ निर्वक्ति। श० र० सं० इत्यत्र १९,२२,५०,५१,६८,७३,९१,९२ पृष्ठेषु, म० म० प० इत्यत्र च १६९ पृष्ठेऽन्यान्यपि किरणवचनानि द्रष्टव्यानि।

५९. **कुब्जिकातन्त्रम्**—अस्यानेका मातृकाः समुपलभ्यन्ते। वङ्गलिप्यां मुद्रिते ग्रन्थेऽत्रत्यानि वचनानि द्रष्टव्यानि। कुब्जिकामततो भिन्नोऽयं ग्रन्थोऽर्वाचीनश्च। न्यू० IV, पृ० १९९; ता० सा०, पृ० १३४-१३५ इत्यत्र अस्य ग्रन्थस्य समुपलब्धानां मातृकाणां विवरणं द्रष्टव्यम्।

६०. **कुब्जिकामतम्**—अस्याप्यनेका मातृकाः समुपलभ्यन्ते। कुब्जिकातन्त्रतो भिन्नोऽयं ग्रन्थः प्राचीनश्च। अस्य प्राचीनतमा मातृका ई० अष्टमशतकस्य समुपलब्धा!

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



कुलालिकाम्नायपदेनाऽपि प्रथितोऽयं ग्रन्थः। कुलालिकाम्नायतन्त्रं ता० सा०, पृ० १५० इत्यत्र विवृतम्। हालैण्डवासिनो डॉ० तूनगान्द्रियानप्रभृतयो विद्वांसोऽस्य संस्करणं सज्जीकुर्वन्तीति तत्र कार्यव्यापृतया डॉ० संयुक्तागुप्तदेव्या सूचिता वयम्। सार्धत्रिसहस्र-श्लोकात्मकं षट्सहस्रश्लोकात्मकं चेति संस्करणद्वयमस्य समुपलभ्यते। तत्र षट्सहस्र-संहिताया आद्यानि पञ्च पटलानि डा० जे० ए० शोतेरमनमहोदयेन सम्पाद्य प्रकाशितानि साम्प्रतमेव १९८२ ई० वर्षे। अभिनवगुप्तेनास्य (परा० अभि०, पृ० १८४) खण्ड-चक्रविचारप्रकरणं स्मर्यते। अस्य मातृका न्यू० IV, पृ० १९८-२००; ता० सा०, पृ० १३६-१३७, ने० वी०, भा० १, पृ० ५८-६६ इत्यत्र विवृताः सन्ति। ने० वी०, भा० १, पृ० ६६ इत्यत्र 'कुब्जिकामतषट्साहस्रटिप्पणी' इति, भा० २, पृ० २१६-२१७ इत्यत्र च 'षट्साहस्रम् (कुब्जिकामतम्)' इति ग्रन्थनामदर्शनात् षट्सहस्रश्लोकात्मकस्य संस्करणस्य मातृका इमा विज्ञायन्ते। प्रकाशनानन्तरमस्य विशिष्टं स्वरूपं प्रतीयेत। न्यू० IV, पृ० १९८-२०० इत्यत्रापि मातृकाविवरणं द्रष्टव्यम्। षट्सहस्रिका (३२५)-विवरणमपि नयनपदवीमानेतव्यम्।

६१. **कुलकमलम्**—महार्थमञ्जरीपरिमलेऽस्य श्लोक एकः समुद्धृत इत्यतोऽधिकं साम्प्रतं किमपि नोपलभ्यते।

६२. **कुलकालीविधिः**—कालिकाकुलापरपर्यायकालीकुलग्रन्थादभिन्नो भिन्नो वाऽयं ग्रन्थ इति न वक्तुं शक्यते। न्यू० IV इत्यत्र नैव विवृतोऽयं ग्रन्थः।

६३. **कुलक्रमोदयः**—तन्त्रालोकविवेके स्मृत एष ग्रन्थ इत्यतोऽधिकं न किमप्युपलभ्यते। योगिनीहृदयदीपिकादिषु स्मृतात् क्रमोदयग्रन्थादभिन्नो भिन्नो वाऽय-मिति परीक्षणीयतामर्हति न्यू० V, पृ० १२९ इत्यत्र क्रमोदयनाम्ना विवृतः।

६४. **कुलक्रीडावतारः**—तन्त्रालोकव्याख्यात्रा जयरथेनात्रत्याः केचन श्लोकाः संगृहीताः, येषु मुद्रा-पल्ली-ओवल्ली-पीठादीनां विवरणं वर्तते।

६५. **कुलगुह्वरम्**—गह्वर-गुह्वर-कुलगह्वर-कुलगुह्वर-कुलगह्वरशासनप्रभृति-भिर्नामभिः स्मर्यते एष एक एव ग्रन्थः। अभिनवगुप्तपादेन सादरमनेकेषु स्थलेषु, परिमले (पृ० १६५) च महेश्वरानन्देन स्मर्यत इति वर्तते वैशिष्ट्यमस्य ग्रन्थस्य। "कुलं शक्तिः समाख्याता गुह्वरं शक्तिमानपि। उभयोर्वेदनैकत्वं कथ्यते कुलगुह्वरम्॥" इति तत्र स्वयमेव कुलगुह्वरनामनिरुक्तिः प्रदर्शिता। ने० वी०, भा० २, पृ० २०४ इत्यत्र श्रीमतगह्वरपञ्चाशीतिका विवृता दृश्यते।

६६. **कुलचूडामणिः**—शिवसूत्रविमर्शिन्यां (पृ० २९) स्मृतः श्लोको मुद्रिते[1] कुलचूडामणिनिगमग्रन्थे नोपलभ्यते। अपि च, तत्रैव (पृ० २९) स्मृतं चूडामण्युक्तं

---

१. "आगतं शिववक्त्रेभ्यो गतं च गिरिजानने। मतं च वासुदेवस्य तस्मादागममुच्यते॥
निर्गतं गिरिजावक्त्राद् गतं च गिरिशश्रुतौ। मतं च वासुदेवस्य तस्मान्निगममुच्यते॥"
श्लोकद्वयमेतदागमनिगमलक्षणप्रतिपादकं बहुषु ग्रन्थेषूद्धृतं दृश्यते। क्वत्यमिति तु न ज्ञायते। लक्षणमेनमङ्गीकृत्यैव मुद्रितग्रन्थस्य निगमगर्भितं नाम स्थापितम्। परन्तु

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


खेचरीस्वरूपमपि तत्र न दृश्यते। अतः कलिकातामुद्रितः कुलचूडामणिनिगमग्रन्थः क्षेमराजस्मृताद् ग्रन्थाद् भिन्न एव। न्यू० IV, पृ० २३४ इत्यत्र, ता० सा०, पृ० १४१ इत्यत्र च मुद्रितस्यैव ग्रन्थस्य विवरणं वर्तते। कौलिकार्चनदीपिकाप्रभृतिषु मुद्रितो ग्रन्थ एव समुद्धृत इति भाति। अस्य ग्रन्थस्य हि० वि०, पृ० ७४० इत्यत्र विवृता सी ३९३२ संख्याका, अन्याश्च शारदालिपिमातृकाः परीक्षणीयाः।

६७. **कुलपञ्चाशिका**—क्षेमराजेन शिवसूत्रविमर्शिन्यां नेत्रोद्योते च स्मृत एष ग्रन्थो नेपालवीरपुस्तकालयसूच्यां (भा० १, पृ० ३८, ६९-७०) विवृताभ्यां कालिका-कुलपञ्चाशत्-कुलपञ्चाशिकामातृकाभ्यां तुलनीयः। उत्तरपीठोद्भूतः श्रीनाथावतारितः कालिकाकुलपञ्चाशन्नामा ग्रन्थो महार्थ(क्रम)दर्शनप्रतिपादक इति तत्रत्येन विवरणेन स्पष्टं विज्ञायते। पुष्पिकावाक्येषु कालिकाकुलमिति ग्रन्थनाम दृश्यते। किमेतानि कालिकाकुलपञ्चाशत्, कुलपञ्चाशिका, कालिकाकुलम्, कालीकुलमिति च कस्यचन एकस्यैव ग्रन्थस्य नामानि ग्रन्थान्तराणि वैतानीति मातृकादर्शनानन्तरमेव ज्ञातुं शक्येत। इंग्लैण्डनिवासिनो डॉ० मार्कडिचकोफस्कीमहोदयस्य सविधेऽस्या मातृका विद्यते। तत्र क्षेमराजोद्धृतास्त्रयोऽपि श्लोकाः समुपलभ्यन्ते।

६८. **कुलमूलावतारः**—ता० सा०, पृ० १४५ इत्यत्र महार्थमञ्जरीपरवर्तिन एव सर्वे ग्रन्था निर्दिष्टाः, यत्र हि स्मृत एष ग्रन्थः। शिवार्चनचन्द्रिका-सौभाग्यरत्नाकर-प्रभृतिग्रन्थानां कर्ता श्रीनिवासबुधोऽपि विद्यानन्दापरपर्यायो बहुशः स्मरति कुलमूला-वतारम्। कुलमूलरत्नपञ्चकावतारस्य रत्नपञ्चकावतारस्य च विवरणं ने०वी०, भा० १, पृ० ७२-७३; भा० २, पृ० ११७-११८ इत्यत्र दृश्यते। महार्थमञ्जरीपरिमलोद्धृतं वचन-मत्रान्वेषणीयम्। न्यू० IV, पृ० २३९ इत्यत्रापि मातृकाविवरणं द्रष्टव्यम्।

६९. **कुलयुक्तिः**—स्पन्दप्रदीपिकायामुद्धृतमेतत् शैवतन्त्रमिति ता० सा०, पृ० १४५ इत्यत्र दृश्यते। शैवेष्वपि कौलसम्प्रदायस्य ग्रन्थोऽयं प्रतिभाति। शिवसूत्रविम-र्शिन्यामपि स्मृत एषः। आधुनिकेन काशीनाथभट्टेनापि तन्त्रसिद्धान्तकौमुद्यां स्मृतोऽय-मिति न्यू० IV, पृ० २३९ इत्यतो ज्ञायते।

७०. **कुलरत्नमाला ( २५८ रत्नमाला)**—कुलरत्नमाला, रत्नमालाशास्त्रं चेत्येकस्यैव ग्रन्थस्य द्वे नामनी स्तः। "कुलरत्नमालायां साहस्रिकायाम्" (पर०, पृ० १६३) इति योगराजकथनेन सहस्रश्लोकात्मकोऽयं ग्रन्थ इति ज्ञायते। साहस्रिकं मतं कौलज्ञाननिर्णयेऽपि (पृ० ८३) स्मर्यते। कुलागमग्रन्थोऽयमत्र च मालिनीविजयतन्त्रं चर्च्यत इति तन्त्रालोकतद्विवेकाभ्याम्, कुलरत्नशास्त्रमेतत् सिद्धनाथपादकृतिरिति च

---

नैतत्प्राचीनाचार्यसम्मतम्। न च दृश्यते तादृशो विभागः प्राचीनेषु ग्रन्थेषु। सम्पूर्णं तान्त्रिकं वाङ्मयमागमपदेन, वैदिकं च निगमपदेन बोध्यते। तदनुसृत्यैव क्रमसम्प्रदायमूलग्रन्था अप्यागमपदेनैवाभिलप्यन्ते, येषां किल उपदेष्ट्री भवति काली कालसङ्कर्षिणी।, नात्र कुत्रापि निगमपदप्रयोगो लब्धप्रसरः। तस्मादुक्तं लक्षणं पराक्कालिकं मन्तव्यम्। तदानीमाविर्भूतेष्वेव च तन्त्रेषु तत् प्रवर्तते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



विद्यानन्दकृतार्थरत्नावलीपाठतो (पृ० २०५) विज्ञायते। सिद्धनाथपादस्य बहवः श्लोकास्तत्र समुद्धृता वर्तन्ते। ता० सा०, पृ० १४५ इत्यत्र निर्दिष्टा कुलरत्नमातृकासाहस्रिका, कुलरत्नमाला, कुलरत्नमालिकासाहस्रिका च एक एव ग्रन्थः प्रतीयते। कुलरत्नमातृकासाहस्रिका ज्ञानेश्वरकृता प्रपञ्चसारविवरणे समुद्धृतेति प्रश्नात्मकेन चिह्नेन सह तत्र लिखितम्।

७१. **कुलसारः**—आगमतत्त्वविलासे प्राणतोषिण्यां च कुलसारः स्मर्यते इति ता० सा०, पृ० १३६ इत्यतो ज्ञायते। अत्रैव कुलसारसंग्रहमातृका विवृता। ने० वी०, भा० १, पृ० ७७ इत्यत्रापि सा दृश्यते। नि० षो० इत्यत्र चतुष्षष्टितन्त्रेषु परिगणितमेतत् तन्त्रम्। न्यू० IV, पृ० २४२ इत्यत्रत्यं विवरणमपि द्रष्टव्यम्।

७२. **कुलाम्नायः**—नायं कस्यचन ग्रन्थस्य नाम स्यात्। कुलशास्त्रस्य पर्यायान्तरमेतम् प्रतीयते। कुलशास्त्रस्य कुलाम्नायस्य वा कस्मिन् ग्रन्थे एते श्लोकाः सन्तीति तु शोधसापेक्षम्।

७३. **कुलार्णवः**—न्यू० IV, पृ० ३४४-३४७; ता० सा०, पृ० १४७-१५० इत्यत्र कुलार्णवमातृकाणां विवरणं वर्तते। मुद्रितोऽप्ययं ग्रन्थः समुपलभ्यते। किन्त्वत्र संगृहीतान्युद्धरणानि मुद्रिते ग्रन्थे नोपलभ्यन्त इति मुद्रितकुलार्णवतन्त्रतो भिन्नः कश्चन तन्त्रग्रन्थ एष स्यात्। अथवा मुद्रितग्रन्थस्य प्राचीनं संस्करणमेतत्। अस्य ग्रन्थस्य शारदालिपिमातृकाः परीक्षणीया हि० वि० इत्यत्रान्यत्र च संगृहीताः।

**कैलाशसंहिता**—"मायादिक्षोभकोऽनन्तो महेश्वरसमन्वयात्" इति वचनं कैलाशसंहितायाः श० र० सं० (पृ० ५०) इत्यत्र स्मृतं वर्तते। न्यू० V, पृ० ७६-७७ इत्यत्रत्यं विवरणं च द्रष्टव्यम्। शिवपुराणस्य षष्ठी कैलाशसंहिता ख्यायते। तत्र वचनमिदमन्वेषणीयम्।

**कोमलवल्लीस्तवः**—महेश्वरानन्द(२३१)विवरणमवलोकनीयम्।

**कौलोत्तरागमः**—परा० अभि०, पृ० १५६ इत्यत्र आगमोऽयं स्मर्यते। एष चतुष्कलभट्टारकेण रचित इति न्यून० V, पृ० ११४ इत्यत्र वर्ण्यते। तन्न। चतुष्कलभट्टारकपदेन हि तत्र तन्नामकं बीजाक्षरं परामृश्यते। तस्य च वर्णनं कौलोत्तरादौ श्रीमदुच्छुष्मशास्त्रे च वर्तत इति हि तत्रत्यस्य ग्रन्थस्याभिप्रायः। कौलोत्तरागमस्य सार्धत्रिशतिकाख्या मैसूरमातृका तत्रैव निर्दिष्टा। सा च कालोत्तरस्य स्यात्।

७४. **क्रमकेलिः**—सिद्धनाथविरचितस्य क्रमस्तोत्रस्य क्रमकेलिनामकं व्याख्यानमभिनवगुप्तेन प्रणीतं प्रथितं विद्यते। तदुक्तं स्वयमेवानेन परात्रिंशिकाविवृतौ—"व्याख्यातं चैतन्मया तट्टीकायामेव क्रमकेलौ विस्तरतः" (पृ० २३६) इति। तत्पदेनात्र क्रमस्तोत्रस्य परामर्शः। डॉ० रस्तोगीग्रन्थे विस्तृतं विवरणमस्य द्रष्टव्यम्। "श्रीमत्सदाशिवपदेऽपि गतोग्रकालो भीमोत्कटभ्रुकुटिरेष्यति भङ्गभूमिः" इत्यत्रत्यः श्लोकार्धः शिवस्तोत्रावलीविवृतौ (पृ० १५९) क्षेमराजेन समुद्धृतः। न्यू० V पृ० १२५ इत्यत्रत्यं विवरणमपि द्रष्टव्यम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



७५. **क्रमरहस्यम्**—तन्त्रालोके तद्विवेके च समुद्धृतमेतद्वचनमित्यतोऽधिकं न किमपि ज्ञायतेऽस्य विषये। डॉ० रस्तोगीग्रन्थो (पृ० २३२-२३३) द्रष्टव्यः। किन्तु तत्रत्यमर्घपात्रादिविषयकं विवरणं परीक्ष्यैव ग्राह्यम्। न्यू० इत्यत्रास्य विवरणं नास्ति।

७६. **क्रमवासना (मुद्रिता)**—अत्रत्याः सर्वे श्लोका नित्याषोडशिकार्णवस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीययोगतन्त्रग्रन्थमालायां १९६८ ई० वर्षे प्रकाशितस्य परिशिष्टे स्थिते सुभगोदयवासनाग्रन्थे समुपलभ्यन्ते। सा च महेश्वरानन्दपरमगुरोः शिवानन्दस्य कृतिरिति सुभगोदयवासनाया एव नामान्तरं क्रमवासनेति विज्ञेयम्।

७७. **क्रमसद्भावः**—तन्त्रालोकविवेके महार्थमञ्जरीपरिमले च समुद्धृत एष ग्रन्थः। ताराभक्तिसुधार्णवेऽपि समुद्धृतोऽयमिति ता० सा०, पृ० १६२ इत्यत्र दृश्यते। ने० वी०, भा० १, पृ० ३७ इत्यत्र विवृतया कालिका(काली)कुलक्रमसद्भावमातृकया तुलनीयमत्रत्यमुद्धरणम्। सोऽयं ग्रन्थः शितिकण्ठेनापि स्मृत इत्यादिकं डॉ० रस्तोगीग्रन्थे (पृ० २३३-२३५) द्रष्टव्यम्।

७८. **क्रमसिद्धिः**—महार्थमञ्जरीपरिमले समुद्धृत इत्यतो नाधिकमस्य विषये ज्ञायते। डॉ० रस्तोगीग्रन्थोऽपि (पृ० २३९-२४१) द्रष्टव्यः।

७९. **क्रमसूत्रम्**—"तदुक्तं पूर्वगुरुभिः स्वभाषामयेषु क्रमसूत्रेषु"(पृ० ७८) इत्येवं प्रत्यभिज्ञाहृदये परिचयोऽस्य विद्यते। अत्रत्यस्य क्षेमराजीयस्य व्याख्यानस्योल्लेखो महार्थमञ्जरीपरिमले (पृ० १५९) विद्यते। प्रत्यभिज्ञाहृदये महार्थमञ्जरीपरिमले चास्य सूत्रत्रयं दृश्यते। नेपालवीरपुस्तकालयसूचीपत्रे (भा० १, पृ० ९३) विवृतः क्रमसूत्राधिकारः कश्चन भिन्न एव ग्रन्थो मन्तव्यः। डा० रस्तोगीग्रन्थोऽपि (पृ० २४२-२४३) द्रष्टव्यः।

८०. **क्रमस्तुतिः**—सौन्दर्यलहरीटीकायां सौभाग्यवर्धन्यामुद्धृता क्रमस्तुतिरेषा शम्भुनाथकृतक्रमस्तोत्रतो भिन्ना वर्तते। न्यू० V, पृ० १२८ इत्यत्रत्यं विवरणं द्रष्टव्यम्।

८१. **क्रमस्तोत्रम् (३८३ स्तोत्रभट्टारकः)**—सिद्धनाथकृतं क्रमस्तोत्रमभिनवगुप्तेन व्याख्यातं क्रमकेलिनाम्न्या व्याख्ययेति जानन्त्येव क्रमसम्प्रदायविदः। अस्य चतुर्दश श्लोका अद्यावधि उद्धृताः समुपलब्धाः। ज्ञानदीपविमर्शिन्यामपि क्रमस्तोत्रश्लोकाः समुद्धृता दृश्यन्ते। एतत् स्तोत्रद्वयं छन्दोभेदाद् भिन्नमेवास्ति। "अर्थः प्रमेयमिति क्रमस्तोत्रसंवादात्" (पृ० १४०) इत्येवं विज्ञानभैरवव्याख्यायां शिवोपाध्यायः किमपि क्रमस्तोत्रं स्मरति। अभिनवगुप्तकृतं च क्रमस्तोत्रम् 'अभिनवगुप्त०' इत्याख्ये ग्रन्थे (पृ० ९४८-९५१) मुद्रितं वर्तते। अन्या अपि क्रमस्तुतयः सन्ति। सिद्धनाथश्च स्तोत्रकार इति, शम्भुनाथ इति वा नाम्ना प्रसिद्ध इति च डॉ० रस्तोगीग्रन्थे (पृ० १३८-१४४) द्रष्टव्यम्। द्वादशश्लोकात्मकं स्तोत्रमेतत् साम्प्रतं सम्पूर्णमुपलभ्यत इति तु नास्मभ्यं रोचते, प्रथमभागेऽत्र चतुर्दशश्लोकानां दर्शनात्। ३८३. स्तोत्रभट्टारकविवरणमप्यत्र द्रष्टव्यम्, न्यू० V, पृ० १२८ इति च।

८२. **क्रमोदयः**—नि० उपोद्घाते(पृ० ३३)विवरणमस्य द्रष्टव्यम्। डॉ० रस्तोगी-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



ग्रन्थोऽपि (पृ० २४४-२४६) समवलोकनीयः। न्यू० V, पृ० १२९ इत्यत्र विवृतमेतत्। जयरथेन कुलक्रमोदयनाम्ना स्मृत इति च।

८३. **क्रियाकरणमण्डनम्**—शतरत्नसंग्रहे समुद्धृतोऽयं ग्रन्थः। क्रियाकारकमण्डनमिति नाम दृश्यते ता० सा०, पृ० १६४ इत्यत्र। क्रियाकरणं प्रसादशिवस्य कृतिरियमिति० न्यू० V, पृ० १२९ इत्यत्र विवृतम्।

८४. **क्रियाकालगुणोत्तरम्**—नेपालवीरपुस्तकालयेऽस्य ग्रन्थस्य मातृका विद्यते (भा० १, पृ० ९६-९८)। ता० सा०, पृ० १६४ इत्यत्र, न्यू०, V, पृ० १३१ इत्यत्र च सा विवृता। अत्रत्यानामुद्धरणानां संवादेन ज्ञायेत यदुपलब्धा मातृकाऽस्यैव ग्रन्थस्येति।

८५. **खेटकनन्दनः (३३७ सद्योज्योतिः, ३५३ सिद्धगुरुः)**—खेटकनन्दनखेटपाल-सद्योज्योतिः-सिद्धगुरुप्रभृतिनामभिरेष एवाचार्यः स्मर्यते। मतङ्गपारमेश्वरव्याख्याने च रामकण्ठेन खेटकबाल इति नाम्ना स्मृतः। सम्पादकीयं वक्तव्यं तत्रत्यं द्रष्टव्यम्[1]। न्यू० V, पृ० १८८-१८९ इत्यत्र अस्याचार्यस्य ग्रन्थानां च विवरणं द्रष्टव्यम्। एतेषु भोगकारिका, मोक्षकारिका, परमोक्षनिरासकारिका, तत्त्वत्रयनिर्णयः, तत्त्वसंग्रहः, नरेश्वरपरीक्षा चेत्येते ग्रन्था मुद्रिता वर्तन्ते। सुवृत्तिः (रौरवतन्त्रवृत्तिः), स्वायम्भुववृत्तिः, मन्त्रवार्त्तिकं चेत्युद्धरणमुखेन ज्ञायते। एतेषु तत्त्वसंग्रहाख्यं प्रकरणं तेन रौरवागमस्य सुवृत्तिमवलम्ब्य, तत्त्वत्रयनिर्णयाख्यं च स्वायम्भुवागमस्य वृत्तिमनुसृत्य निर्मितमिति तद्वचनत एवं ज्ञायते। उग्रज्योतिःशिष्यः सद्योज्योतिरयं सिद्धान्तशैवागमानां प्रथमो व्याख्याता पद्धतिकारश्च।

८६. **गमशास्त्रम्**—गमशास्त्रम्, गमशासनम्, श्रीगम इत्यादिनामभिः स्मर्यते तन्त्रालोके तद्विवेके चायं ग्रन्थः। श्रीनिगम इत्यपि नामान्तरं तस्य तन्त्रालोके (१९।१४१) एव दृश्यते।

८७. **गीतानिष्यन्दः (क्षेमेन्द्रस्य)**—नि० उपोद्घाते (पृ० ३४-३५) विवरणमस्य द्रष्टव्यम्। न्यू० VI, पृ० ४०८ इत्यनेन ज्ञायते यद् अड्यार लाइब्रेरी बुलेटिन, VI ३.२०५ इत्यत्र निर्दिष्टोऽयं ग्रन्थ इति।

८८. **गुप्ततन्त्रम्**—गुप्ततन्त्रमिदं क्षेमराजेन नेत्रतन्त्रोद्योते द्वितीये भागे २३०-२३३ पृष्ठेषु स्मर्यते, तद्वचनानि च समुद्ध्रियन्ते। अश्वक्रान्ताविभागे च गुप्ततन्त्रं परिगण्यते। गुप्तसाधनतन्त्रं च सर्वोल्लासतन्त्रनामावल्यां वर्तते। अस्यानेका मातृकाः

---

१. न सर्वत्र मुद्रणाशुद्धिरेकविधा प्रवर्ततेति खेटपालनाम्नोऽपि मूलं मृग्यम्। खेटपदस्य खेटकपदस्य वा स्थानविशेषवाचित्वेन शिलालेखादिषु स्मरणात्, पदयोरनयोर्वंशपरत्वेनापि योजयितुं शक्यत्वाच्च तत्पालकतया तन्नन्दकतया तद्बालकतया वा सर्वाण्येतानि पदानि तत्र संगमनीयानि। अथवा खेटपाल इति क्षेत्रपालशब्दस्य विकृतं स्वरूपं स्यात्। सद्योज्योतिर्बृहस्पती शैवाचार्यौ वन्द्येते मोक्षकारिकावृत्तिकर्त्रा रामकण्ठेन। बृहस्पतिश्च स्वकीये शिवतनुशास्त्रे महान्तं महिमानं वर्णयति भैरवस्य। गणेशवटुकक्षेत्रपाश्च पूज्यन्ते पूजारम्भेऽस्मिन् सम्प्रदाये।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



समुपलभ्यन्ते। मुद्रितं चापीदं तन्त्रं साम्प्रतमुपलभ्यते। किन्तु क्षेमराजस्मृतानि वचनानि तत्र न दृश्यन्त इति गुप्तसाधनतन्त्रं गुप्ततन्त्रात् पृथगेव मन्तव्यम्। अश्वक्रान्ताविभागीयगुप्ततन्त्रस्य किं स्वरूपमित्यप्यनुसन्धानसरणिपतितमेव साम्प्रतम्। न्यू० VI, ४०९ इत्यत्र पूर्ववन्निर्दिष्टम्।

८९. **गुह्ययोगिनीतन्त्रम्**—तन्त्रमेतत् परात्रिंशिकाविवृतावभिनवगुप्तेन स्मृतमित्यतोऽधिकमेतद्विषये किमपि न ज्ञायते। नि० षो० परिगणितेषु ६४ तन्त्रेषु गुह्यतन्त्रं वर्तते।

९०. **चतुष्कपञ्चाशिका**—तन्त्रालोके स्मृत एष ग्रन्थः। तद्विवेके च—"चतुष्कपञ्चाशिकयेति सृष्ट्यादिप्रमेयचतुष्टयाभिधायिना एवंपरिमाणेन ग्रन्थविशेषेणेत्यर्थः" (पृ० ३४४) इति तस्य परिचयो दत्तः। एवं च श्लोकानां द्विशती ग्रन्थेऽस्मिन् स्यात्। तत्र च प्रत्येकं पञ्चाशिकया प्रमेय एको व्याख्यात इति प्रतीयते। अथवा सृष्ट्यादिप्रमेयचतुष्टयं यस्यां पञ्चाशिकायां व्याख्यातमिति व्युत्पत्तौ कृतायां पञ्चाशच्छ्लोकात्मक एष ग्रन्थ इत्यपि वक्तुं शक्यते। परात्रिंशिकाव्याख्यायां (पृ० १५६) स्मृतेन चतुष्कलभट्टारकेणास्य ग्रन्थस्य कश्चन संवन्धो वर्तते न वेति परीक्षणीयम्। न्यू० इत्यत्र नैव विवृता।

९१. **चन्द्रगर्भः**—स्वच्छन्दोद्योते क्षेमराजेन समुद्धृत इत्यतोऽधिकं ग्रन्थस्य अस्य विषयेऽन्यत् किमपि न ज्ञायते। न्यू० VI, पृ० ३४९ इत्यत्र बौद्धग्रन्थविवरणं दृश्यते, नास्य शैवतन्त्रस्य।

९२. **चन्द्रज्ञानम्**, ९३. **चन्द्रज्ञानविद्या**—चन्द्रज्ञानं चन्द्रज्ञानविद्या च नि० उपोद्घाते (पृ० २६-२७) चतुष्षष्टितन्त्रपरिचयप्रसङ्गे विस्तरेण विवृते। ता० सा०, पृ० २०४-२०५ इत्यत्रत्यं विवरणं न्यू० VI, पृ० ३५३ इति च द्रष्टव्यम्। काशीहिन्दूविश्वविद्यालयस्थाश्चन्द्रज्ञानमातृकाः सी ६५४, सी, ४७२८, सी ४२४३, सी १०४, सी ९०२ संख्याका अपि परीक्षणीयाः (पृ० १३४, ३४०, ७४४)। न्यू० VI, पृ० ३५३ इत्यत्र चन्द्रज्ञान-चन्द्रज्ञानविद्या-चन्द्रज्ञानागमसंग्रह-चन्द्रज्ञानार्णवसंग्रहमातृकाणां विवरणं द्रष्टव्यम्।

**चन्द्रानन्दः**—"पश्यतो रूपमालेखाद् भातो भानानुषङ्गि यत्। स्वरूपभानं प्रतिभा भावानां स्वात्मसंश्रया॥" इति भट्टचन्द्रानन्दस्य वचनमभिनवगुप्तेन ई० प्र० वि० वि०, भा० २, पृ० ३००, ३३९ इत्यत्र समुद्धृतम्। न्यू० VI, पृ० ३७४ इत्यत्रत्यं विवरणं द्रष्टव्यम्।

९४. **चरणसूत्रम्**—अड्यारपुस्तकालये ६२१०९ संख्याका पादसूत्रमातृका वर्तते। नामसाम्येऽपि तत्र चरणसूत्रस्थाः श्लोका इमे नोपलभ्यन्त इति परीक्षितमस्माभिः। न्यू० इत्यत्र न विवृतम्।

९५. **चिच्छक्तिसंस्तुतिः (२५३ योगिनाथः)**—"उक्तं च योगिनाथेन ह्येतच्चिच्छक्तिसंस्तुतौ" (पृ० ८७) इति स्पन्दप्रदीपिकावचनेन ग्रन्थ एष योगिनाथकृतिरिति



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



ज्ञायते। योगिनाथस्य वचांसि तन्नाम्नाऽपि संगृहीतान्यत्रैव। ग्रन्थस्य ग्रन्थकारस्य वा विषयेऽन्यत् किमपि न ज्ञायते।

९६. **चिल्लाचक्रेश्वरीमतम्**—जन्ममरणविचारेऽपि समुद्धृत एष ग्रन्थ इति ता० सा०, पृ० २१० इत्यत्र दृश्यते। चिल्लाचक्रेश्वरमतनाम्ना स्थलद्वये (पृ० ४,९-१०) तत्र कानिचन वचनानि समुद्धृतानि। सर्वाणि वचनान्येतानि कस्यचन एकस्यैव ग्रन्थस्येत्यस्य निर्णयो ग्रन्थप्राप्त्यनन्तरमेव कर्तुं शक्येत। न्यू० इत्यत्र नैव विवृतम्।

९७. **जयद्रथाधिकारः**—जयद्रथयामलस्य २४००० श्लोकात्मकस्य मातृका नेपालदेशे समुपलभ्यन्ते। तदभिन्न एष ग्रन्थो भिन्नो वेति न साम्प्रतं किमपि वक्तुं शक्यते। एतदर्थं न्यू० VII, पृ० १७९ इत्यत्र विवृता मातृका परीक्षणीया। पिङ्गलामतं जयद्रथयामलं च ब्रह्मयामलस्य परिशिष्टे इति प्रतिपादयति डॉ० बागचीमहोदयः "स्टडीज इन दि तन्त्राज" (पृ० ७) इत्यत्र। जयद्रथयामलमेव शिरश्छेदनाम्नाऽपि प्रसिद्ध्यतीति तत्रैव प्रतिपादयति सः (पृ० ८)। श्रीकण्ठ्यां शिखाष्टकेषु शिरश्छेदस्य परिगणनं दृश्यते। अत्र च—"भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामलमहा-तन्त्रे" इत्येवं पुष्पिका वर्तते। ने० वी०, भा० १, पृ० २४३ इत्यत्र "पिङ्गलामते जयद्रथाधिकारे" इत्येवं पिङ्गलामतमातृकापुष्पिकावाक्येषु दृश्यते। एष एव ग्रन्थो नारायणकण्ठेन स्मृतः स्यात्। पिङ्गलामतं शैवोपागमेषु श्रीकण्ठीपठितेषु चतुष्षष्टितन्त्रेषु च दृश्यते।

९८. **जयरथगुरुः**,९९ **जयरथपरमगुरुः**—जयरथगुरोः शृङ्गाररथस्य,परमगुरोश्च गुणरथस्य विषये डा० रस्तोगीग्रन्थो (पृ०२०९-२१५) द्रष्टव्यः। तत्र टिप्पणीषु स्थिता अन्ये ग्रन्थाश्चावलोकनार्हाः सन्ति। अस्य परमेष्ठिगुरोः परिचयोऽपि तत्रैव (पृ० १८९-१९०) वर्तते। न्यू० VII, पृ० १८६-१८७ इत्यत्र जयरथस्य तद्ग्रन्थानां च परिचयो द्रष्टव्यः।

१००. **जयाख्यसंहिता (मुद्रिता)**- ग्रन्थ एष गायकवाड़संस्कृतग्रन्थमालायां मुद्रितः (प्रथमं संस्करणं १९३१ ई०, द्वितीयं संस्करणं १९६७ ई० वर्षे) समुपलभ्यते। अत्रत्याः सर्वे श्लोकास्तत्र विद्यन्ते। एष पाञ्चरात्रवैष्णवागमग्रन्थश्चन्द्रदत्तेन रचित इति नेपालसूचीतो ज्ञायत इति प्रतिपादयति श्रीमान् चिन्ताहरणचक्रवर्तिमहोदयः स्वकीये "तन्त्राज्०" इत्याद्याख्ये ग्रन्थे (पृ० २६)। ता० सा०, पृ० २१७ इत्यत्रापि द्रष्टव्यमेतत्। वीरपुस्तकालयसूच्यामस्य नाम चन्द्रमित्र इति दृश्यते (भा० १, पृ० १३९)।

१०१. **जाबालिसूत्राणि**—स्पन्दप्रदीपिकायामुद्धृत एष ग्रन्थः पाञ्चरात्रसम्प्र-दायस्य प्रतीयते। अन्यत्तु किमपि न ज्ञायतेऽस्य विषये।

१०२. **ज्ञानगर्भस्तोत्रम्**—काशीहिन्दूविश्वविद्यालयपुस्तकालये नारायणमुनि-विरचितस्य ज्ञानगर्भस्तोत्रस्य बी ९०० संख्याका शारदालिपिमयी मातृका विद्यते। तत्र न दृश्यन्तेऽत्र संगृहीताः श्लोका इति भिन्न एव स ग्रन्थो मन्तव्यः। न्यू० VII, पृ० ३२१-३२२ इत्यत्र तानि स्थलानि निर्दिष्टानि, यत्र हि स्तोत्रस्यास्य श्लोकाः समुपलभ्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



१०३. **ज्ञानतिलकम्**—कालज्ञानतिलकमस्य नामान्तरमिति ता०सा०, पृ० २२० इत्यत्र दृश्यते। अत्रैव त्रिविधा अस्य मातृका विवृताः। न्यू० VII, पृ० ३२४ इत्यपि द्रष्टव्यम्। शतरत्नसंग्रहोक्तमत्रत्यं वचनमेतासु मातृकास्वन्वेषणार्हम्। अत्र वेदान्त-तन्त्र-बौद्ध-जैनसम्प्रदायेषु ज्ञानतिलकनाम्ना प्रसिद्धस्य ग्रन्थस्य मातृकाणां विवरणं वर्तते।

१०४. **ज्ञानदीपविमर्शिनी**—नि० उपोद्घातो द्रष्टव्यः (पृ० ३५)। तत्र प्रदर्शिताभ्यस्तिसृभ्यो मातृकाभ्यो भिन्ना चतुर्थी मातृकाऽस्य ग्रन्थस्य उदयपुरस्थराजस्थानप्राच्यविद्याप्रतिष्ठानपुस्तकालये वर्तते। अस्माकं सविधे बड़ोदा-त्रावणकोरमातृकयोः प्रतिलिपी स्तः। न्यू० VII, पृ० ३२५ इत्यत्र विवृतेन हस्तलेखेन ज्ञायते यदियं मातृका १३८०-९४ ई० वर्षेषु लिखितेति। अत्रैव विद्यानन्दस्य स्वात्मानन्द इति नामान्तरं दृश्यते। शिवानन्दस्यापि गुरुर्वर्तते स्वात्मानन्दः। नित्याषोडशिकार्णवेऽनयोर्व्याख्याभेददर्शनाद् गुरुशिष्यभावो न साधयितुं शक्यत इति शिवानन्दस्य गुरुः स्वात्मानन्दो विद्यानन्दतो भिन्न एव।

१०५. **ज्ञानसम्बोधः**—स्पन्दप्रदीपिकायामुद्धृतान्यत्रत्यानि वचनानीत्यतोऽधिकं किमपि न ज्ञायते। अन्तिमोद्धरणानन्तरं विद्यमानाः श्लोका अपि (पृ० १२०-१२१) अस्यैव ग्रन्थस्य स्युरिति वयं संभावयामः।

१०६. **ज्ञानसारः**—नि० उपोद्घाते (पृ० ३५) द्रष्टव्यम्। ता० सा०, पृ० २२२ इत्यत्र, न्यू० VII, पृ० ३४१ इत्यत्र च मातृकाविवरणं वर्तते। काशीहिन्दूविश्वविद्यालयस्था मातृका अपि परीक्षणीयाः (पृ० ७४४)। न्यू० VII, पृ० ३४१ इत्यत्र च विविधसम्प्रदायानां विषयाणां च मातृका एतन्नाम्नैव विवृताः सन्ति।

१०७. **ज्ञानामृतरसायनम्**—शिवोपाध्यायेन विज्ञानभैरवविवृतौ स्मृतमेतत्। ता० सा०, पृ० २२३ इति, न्यू० VII, पृ० ३४५ इति च द्रष्टव्यम्। ज्ञानामृतसार-(नारदपाञ्चरात्र)नामकात् पाञ्चरात्रग्रन्थाद् भिन्न एष ग्रन्थः।

१०८. **ज्ञानेन्दुकौमुदी**, २९३. **विज्ञानेन्दुकौमुदी**—उभावपि ग्रन्थौ महार्थमञ्जरीपरिमले समुद्धृतौ। ताविमौ अभिन्नौ भिन्नौ वा ग्रन्थाविति निश्चेतव्यम्। उभयत्र छन्दोभेदाद् ग्रन्थयोर्भिन्नता प्रतीयते, नामसाम्याच्चाभिन्नता। न चोपलभ्यते काचन मातृका।

१०९. **ज्ञानोत्तरम्**, ३४१. **सर्वज्ञानोत्तरम्**—"ज्ञानोत्तरे इति सर्वज्ञानोत्तरे" (९।४५) इति वदन् जयरथो ज्ञानोत्तरं सर्वज्ञानोत्तरं चाभिन्नमेव तन्त्रमङ्गीकुरुते। नि० उपोद्घाते (पृ० २९) विवरणमस्य द्रष्टव्यम्, ता० सा०, पृ० २२५, न्यू० VII, पृ० ३५० इत्यत्र च। अत्र काशीहिन्दूविश्वविद्यालयस्था सी ९९ संख्याका शारदालिपिमयी ज्ञानोत्तरयोगशास्त्रमातृकाऽपि परीक्षणीया (पृ० २१६)। मुद्रितं च समुपलभ्यते सर्वज्ञानोत्तरम्। अघोरशिवाचार्यकृतसर्वज्ञानोत्तरवृत्तिमातृका आ० I, पृ० ७०१ इत्यत्र विवृता, सर्वज्ञानोत्तरस्य च आ० II, पृ० १६७; आ० III, पृ० १४५ इत्यत्र।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



**डाकिनीतन्त्रं डामरतन्त्रं च**—डाकिनीतन्त्रं नेत्रोद्योते (भा० २, पृ० २३३) स्मृतम् । ता० सा०, पृ० २२७; न्यू० VIII, पृ० ६ इत्यत्र च कस्यचन डाकिनीतन्त्रस्य मातृका विवृता । डामरतन्त्रं च मालिनीवार्त्तिके (पृ० १६) स्मर्यते—

तदुक्तं परमेशेन तन्त्रे श्रीडामराभिधे ॥ १५५ ॥
निरुद्धय रश्मिचक्रं स्वं पीत्वाऽमृतमनुत्तमम् ।
कालोभयापरिच्छिन्ने वर्तमाने सुखी भवेत् ॥ १५६ ॥

ता० सा०, पृ० २२७-२२८ इत्यत्र, न्यू० VIII, पृ० ७-८ इत्यत्र च बह्वयो मातृका विवृताः ।

**११०. तत्त्वगर्भस्तोत्रम् (भट्टप्रद्युम्नस्य)**—अखिलभारतीयप्राच्यविद्यापरिषदो द्वाविंशतितमे गोहाटीनगरे सम्पन्नेऽधिवेशने पण्डितपरिषदि पठिते "त्रिपुरादर्शनस्या-परिचिता आचार्याः कृतयश्च" इत्याख्ये निबन्धे सर्वप्रथममस्माभिस्तत्त्वगर्भस्तोत्रं प्रद्युम्न-भट्टकृतिरिति निर्दशितमासीत् । रामकण्ठकृतस्पन्दवृत्तावुद्धृता अन्येऽपि केचन श्लोका अस्य स्तोत्रस्य स्युरिति संभाव्यते । भट्टप्रद्युम्नस्य तत्स्तोत्रस्य च विषयो डॉ० रस्तोगीग्रन्थे (पृ०१२२-१२८) विस्तरेण विवेचित इति तत्रैव द्रष्टव्यम् । मुद्रिते हि०वि० सूचीपत्रेऽस्य मातृका न दृश्यते ।

**१११. तत्त्वयुक्तिः**—स्पन्दप्रदीपिकायामुद्धृत एष कश्चन शैवागमग्रन्थः स्यात्, 'पार्वति' इति विशेषणस्य तत्र दर्शनात् ।

**११२. तत्त्वरक्षाविधानम्**—स्पन्दप्रदीपिकायां तन्त्रालोकविवेके च वचनान्यस्य दृश्यन्ते ।

**११३. तत्त्वविचारः**—"ग्रन्थकृताऽप्युक्तं तत्त्वविचारे" (पृ० ९०) इति, "ग्रन्थ-कृता तत्त्वविचारेऽप्युक्तम्" (पृ० ११४) इति च स्पन्दप्रदीपिकावचनात् कल्लटस्येयं कृतिरिति ज्ञायते । अत्रैव—

शक्तिप्रसरसंकोचनिबद्धावुदयव्ययौ ।
यस्यात्मा स शिवो ज्ञेयः सर्वभावप्रवर्तकः ॥

इत्यधिकः श्लोको दृश्यतेऽस्यैव ग्रन्थस्य ।

**११४. तत्त्वविमर्शिनी**—नि० उपोद्घाते (पृ० ३६) विवृतमेतत् । अन्त्येष्टि-विधिनिरूपिका तत्त्वविमर्शिनी, उपमन्युविरचिता काशिकाटीकायुता च तत्त्वविमर्शिनी ता० सा०, पृ० २३१ इत्यत्र सूचिता । एते च मातृके अमृतानन्दस्मृततत्त्वविमर्शिनीतो भिन्ने एव स्याताम् ।

**११५. तत्त्वार्थचिन्तामणिः (कल्लटकृतिः)**—कल्लट(४७)विवरणम्, तत्त्व-विचार(११३)विवरणं च द्रष्टव्यम् । "अत एव श्रीभट्टकल्लटेन प्राणाख्यनिमित्तदार्ढ्यम्, प्राक् संवित् प्राणे परिणतेति तत्त्वार्थचिन्तामणावुक्तम्" (शिव० विम०, पृ० ६८) "चिन्तामणाविति तत्त्वार्थचिन्तामणौ" (त० वि० १६।५१) इत्यादिषु स्थलेषु कल्लटस्य

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तत्त्वार्थचिन्तामणिनामा ग्रन्थोऽयं स्मर्यते। एष च ग्रन्थः शिवसूत्रव्याख्यानात्मक इति कल्लट(४७)विवरणे समुपस्थापितेन वचनेन ज्ञायते। तेन ता० सा०, पृ० २३३ इत्यत्र स्पन्दसूत्रस्य व्याख्यानमिति कथनं शिवसूत्रस्येति कृत्वा संशोधनीयम्। ता० सा०, पृ० २३४ विवरणानुसारं प्रत्यभिज्ञाहृदये तदस्योद्धरणमन्वेषणीयम्। डा० रस्तोगीग्रन्थोऽपि (पृ० १११-१२०) द्रष्टव्यः।

११६. **तन्त्रम्**—तन्त्रनाम्नाऽत्र प्रथमभागे श्लोकद्वयं शतरत्नसंग्रहाद् गृहीतम्। तत्र (पृ० ९४) तन्त्रनाम्नैव—"इदं देवि न दातव्यं ज्ञानसद्भावमुत्तमम्। दुर्विदग्धे शठे क्रूरे अन्यायपथवर्तिनि॥" इत्येष श्लोकोऽपि दृश्यते। सर्वाणीमानि वचनानि कस्यचन एकस्यैव सिद्धान्तशैवग्रन्थस्य स्युः, प्रकरणानुरोधात्।

११७. **तन्त्रराजः**, ११८. **तन्त्रराजभट्टारकः**—तन्त्रराज(कादिमत)तन्त्रस्य सटीकस्यानेका मातृकाः समुपलभ्यन्ते (ता० सा०, पृ० २४२-२४३)। सुभगानन्दनाथकृतमनोरमाख्यया टीकया सह ग्रन्थोऽयं मुद्रितोऽपि विद्यते। नवनित्यातन्त्राणां (१।२) नित्या(योगिनी)हृदयस्य (३६।१३) चात्र स्मरणात् तदेतत् तन्त्रराजतन्त्रमर्वाचीनमिति नि० उपोद्घाते (पृ० १२-१३) द्रष्टव्यम्। तन्त्रालोकविवेके स्मृतस्य तन्त्रराजस्य तन्त्रराजभट्टारकस्य वा वचनान्यस्मिन् मुद्रिते ग्रन्थे नोपलभ्यन्त इत्यतोऽप्यर्वाचीनत्वं मुद्रिततन्त्रराजग्रन्थस्य बोध्यते। त्रयोदशविधा काली प्राचीने तन्त्रराजतन्त्रे प्रतिपादितेति निश्चितं तस्य क्रमागमत्वं मन्तव्यम्, यथा हि प्रतिपादितं डा० कान्तिचन्द्रपाण्डेयमहोदयैः स्वकीयेऽभिनवगुप्ताख्ये (पृ० ४७१) ग्रन्थे। एवं चाभिनवस्य तन्त्रराजतन्त्रस्याधारेण डॉ० जानवुडरफमहोदयेन यदुक्तं तदाधारीकृत्य कृतं डॉ० रस्तोगीप्रतिपादनं (पृ० २४१) चिन्त्यम्। "आगम आणि तन्त्रशास्त्र" इत्यस्मिन् निबन्धे डॉ० वुडरफविषये यदुक्तमस्माभिस्तदप्यत्रावलोकनीयम्। तन्त्रराजभट्टारकोद्धरणे द्वितीये आदिषट्कं स्मर्यते। उत्तरषट्कवदेतदपि स्वतन्त्रः कश्चन ग्रन्थः स्यात्। "श्रीतन्त्रराजभट्टारकेऽप्यस्य लक्षोच्छ्रितत्वमुक्तम्" (८।२१), "अत एव श्रीतन्त्रराजभट्टारके शेषाहित्वेनायमुक्तः" (८।२१) इत्येवं भुवनाध्वविवेचनप्रकरणे ग्रन्थोऽयं स्मर्यते जयरथेन। "श्रीमाधवकुले इति श्रीतन्त्रराजभट्टारकग्रन्थैकदेशभूते इत्यर्थः। अत्र हि केषाञ्चन गुरूणां श्रीदेव्यायामलश्रीमाधवकुलार्थसंमेलनया सम्प्रदायः समस्ति" (२९।५६) इत्यत्र च जयरथो माधवकुलं तन्त्रराजभट्टारकप्रकरणं मन्यते। डॉ० रस्तोगी (पृ० ७३) माधवकुलं क्रमग्रन्थमङ्गीकरोति। तेन तन्त्रराजग्रन्थस्य क्रमग्रन्थत्वं सुतरां सिद्ध्यति। अथवाऽऽगमकोटिके ग्रन्थेऽस्मिन् सिद्धान्त-क्रम-कुलप्रभृतीनि[1] मतमतान्तराणि सहैव प्रतिपादितानि स्युः। न्यू० VIII, पृ० ९२-९३ इत्यत्र विवृता मातृका अपि परीक्षणीयाः।

---

१. "महार्थत्रिकदर्शनयोर्नात्यन्तं भेदप्रथा" (पृ० ९२) इति वक्ति महार्थमञ्जरीकारः। कौलदर्शनतोऽप्यस्य नैव वैलक्षण्यमित्यप्युक्तं तेनैव—"अस्यामर्थस्थितिः सैव या सर्वत्र कुलागमे। किन्तु शब्दस्य शय्यान्या नात्यन्तं सा विभिद्यते॥" (पृ० १९२) इति। एवं च क्रम-कुल-त्रिकदर्शनानामन्योन्यं नात्यन्तं भेदप्रथा। अत एवाभिनवगुप्तपादः सममेव सिद्धान्तदर्शनेन सर्वानेतान् सम्प्रदायान् तन्त्रालोके विवृणोति। तन्त्रराजसदृशेष्वागमयामलादिग्रन्थेष्वप्येवमेव कृतं स्यात्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



११९. **तन्त्रसद्भावः**[1]—नि० उपोद्घाते (पृ० ३७) द्रष्टव्यम् । अत्रत्यानि भूयांसि वचांसि तन्त्रालोके तद्विवेके च संगृहीतानि सन्ति । सद्भावशासनमस्यैव नामान्तरम्, "सद्भावशासने इति तन्त्रसद्भावे" (२९।२११) इति जयरथवचनात् । ता० सा० पृ० २३२ इत्यत्र विवृतं तत्त्वसद्भावतन्त्रमितो भिन्नमभिन्नं वेति परीक्षणीयम् । श्रीतन्त्रसद्भावस्य मातृका ने० वी०, भा० २, पृ० २०४ इत्यत्र विवृता वर्तते । अस्याश्छायाप्रतिलिपिर्वर्तते डॉ० मार्कंडिच्कोफस्कीमहोदयस्य सविधे । तत्र तन्त्रसद्भाववचनानीमान्युपलभ्यन्ते । न्यू० VIII, पृ० ९७ इत्यपि द्रष्टव्यम् ।

१२०. **तन्त्रसमुच्चयः**—ग्रन्थोऽयमभिनवगुप्तेन परात्रिंशिकाविवृतौ स्मर्यते । ता० सा०, पृ० २४४ इत्यत्र द्विविधा तन्त्रसमुच्चयमातृका विवृता । काशीहिन्दूविश्वविद्यालयस्था बी २२९८ संख्याका मातृकाऽपि परीक्षणीया । तन्त्रोच्चयस्य अभिनवगुप्तकृतेर्मातृकाऽपि तत्र सी १०२० संख्याका वर्तते । अभिनवगुप्तपरिचयो डॉ० रस्तोगीग्रन्थे (पृ० १५७-१६५) द्रष्टव्यः, न्यू० I, पृ० ३००-३०२, VIII, पृ० ९७-९८ इत्यत्र च । अभिनवगुप्तविषये डॉ० कान्तिचन्द्रपाण्डेयविरचितः "अभिनवगुप्त०" इत्याख्यः, डॉ० वी० राघवन्विरचितः "अभिनवगुप्त एण्ड हिज वर्क्स" इति ग्रन्थश्च द्रष्टव्यः ।

१२१. **तपस्विराजः**—जयरथेन तपस्विनाम्ना शिवोपाध्यायेन च तपस्विराजनाम्ना स्मर्यतेऽयम् । क्रमदर्शनस्यायमाचार्यः स्यात् । अस्य ग्रन्थस्य गुरुपरम्परायाश्च विषये न किमपि ज्ञायते । न्यू० इत्यत्र विवरणं नास्ति ।

१२२. **तिमिरोद्घाटः**—नि० उपोद्घाते (पृ० ३७) विवरणमस्य द्रष्टव्यम् ।

१२३. **तोतुलागमः**—अयमागमः क्षेमराजेन स्वच्छन्दोद्योते, क्रियाकालगुणोत्तरेण सह च नेत्रोद्योते स्मर्यते । चतुष्षष्टितन्त्रेषु स्थितं त्रोतलं त्रोतुलं वाऽस्यैव नामान्तरं स्यात् (नि० उपोद्घाते, पृ० २९) । प्र० सा० (२।११५) इत्यत्र गारुडतन्त्रेषु तोत्तलं तोतलं वा तन्त्रं परिपठ्यते । न्यू० इत्यत्र न विवृतम् ।

१२४. **त्रिककुलम्**, १२५ **त्रिकरत्नकुलम्**—तन्त्रालोकविवेके त्रिककुलनाम्ना यत् स्मृतं तदेव परात्रिंशिकाविवृतौ त्रिकरत्नकुलनाम्ना स्मर्यत इति संभावयितुं शक्यते । न्यू० इत्यत्र नैव विवृतम् ।

---

१. "तन्त्रसद्भावे कथिता परमेशिना" (तन्त्रा० २०।१२) इति वचनात्, वरारोहे प्रिये देवि उमे सुरनायिके—इत्यादिसंबोधनपददर्शनाच्चागमग्रन्थोऽयं प्रतीयते । डॉ० कान्तिचन्द्रपाण्डेयश्च अभिनवगुप्त० इत्याख्ये ग्रन्थे पृ० ५८३ तन्त्रसद्भावशासनमभिनवगुप्तगुरुणा सुमतिशिष्यपरम्परासम्भूतेन शम्भुनाथेन विरचितमिति वक्ति । तत्र च—"तन्त्रसद्भावशासने य उक्तः शम्भुनाथेन" (तन्त्रा० ३०।९९) इत्यभिनवगुप्तवचनमेव प्रमाणीक्रियते । "शम्भुनाथेनोपदिष्टां दृष्टां सद्भावशासने" (२९।२१२) इति वचनमपि तदनुगुणमेव । शम्भुनाथपदेनात्र भगवान् शिव एव ग्राह्य इत्येकः पन्थाः । श्रीमता चिन्ताहरणचक्रवर्तिना प्रदर्शितश्चान्यः । स चास्माभिः शक्तिसङ्गमचतुर्थभागस्य उपोद्घाते (पृ० ८-९) सम्यग् व्याख्यातस्तत्रैव द्रष्टव्यः ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



१२६. **त्रिकशासनम् ३२६ षडर्धशास्त्रम्**—त्रिकशासनं त्रिकशास्त्रं षडर्धशास्त्रं वा तन्त्रालोके, तद्विवेके, परात्रिंशिकाव्याख्यायां च बहुषु स्थलेषु स्मर्यते। एतन्नामकः कश्चन स्वतन्त्रो ग्रन्थो विद्यते, अथवा त्रिकसारादिकस्य कस्यचन ग्रन्थस्येमानि वचनानीति नाधुना किमपि वक्तुं शक्यते। त्रिकशासन-त्रिकसद्भावाख्यौ ग्रन्थौ न्यू० इत्यत्र नैव विवृतौ। तन्त्रालोके (२८।१५) 'त्रिकसद्भावे' इत्यत्र त्रिकशासनम्, सद्भावशासनं चेत्यर्थो विधेयः, "सद्भावशासने इति तन्त्रसद्भावे" (२९।२११) इति जयरथवचनात्। एवं च त्रिकसद्भावयोः समाहारस्त्रिकसद्भावम्, तस्मिन् त्रिकसद्भावे इति विग्रहो विधेयः। त्रिकसद्भावनामा कश्चन स्वतन्त्रो ग्रन्थोऽपि संभावयितुं शक्यते। एकवचनसामर्थ्यात्, पूर्वोक्तविग्रहस्य क्लिष्टकल्पनापतितत्वाच्च। षडर्धशब्देन काश्मीरागमेषु त्रिकशब्दः परामृश्यत इति तु विभावनीयम्। एवं च षडर्धसार-षडर्धशास्त्र-षडर्धहृदयादिपदैस्त्रिकसार-त्रिकशास्त्र-त्रिकहृदयादयो ग्रन्था अभिप्रेतव्याः। "षडर्धहृदये इति त्रिकहृदये" (३१।५४) इति हि विवेककारो जयरथः।

१२७. **त्रिकसारः, १२८ त्रिकहृदयम्, ३४९ सारशास्त्रम्**—स्वपदेत्येकस्यैव श्लोकस्योभयत्रापि दर्शनादेकस्यैव ग्रन्थस्य द्वे नामनी इति वक्तुं शक्यते। [1]तन्त्रसार-त्रिकतन्त्रसार-षडर्धशास्त्र-षडर्धसार-षडर्धहृदय-सारशासन-सारशास्त्रनामभिरयमेव ग्रन्थः स्मृतः स्यात्। "त्रिकसारे षट्सहस्रे" (शि० वा० २।६) इति भट्टभास्करवचनात् त्रिकसारग्रन्थः षट्सहस्रश्लोकात्मको ज्ञायते। "गुप्ते षडर्धहृदये परे। षट्के" (३१।५४) इति तन्त्रालोकवचनेऽपि 'षट्के' इत्यस्य 'षट्सहस्रश्लोकात्मके' इत्यर्थः कर्तुं शक्यते। त्रिकसूत्रपदेन च परात्रिंशिकाशास्त्रमभिप्रेयते (त० वि० १२।१५)। त्रिंशिकाशास्त्रविवृतिकाराः सोमानन्द-कल्याण-भवभूति[2]पुरोगमास्तन्त्रालोके (१३।१४९) स्मर्यन्ते। प्राधान्येन कौलसम्प्रदायस्यायं ग्रन्थः। एतेनाप्यस्य सम्प्रदायस्य प्राचीनता द्योत्यते। सारशास्त्रपदेन क्वचन मालिनीविजयतन्त्रमन्यत्र च त्रिकसारः परामृश्यते। द्वितीये भागे सारशास्त्रस्थाः श्लोकास्त्रिकसारेऽपि दृश्यन्ते। "सारशास्त्रेषु ऊर्मिकौलादिषु" (१४।३३) इति

---

१. परा० अभि०, पृ० १७,३१,११७,१७१,१८४,२२३ इत्यत्र तन्त्रसार-त्रिकतन्त्रसार-सारशास्त्रनाम्ना शास्त्रमेतत् स्मर्यते। त० वि० (३।२५३) इत्यत्र सारशास्त्रपदेन त्रिकसारः, ई० प्र० वि०, भा० १, पृ० २६२ इत्यत्र च मालिनीविजयं गृह्यते। तन्त्रा० (८।३२) इत्यत्र सारशासनपदेन, तन्त्रा० (२३।९६) इत्यत्र च श्रीमत्सारपदेन तदुच्यते। अतिविशिष्टं शास्त्रमेतत्।

२. अत्र पुरोगमा इति पदमन्येऽप्यस्य शास्त्रस्य व्याख्यातार आसन्निति सूचयति। व्याख्यातॄणां तेषां नामान्यन्वेषणीयानि। धनेश्वरशर्मा तेषु व्याख्यातृष्वन्यतमः स्यात्। त्रिंशिकाशास्त्रमेतत् त्रिकसारेऽपि (परा० अभि०, पृ० १७) स्मर्यते। तेनास्य वैशिष्ट्यं राजतेतराम्। तन्त्रमेतत् सद्यः कौलिकसिद्धिदमिति ग्रन्थारम्भश्लोकानुसारं कौलिकं सिद्धान्तं प्रतिपादयति, इत्येतद्रुद्रयामलमिति समासिपद्यतश्च रुद्रयामलसारभूतमिदमित्यायाति। विज्ञानभैरवसमाप्तावपि तन्त्रमेतत् स्मर्यते। तेन प्राचीनस्य रुद्रयामलस्य स्वरूपाधिगतये प्रचेष्टितव्यं तन्त्ररसिकैर्मनीषिभिः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



च विवेके जयरथः। त्रिकसारवचनेषु स्कन्दयामलतन्त्रं त्रिंशिका (परात्रिंशिका) च स्मर्येते। न्यू० VIII, पृ० २३१ इत्यत्र विवृतान्युद्धरणस्थलानि।

१२९. **त्रिपुरसुन्दरीमन्दिरस्तोत्रम्**—महार्थमञ्जरीपरिमलप्रामाण्येन ज्ञायते यत् स्तोत्रमिदं महेश्वरानन्दपरमगुरोः शिवानन्दस्य कृतिरिति। शिवानन्दस्य तद्ग्रन्थानां च विषये नि० उपोद्घातः (पृ० १७-२१), डॉ० रस्तोगीग्रन्थश्च (पृ० २००-२०८) द्रष्टव्यौ। अत्र कानिचन संशोधनान्यपेक्षितानि। अस्य कालनिर्धारणं चास्माभिः "अलंकारसंग्रहकार अमृतानन्द योगी की योगिनीहृदयदीपिकाकार से अभिन्नता" इति शीर्षके निबन्धे कृतं द्रष्टव्यम्। अस्य चत्वारो ग्रन्था आस्माकीने नित्याषोडशिकार्णव-संस्करणे प्रकाशिताः सन्ति। त्रिपुरसुन्दरीमन्दिरस्तोत्रस्य तु मातृकाऽधुनावधि नोपलब्धा। न्यू० इत्यत्र नैव विवृतम्।

१३०. **त्रिविक्रमः**—अयमत्रेति श्लोकः स्पन्दप्रदीपिकाकारस्य उत्पलवैष्णवस्य वर्तते, न तु त्रिविक्रमस्य। इतः पूर्वतने नारायणेति श्लोके, नारायणस्थानज इति ग्रन्थ-समाप्तिश्लोके च स स्वपितरं त्रिविक्रमं स्मरति। "अतश्चास्मत्पितुर्मातामहाचार्येण महाबलेन" (पृ० ८४) इति स्पन्दप्रदीपिकाकारवचनादेवायं त्रिविक्रमो महाबलस्य दौहित्र आसीत्। महाबल(२२५)विवरणं डॉ० रस्तोगीग्रन्थश्च (पृ० १३०, १३२, १५१-१५२) द्रष्टव्ये।

१३१. **त्रिशिरोमतम् ( त्रिशिरोभैरवः )**—त्रिशिरःशास्त्रम्, त्रिशिरोभैरवः, त्रिशिरोमतमित्यादिनामभिः प्रसिद्धमेतत् तन्त्रम्। तन्त्रालोके तद्विवेके चान्येषु च क्षेमराजादिग्रन्थेषु सबहुमानं स्मर्यते शास्त्रमेतत्। श्रीकण्ठीसंहितापरिगणितचतुष्षष्टि-भैरवतन्त्रेषु यद्यप्यस्य नाम न दृश्यते, किन्तु प्र० सा० (२।११८) इत्यत्र दक्षिणतन्त्रेषु त्रिशिरोनामकं परिगण्यते। ततोऽभिन्नमेतत् स्यात्। "त्रिशिरोभैरवस्रोतसि (२।२५) इति स्वच्छन्दोद्योतवचनादपि तस्य भैरव(दक्षिण)स्रोतस्कत्वं सिद्ध्यति। [1]अत्रत्यानि कानिचन वचनानि विज्ञानभैरवे स्वच्छन्दतन्त्रे च समुपलभ्यन्ते। ईदृशानां वचनानां पुनः परीक्षणमपेक्षितम्। तच्चास्य मातृकोपलब्धिसमनन्तरमेव संभवेत्। त्रिशरीर-भैरव (ता० सा०, २७९) इत्यत्र तु नाम्नि काचन विकृतिरायाता। न च (ता० सा०, पृ० २८०) त्रिशिरोभैरवः त्रिशिरोमतं च ग्रन्थान्तरम्। न्यू० इत्यत्र न विवृतम्।

---

१. लुप्तागमसंग्रहप्रथमभागस्यं प्रथमोद्धरणचतुष्टयं पुनः परीक्षणीयम्। नैतदुद्धरण-चतुष्टयं त्रिशिरोभैरवस्य प्रतीयते। प्रकरणानुरोधात्तु तथा संजातम्। "सहस्रारे इति त्रिशिरोभैरवप्रथमपटले" (त० वि० १।११२), "श्रीत्रिशिरोभैरवप्रथमपटला-च्चायमर्थः (चिन्तामणिरिवेश्वरस्तन्मयतां यातीत्यर्थः) स्वयमेवाधिगन्तव्यः" (त० वि० १।११५) इति च जयरथवचनात् तन्त्रस्यास्य प्रथमपटलस्य किमपि वैशिष्ट्यं ज्ञायते। अधुना वयं स्वयमेव तमर्थमधिगन्तुमसमर्था इति चेखिद्यते चेतः। एतच्च तन्त्रालोके (५।११२,१२८; १५।२७०,४३६,५४०; १६।४; २८।११२; २९।१४१; ३०।२७; ३१।६०) इत्येतेपु स्थलेष्वपि प्रमाणत्वेन स्मर्यते। अतिविशिष्टं तन्त्रमेतत्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



१३२. **दामोदरः**—"भट्टदामोदरेण विमुक्तकेषु" (प्र० हृ०, पृ० ७०) इति क्षेमराजप्रामाण्येन विमुक्तकश्लोकानां प्रणेता कश्चन दामोदरः प्रतीयते क्रमदर्शनाचार्यः। ने० वी०, भा० २, पृ० १०-११ इत्यत्र शैवाचार्यदामोदरगुप्तस्य प्रयोगचूडामणिमातृका विवृता दृश्यते। डॉ० रस्तोगी(पृ० १५६-१५७)ग्रन्थोऽपि द्रष्टव्यः।

१३३. **दीक्षोत्तरागमः**—तन्त्रालोकेऽन्यत्रापि (१।६२; ५।१४८; १९।२१; २१।६१; २४।४, १७; २८।६५; २९।२४३), रामकण्ठकृतायां नरेश्वरपरीक्षाटीकायां (पृ० २५६) चागमोऽयं स्मर्यते। उपलब्धासु तन्त्रागमसूचीष्वस्य कुत्रापि नाम न परिदृश्यते।

१३४. **देवलाचार्यः**—अभिनवगुप्तेन सांख्यमतसमालोचनावसरे समुद्ध्रियते वचनमस्याचार्यस्य, इत्यतोऽधिकमस्य विषये न किमपि ज्ञायते। न्यू० इत्यत्र नैव विवृतः।

१३५. **देविकाक्रमः**—कालिकाक्रम(५४)विवरणं द्रष्टव्यम्। न्यू० IX, पृ० १३१ देविकाक्रमस्थितिरिति नाम स्थाप्यते। तन्न। 'देविकाक्रमस्थित्या' इत्यस्य हि देविकाक्रमप्रामाण्येनेत्यर्थः।

१३६. **देवीकालोत्तरम् (मुद्रितम्)**—हुबलीनगरतः कर्णाटकलिप्यां वातुलशुद्धाख्यम्, सूक्ष्मतन्त्रम्, पारमेश्वरतन्त्रम्, देवीकालोत्तरागमश्चेति ग्रन्थचतुष्टयं मुद्रितमभूत्। तत्रत्यो देवीकालोत्तरागमः पूर्वं ग्रन्थाक्षरेषु मुद्रितो निरञ्जनसिद्धविरचितया वृत्त्या सह सम्पूर्णानन्दसंस्कृतविश्वविद्यालययोगतन्त्रग्रन्थमालायां तन्त्रसंग्रहस्य द्वितीये भागे देवनागरलिप्यां परिवर्त्य १९७० ई० वर्षे प्रकाशितः। अत्र प्रथमभागे संगृहीतानि शतरत्नसंग्रहस्थानि देवीकालोत्तरस्य सर्वाणि वचनानि समुपलभ्यन्ते। न्यू० IX, पृ० १३३ इत्यत्र मातृका विवृताः सन्ति।

१३७. **देवीपञ्चशतिका, १६८ पञ्चशतिकम्**—अभिन्नाविमौ ग्रन्थावभिप्रेतव्यौ। क्रमदर्शनस्यायं विशिष्टो ग्रन्थ इत्यस्य परिचयो डॉ० रस्तोगीग्रन्थे (पृ० २३०-२३२), अन्यत्रापि च द्रष्टव्यः।

१३८. **देवीमन्त्रकल्पः**—तत्त्वप्रकाशव्याख्यात्रा कुमारदेवेन शक्तिनुतिप्रकरणे स्मर्यतेऽयं ग्रन्थ इत्यतोऽधिकं न किमपि ज्ञायते। न्यू० इत्यत्र नैव विवृतः।

१३९. **देवीयामलम् (देव्यायामलम्), १४१ देव्यामतसूत्रम्**—तन्त्रालोक(२२।३१)प्रामाण्येन ज्ञायते यदीशानशिवः श्रीदेव्यायामलीयोक्तितत्त्वसम्यक्प्रवेदक इति। ईशानशिवोऽयं सिद्धान्तशैवाचार्यः। तेन सिद्धान्तशैवागमस्य ग्रन्थेनानेन भाव्यम्। दृश्यन्ते च भूयांसि वचांसि तन्त्रालोके तद्विवेके च क्रमकुलदर्शनप्रतिपादकानि। डॉ० रस्तोगीग्रन्थे (पृ० ७३-७४) च क्रमदर्शनस्य विशिष्टसम्प्रदायस्य प्रतिनिधिभूतोऽयं ग्रन्थ इति प्रतिपाद्यते। शतरत्नसंग्रहे देव्यामतसूत्रं स्मर्यते। देवीमतं चन्द्रज्ञानागमस्य उपागमतया स्मर्यते शैवागमग्रन्थेषु। देवीमतं लक्ष्मीधरेण चतुष्षष्टितन्त्रेषु परिगण्यते। "देव्यायामल उक्तं तद् द्वापञ्चाशाह्व आह्निके" (२८।३९०) इति तन्त्रालोकप्रामाण्येन



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



विस्तृतोऽयं ग्रन्थः प्रतीयते। तेनेदं संभावयितुं शक्यते यदस्मिन् बृहद्ग्रन्थे सिद्धान्त-भैरव-क्रम-कुलप्रभृतयः सर्वे सिद्धान्ता यथाप्रसङ्गं विवृताः स्युरिति, ईशानशिवेन चात्र काचन व्याख्या कृता स्यादिति। वैरोचनेन (प्र० स० २।१७८) प्रतिष्ठातन्त्रेषु परिगणित-मेतत्[1]। देवीयामलं (देव्यायामलं) देवीमतं (देव्यामतसूत्रं) चाभिन्नं भिन्नं वेति निर्णयस्तु मातृकोपलब्ध्यनन्तरमेव स्यात्[2]। न्यू० IX, पृ० १५१, १६४ इत्यत्रत्यं विवरणमपि द्रष्टव्यम्, देवीमत(IX, पृ० १४१)विवरणं च, ता० सा०, पृ० ३१८ इत्यत्र देव्यागम-तन्त्रविवरणमपि।

१४०. **देवीसंस्थानागमः**—नि० उपोद्घाते (पृ० ३९) अस्य विषये यदुक्तं ततोऽधिकं न किमपि ज्ञायते। न्यू० इत्यत्रापि नैव विवृतः।

१४१. **देव्यामतसूत्रम्**—देवीयामलविवरणं १३९ द्रष्टव्यम्।

१४२. **द्वयसम्पत्तिः**—अद्वयसम्पत्तिवार्त्तिकविवरणमवलोकनीयम् (३)।

**धनेश्वरशर्मा**—अभिनवगुप्तः परात्रिंशिकायाः "सोमांशं नित्यमभ्यसेत्" (श्लो० ३३) इति श्लोकांशस्य व्याख्यायां भट्टधनेश्वरशर्ममतं विस्तरेणोद्धरति (पृ० २७४)। तेन ज्ञायते धनेश्वरशर्मा अनुत्तरसूत्राख्यस्य त्रिंशिकाशास्त्रस्य कश्चनाज्ञातो व्याख्याकार इति। न्यू० इत्यत्र विवरणं न दृश्यते।

१४३. **धर्मशिवः**—तन्त्रालोके दीक्षाप्रकरणे—"श्रीमान् धर्मशिवोऽप्याह पारोक्ष्यां कर्मपद्धतौ" (२१।५०) इति दर्शनात् सिद्धान्तशैवाचार्येणानेन कश्चन पद्धतिग्रन्थो रचित इति प्रतीयते। स्वच्छन्दोद्योते च क्षेमराजेन नादप्रकरणे "धर्मशिवाचार्येण स्वपद्धतौ" (११।६-७) इत्येवं तस्य पद्धतिग्रन्थः स्मर्यते। "अन्येऽपि धर्मशिववामनकोद्भटश्रीभूतेश-भास्करमुखप्रमुखा महान्तः" (३७।६२) इत्येवं तन्त्रालोके स्मृतो धर्मशिव एव स स्यात्। ईशानशिवविवरणमपि (३२) द्रष्टव्यम्।

१४४. **धातुसमीक्षा**, ३२७. **षड्धातुसमीक्षा**—स्पन्दप्रदीपिकायामुद्धृताविमौ एकस्यैव ग्रन्थस्य द्वे नामनी स्याताम्। नास्य विषयेऽन्यत् किमपि ज्ञायते।

१४५. **नन्दिशिखातन्त्रम्**--तन्त्रमेतत् तन्त्रालोके तद्विवेकेऽन्येषु च ग्रन्थेषु समुद्धृतं दृश्यते। तन्त्रराजभट्टारके—"आदिषट्के पुरा प्रोक्तम्" (अत्रैव, पृ० ५८) इत्यादिना आदिषट्कं स्मर्यते। "उक्तं नन्दिशिखातन्त्रे प्राच्यषट्के महेशिना" (पृ० ९६) इत्यत्र नन्दिशिखातन्त्रे प्राच्यषट्कस्य स्थितिः संबोध्यते। किं तन्त्रराजभट्टारके नन्दि-

---

१. "प्रतिष्ठाकल्पकौमारं किरणं पिङ्गलामतम्। देव्यामतं मयं नन्दि प्रतिष्ठापारमेश्वरम्॥ भास्करं लिङ्गकल्पं च विद्यापुराणवाठुलम्। शक्राख्यं वामदेवं च द्विधा पैतामहं तथा॥ बाणगर्गमतं याम्यं हंसाख्यं वैश्वकर्मकम्। प्रतिष्ठातन्त्राण्येतानि शिवोक्तान्येकविंशतिः॥ (२।१७९-१८१) इत्येवं तत्रैकविंशतिसंख्याकानि प्रतिष्ठा-तन्त्राणि प्रदर्शितानि।

२. तन्त्रालोकीयानि (८।१६; १५।२५३, ३३५, ४६०, ५२२; २३।१०, १४-१५; ३१।३६, ८५; ३२।१) इतीमानि स्थलान्यपि द्रष्टव्यानि। विशिष्टं तन्त्रमेतत्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



शिखातन्त्रमेव आदिषट्कनाम्ना स्मृतम् ? तन्त्रालोके (१५।२८२) वामशब्दविवरणावसरे "श्रीमन्नन्दिशिखायां च श्रीमदानन्दशासने" इति दृश्यते। तेन वामसम्प्रदायस्य विशिष्टमेतत् तन्त्रद्वयं प्रतीयते ।

**नकुलेशः (लकुलेशः)**—"सर्वदेवमयः कायः सर्वप्राणिष्विति स्फुटम् । श्रीमद्भिर्नकुलेशाद्यैरप्येतत् सुनिरूपितम् ॥" (१५।६०४) इत्येष श्लोकस्तन्त्रालोके दृश्यते । "ब्रह्मपञ्चकस्य[1] सद्यस्त्वाजातत्वभवोद्भवत्वादीनां धर्माणां सप्तविंशतिरूपत्वमेवोक्तं श्रीमल्लकुलेशादिपादैः" (पृ० १९९) इति च स एव स्वकीये तन्त्रसारे निर्वक्ति। द्वितीयेनानेनोद्धरणेन पाशुपतसूत्रप्रवक्ता लकुलीश एवात्र नकुलेश-लकुलेश-नामभ्यां स्मृत इति वयमुत्पश्यामः। "सर्वदेवमयः कायः" इति वचनं पाठभेदेन सह प्रत्यभिज्ञाहृदये (सू० ४), शिवस्तोत्रावलीविवृतौ (पृ० २७८) च क्षेमराजेन, महार्थमञ्जरीपरिमले (पृ० ८०) महेश्वरानन्देन च त्रिशिरोमत-त्रिशिरःशास्त्र-त्रिशिरोभैरववचनत्वेनोद्धृतः। एकस्यैव ग्रन्थस्य नामान्तराणीमानीत्यस्माभिरत्रैव विवेचितम्। किमस्य शास्त्रस्य प्रवक्ता लकुलीशः ? तन्त्रेऽस्मिन् कौलमतस्यापि समुल्लेखात् तन्न संभाव्यते। अतः कस्मिंश्चिद् भिन्न एव लकुलीशग्रन्थे "सर्वदेवमयः कायः" इति वचनमन्वेष्टव्यम् ।

"अभिनवगुप्त०"[2] इत्याख्ये डॉ० कान्तिचन्द्रपाण्डेयग्रन्थे (पृ० ९२५) 'मल्लकुलेशः' इति नाम स्थाप्यते। तन्न, नाम्नि श्रीशब्दवत् श्रीमच्छब्दस्याप्यादरार्थं प्रयोगदर्शनात्। उभयोरपि स्थलयोरभिनवगुप्तः श्रीमच्छब्देनाचार्यं सम्बोध्य तं प्रति स्वीयमादरातिशयं नूनं सूचयति। नेदं नाम न्यू० इत्यत्र विवृतं दृश्यते ।

१४६. **नयसंगतिः**—महेश्वरानन्देन परिमले स्मृतमस्य वचनमित्यतोऽधिकं न किमपि ज्ञायते। ता० सा०, पृ० ३२२ इत्यत्र नयसंगीतिरिति नाम दृश्यते। न्यू० इत्यत्र न विवृतोऽयं ग्रन्थः।

१४७. **नरेश्वरविवेकः**—नरेश्वरपरीक्षातो भिन्न एष ग्रन्थः परमेष्ठिविरचित इति ता० सा०, पृ० ३२३ इत्यत्र विवरणमस्य द्रष्टव्यम्। न्यू० IX, पृ० ३७२ इत्यत्रापि तथैव वर्तते।

१४८. **नवनित्याविधानम्**—अनामातर्पणप्रसङ्गे जयरथेन समुद्धृतमस्य वचनमित्यतो नाधिकं किमपि ज्ञायते। नवनित्यातन्त्राणि सुन्दरीहृदय-नित्याषोडशिकार्णव-चन्द्रज्ञान-मातृकातन्त्र-संमोहनतन्त्र- वामकेश्वर - बहुरूपाष्टक - प्रस्तारचिन्तामणि-मेरुप्रस्ताराख्यानि कादिमत(तन्त्रराज)मनोरमाख्यायां व्याख्यायां (१।२) प्रदर्शितानि। न्यू० इत्यत्र नैव विवृतम्।

१४९. **नवरत्नमालिका**—स्तोत्रसंग्रहेषु देवीस्तोत्रेषु नवरत्नमालास्तुतिर्मुद्रिता समुपलभ्यते। तस्या आद्यः श्लोकोऽत्र संगृहीतः।

---

१. ब्रह्मपञ्चकस्य सप्तविंशतितत्त्वरूपत्वमत्रैवाभिनवगुप्तेन व्याख्यातम्।

२. अत्रोद्धृतानां ग्रन्थानां ग्रन्थकाराणां च नामावली संशोधनमपेक्षते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



१५०. **नवशतीशास्त्रम्**—नि० उपोद्घाते (पृ० ३९-४०) विवरणमस्य द्रष्टव्यम् । अत्र 'अनन्तम्' इत्यस्य स्थाने 'अनक्कम्' इत्येव शुद्धः पाठः स्वीकर्तव्यः । न्यू० इत्यत्र न विवृतम् ।

१५१. **नागार्जुनः**—नागार्जुननाम्ना स्पन्दप्रदीपिकायामुद्धृतः सर्वालम्बनधर्मैश्चेत्यादिकः श्लोको बौद्धदार्शनिकस्य शून्यवादप्रवर्तकस्य ग्रन्थेषु नोपलभ्यते । न च स शून्यमपरमार्थं मनुते । तत्प्रतिपादितं हि शून्यं शाङ्करवेदान्तिनां ब्रह्मसदृशं चतुष्कोटिविनिर्मुक्तं परमं तत्त्वमिति जानन्त्येव विद्वांसः ।

१५२. **(श्री)नाथपादाः**—क्रमदर्शनस्य आचार्योऽयं क्षेमराजेन शिवसूत्रविमर्शिन्यां स्मृतः । डॉ० रस्तोगीग्रन्थे (पृ० १०७) विवरणमस्य द्रष्टव्यम् । न्यू० नास्ति विवरणम् ।

१५३. **(भट्ट)नायकः**—भट्टनायकविरचितस्य कस्यचन स्तोत्रग्रन्थस्य द्वौ श्लोकौ समुपलभ्येते । प्रथमः श्लोकः क्षेमराजेन स्तवचिन्तामणिव्याख्यायां स्पन्दनिर्णये च समुद्धृतः । अभिनवगुप्तेन च ई० प्र० वि० वि० इत्यत्र द्वितीयः । अभिनवगुप्तः—"यदाह मीमांसकाग्रणीर्भट्टनायकः" इत्येवं तं स्मरति । काव्यप्रकाशव्याख्यातृभिर्नायकः सांख्याचार्यत्वेन स्मृतः, अभिनवगुप्तश्च तं मीमांसकं मनुते । अत्र हेतुरन्वेषणीयः ।

१५४. **नारदसंग्रहः**—स्पन्दप्रदीपिकायामुद्धृत एष ग्रन्थ इत्यतोऽधिकमस्य विषये न किमपि ज्ञायते । पाञ्चरात्रसम्प्रदायस्यायं ग्रन्थः स्यात् ।

१५५. **नित्यातन्त्रविदः**—नित्यातन्त्रविदः, भैरवकुलोर्मिविदः, तन्त्रसद्भावविदश्चाभिनवगुप्तेन तन्त्रसारे पवित्रकप्रकरणे (पृ० १८७), तन्त्रालोके (२८।१२३) च तस्मिन्नेव प्रकरणे कुलशब्दस्य व्याख्याभेदप्रदर्शनावसरे स्मृताः । परात्रिंशिकाव्याख्यायां (पृ० १५५) च तेन नित्यातन्त्राणि स्मर्यन्ते । त्रिपुरादिषोडशतिथिनित्याप्रतिपादकानि तन्त्राणि नित्यातन्त्राणि. नित्याषोडशिकार्णवादीनि । ता० सा०, पृ० ३३५ इत्यत्र नित्यातन्त्रमपि विव्रियते । किन्तु उपर्युक्तेषु स्थलेषु सामान्येन नित्यातन्त्रवाचकः शब्दो न किमपि विशिष्टं ग्रन्थं परामृशति । अत्र द्वितीये भागे संगृहीता सार्धश्लोकद्वयी कस्मिश्चिन्नित्यातन्त्रविशेषेऽन्वेषणीया । न्यू० इत्यत्र विवरणं नास्ति ।

१५६. **निर्मर्यादशास्त्रम्**—तन्त्रालोके स्थलद्वये शास्त्रमेतत् स्मर्यते । कुलप्रक्रियाप्रतिपादकमिदं शास्त्रम् । तन्त्रालोके (२९।१६६, १७७) मर्यादाहीन-अमर्यादशास्त्रनामभ्यामपि स्मर्यते शास्त्रमेतत् । न्यू० इत्यत्र विवरणं नास्ति ।

१५७. **निर्वाणयोगोत्तरम्**—योगराजेन परमार्थसारटीकायां स्मर्यते शास्त्रमेतत् । काशीहिन्दूविश्वविद्यालये निर्वाणयोगोत्तरस्य सी ४२४६ संख्याका मातृका विद्यते । निर्वाणयोगपटलस्य, निर्वाणसंहितायाश्च मातृका ने० वी०, भा० १, पृ० २२४-२२६ इत्यत्र विवृताः ।

१५८. **निशाकुलम्**—महार्थमञ्जरीपरिमले, तन्त्रालोके, तद्विवेके च शास्त्रमेतत् स्मर्यते ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



१५९. **निशाचारः**, १६०. **निशाटनम्**—निशिसंचारशास्त्रस्य मातृका ने॰ वी॰, भा॰ १, पृ॰ २२७ इत्यत्र विवृता दृश्यते। "श्रीनिशिसंचरे इति श्रीनिशाटने" (४।१७८) इति जयरथवचनानुसारं निशाटनशास्त्रमेव [1]निशिसंचरनाम्नाऽपि प्रथते। निशिचार-नैशसंचारप्रभृतिनामान्यप्यस्यैव ग्रन्थस्य सन्ति। उपर्युक्तायां नेपालमातृकाया-मत्र संगृहीतानि वचनान्यन्वेषणीयानि। प्र॰ सा॰ (२।११७) इत्यत्र निशासंचारनाम्ना दक्षिणतन्त्रेषु तदेतत् परिपठ्यते। विशिष्टमेतत् तन्त्रम्।

१६१. **निश्वासकारिका**—सिद्धान्तशैवागमेषु निश्वासकारिका निश्वासागम-स्योपागमतया परिगण्यते। गोदोहमिषुपातमिति निशाचारवचनमत्रापि दृश्यते। "स त्वा किं करिष्यति" (पृ॰ १०६) इति चात्रत्यं वचनम्—"सत्वा न लिप्यत इति प्रवदन्ति सन्तः" (श्लो॰ ३५) इत्यवधूतसिद्धकृतभक्तिस्तोत्रवचनेन तुलनीयम्। अस्या मातृका समुपलभ्यते।

१६२. **निश्वासागमः**, १६५. **नैश्वासतन्त्रम्**—निश्वासशासन-निश्वासागम-नैश्वासतन्त्रप्रभृतिनामभिः स्मृतोऽयमागमः सिद्धान्तशैवानां रौद्रागमेषु परिगण्यते। निश्वासतत्त्वसंहिता-निश्वासतन्त्र-निश्वासाख्यमहातन्त्रनामभिर्विवृता (ता॰ सा॰, पृ॰ ३४२) मातृका अस्यैवागमस्य स्युः। डॉ॰ बागचीमहोदयेन निश्वासतत्त्वसंहितामातृका नेपालदरबारपुस्तकालयस्था विस्तरेण विवृता। तत्र कानिचन संशोधनान्यपेक्षितानि। शि॰ वि॰ इत्यत्र—"तदुक्तं श्रीनैश्वासदेवीमहेश्वरनर्तकाख्ये सप्तमपटले देवीकृतस्तवे" (पृ॰ ४३) इत्येवं तन्त्रमेतत् स्मर्यते। निश्वासशासनं तन्त्रालोके (३०।७७, ८१), नैश्वासतन्त्रं च म॰ म॰ प॰ (पृ॰ ४९) इत्यत्रापि स्मर्यते। अस्यागमस्य प्रथम उपा-गमोऽपि निश्वासनाम्नैव प्रथते। "महादेवाष्टकं ह्येतत्" इति निश्वासवचनं मतङ्ग-पारमेश्वरवृत्तौ (पृ॰ ३७४) दृश्यते। निश्वासाख्यमहातन्त्रं आ॰ III, पृ॰ ६४ इत्यत्र विवृतम्। हालैण्डनिवासिना विदुषा डॉ॰ तूनगान्द्रियानमहोदयेनास्य संस्करणं सज्जीक्रियते।

१६३. **निश्वासोत्तरम्**—शैवसिद्धान्तग्रन्थेषु तन्त्रमेतद् रौद्रागमस्य निश्वास-स्योपागमतया परिगण्यते। शतरत्नसंग्रहातिरिक्तं मृगेन्द्रागमवृत्तौ नारायणकण्ठेन चेदं स्मर्यते। न्यू॰ इत्यत्र विवरणं नास्ति।

१६४. **निष्क्रियानन्दनाथः**—वि॰ भै॰ वि॰ कारेण शिवोपाध्यायेनायमाचार्यः स्मर्यते। वातूलनाथसूत्रवृत्तौ देवीपञ्चशतिकायां चास्योल्लेखो वर्तते। डॉ॰ रस्तोगीग्रन्थे बहुषु स्थलेष्वस्य कालादिविषये कृतो विचारस्तत्रैव द्रष्टव्यः। निष्क्रियानन्दकृतस्य छुम्मासंकेतप्रकाशस्य सी ४९१ संख्याका मातृका का॰ वि॰ संग्रहे दृश्यते (पृ॰ २८६)। न्यू॰ इत्यत्र नैव विवृतः।

---

१. शास्त्रमेतत् तन्त्रालोके तद्विवेके च ४।७९; १३।१२५; १६।७६; २८।३३-३४ इत्यत्र निशाटनशब्देन, ४।१७८ इत्यत्र निशिसंचरपदेन १३।१९९ इत्यत्र निशि-संचारपदेन, ६।३२-३३; १५।५४-५५ इत्यत्र निशाचारपदेन, १४।२३७-२३८; १५।२७९ इत्यत्र निशिचारपदेन, १५।४४ इत्यत्र च नैशसंचारपदेन प्रोच्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



१६५. **नैश्वासतन्त्रम्**—निश्वासागम(१६२)विवरणमवलोक्यताम्। न्यू० इत्यत्रापि निश्वासनाम्नैव विवृतम्।

१६६. **पञ्चरात्रश्रुतिः**, १६७. **पञ्चरात्रोपनिषत्**—पञ्चरात्रोपनिषन्नाम्ना (पृ० ११५), पञ्चरात्रनाम्ना (पृ० ८८,१००,१०६,१११,११६,१२७) चान्यान्यपि वचनान्यत्र समुपलभ्यन्ते। तेषु प्रज्ञाप्रासादमारुह्येति वचनं स्वल्पेन पाठान्तरेण सहाऽहिर्बुध्न्यसंहितायां (१५।७१) समुपलभ्यत इति डॉ० श्रादरमहोदयो (पृ० १८) वक्ति। महाभारते च श्लोक एष पाठान्तरेण सह स्थलत्रये (३।१९८।९३; १२।१७।१९; १४७।११ भाण्डारकरसंस्करणम्) दृश्यते।

१६८. **पञ्चशतिकम्**—देवीपञ्चशतिका(१३७)विवरणं द्रष्टव्यम्।

१६९. **पञ्चामृतम्**—तन्त्रालोकविवेके वचनान्यस्य संगृहीतानि। नित्याषोडशिकार्णवे कुलचूडामणौ च चतुष्षष्टितन्त्रेषु परिगण्यते। प्र० सा० (२।११९) इत्यत्र च दक्षिणतन्त्रेषु परिपठ्यते। आ० I. पृ० ३१७ अनुसारमहल्याकामधेनुग्रन्थेऽपि तन्त्रमेतत् स्मर्यते।

१७०. **पञ्चार्थप्रमाणम्**—क्षेमराजेन स्वच्छन्दोद्योते श्लोका अत्रत्याः संगृहीता इत्यतोऽधिकं न किमपि ज्ञायते। नाम्ना ग्रन्थ एष पाशुपतसम्प्रदायस्य प्रतीयते।

१७१. **पदसंगतिः (मुद्रिता)**—द्वितीयभागे संगृहीतान्यत्रत्यानि त्रीण्यपि वचनानि शिवदृष्टिवृत्तौ क्रमशः १९,१५९,१ पृष्ठेषु समुपलभ्यन्ते। "शिवदृष्टिप्रकरणे करोमि पदसंगतिम्" (पृ० २) इति ग्रन्थारम्भस्थात् तृतीयात् श्लोकादस्या वृत्तेर्नाम पदसंगतिरिति स्पष्टं विभाव्यते। तेन पदसंगतिर्न स्वतन्त्रो ग्रन्थः, किन्तु शिवदृष्टिवृत्तेरेतन्नाम। भट्टोत्पलविरचितयाऽनया वृत्त्या सह शिवदृष्टिप्रकरणमेतत् सोमानन्दपादविरचितं काश्मीरग्रन्थावल्यां १९३४ ई० वर्षे मुद्रितमिति जानन्त्येव विद्वांसः। भट्टोत्पलस्य विस्तृतः परिचयो डॉ० रस्तोगोग्रन्थे (पृ० १३३-१३७) द्रष्टव्यः। लक्ष्मणगुप्तो भट्टोत्पलस्य शिष्यः, न तु पुत्र इति किल सत्यं भवेत्; किन्तु [1]शारदातिलककर्ता लक्ष्मण-

---

१. शारदातिलकव्याख्याता राघवभट्टो वाराणसीमधिवसन् १५५० वैक्रमे वत्सरे (१४९४ ई०) स्वकीयं ग्रन्थं पूरयामास। "तत्रोत्पलाचार्यपूज्यपादशिष्यः श्रीलक्ष्मणाचार्यः····शारदातिलकं तन्त्रं चिकीर्षुः" (पृ० २-३) इति, "गुरूनिति बहुवचनं पूजार्थं गुरु-परमगुरु-परापरगुरु-परमेष्ठिगुर्वपेक्षया वा। तथा च ग्रन्थकृद्गुरुपङ्क्तिः—"श्रीकण्ठं वसुमन्तं श्रीसोमानन्दमुत्पलाचार्यान्" इति, "लक्ष्मणमभिनवगुप्तं वन्दे श्रीक्षेमराजं च" इति तच्छिष्याः" (पृ० १२) इति तद्वचनानि प्रमाणीकृत्येतिहासज्ञाः प्रवर्तन्ते, लक्ष्मणगुप्तेन कश्चन श्रीशास्त्रग्रन्थो रचितः। शारदातिलकस्यापरं नाम तदिति च ते प्रतिपादयन्ति। तन्न। शारदातिलके हि शक्ति-गणपति-सूर्य-विष्णु-शिवानां पूजनविधिर्वर्ण्यते। तेनायं ग्रन्थः स्मार्तसम्प्रदायस्य पञ्चायतनपूजाविधिं वर्णयति। तत्र केवलं द्वादशे पटले त्रिपुरापूजनविधिः प्रतिपाद्यते। लक्ष्मणगुप्तेन रचितं श्रीशास्त्रं चेतो भिन्नमेव स्यात्। काश्मीराः किल आचार्याः शैवं शाक्तं वा सम्प्रदायमनुवर्तन्ते, न तु स्मार्तमित्यवधेयमत्र। एवं च राघवभट्टस्य पञ्चदशशताब्दीभवस्यैतद् वर्णनं किंवदन्तीमूलकमेव मन्तव्यम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


देशिकेन्द्रो नैवाभिनवगुप्तस्य गुरुर्लक्ष्मणगुप्तो भवितुमर्हति, अभिनवगुप्तेनैवं तस्य कुत्राप्यस्मरणात् । शारदातिलकरचनाकालोऽपि नैतावान् प्राचीनः प्रतीयते । लक्ष्मण-देशिकेन्द्रस्य देशकालनिर्णयाय सावधानं प्रचेष्टितव्यमद्यापि ।

१७२. **पद्महस्तभट्टारकः**—नि॰उपोद्घाते (पृ॰ ४०) विवरणमस्य द्रष्टव्यम् ।

१७३. **पद्मवाहिनी**—सौन्दर्यलहरीटीकायां सौभाग्यवर्धन्यां ताराभक्तिसुधार्णवे पुरश्चर्यार्णवे चोद्धृतोऽयं ग्रन्थः (ता॰ सा॰, पृ॰ ३५७) ।

१७४. **परमार्थसंग्रहः (मुद्रितः)**—अभिनवगुप्तविरचितस्य परमार्थसारस्य पञ्चदशः श्लोकः परमार्थसंग्रहनाम्नाऽत्र प्रथमे भागे संगृहीतः । ग्रन्थ एष योगराजविर-चितया विवृत्या सह कश्मीरग्रन्थमालायां १९१६ ई॰ वर्षे मुद्रित इति जानन्त्येव विद्वांसः । अभिनवगुप्तेन तन्त्रालोके (२८।३१३) अनन्तकारिका स्मर्यते । भगवता शेषेण पृथ्व्याधारभूतेन सोपदिष्टा । सापि परमार्थसारनाम्नैव सांख्य-वेदान्त-वैष्णवदर्शन-ग्रन्थत्वेन प्रसिद्धा सटीका मुद्रिता विद्यते । तदाधारेणैवाभिनवगुप्तः परमार्थसाराख्यं शैवग्रन्थं जग्रन्थ । तत्र तृतीये श्लोकेऽभिनवगुप्तोऽनन्तकारिकामेव आधारकारिकानाम्ना स्मरति । "स्वशास्त्रे चाप्यहीशानो विश्वाधारधुरन्धरः" (२८।३०९) इति तन्त्रालोक-वचनव्याख्यायां जयरथः—"स्वशास्त्रे इति आधारकारिकासु" इति व्याख्याति, किन्तु तत्र मूले उद्धृतः—"रथ्यान्तरे मूत्रपुरीषमध्ये चण्डालगेहे निरये श्मशाने । सचिन्तको वा गतचिन्तको वा ज्ञानी विमोक्षं लभतेऽपि चान्ते ॥" इत्येष श्लोकोऽनन्तकारिकापर-पर्यायासु आधारकारिकासु नोपलभ्यते । छन्दोभेदाद् भिन्न एवैष ग्रन्थः प्रतीयते । एवं च भगवता शेषेण ग्रन्थद्वयमुपदिष्टमिति सिद्धयति । तत्र प्रथमस्य नामानन्तकारिका, अपरस्य चाधारकारिकेति वक्तुं शक्यते । अभिनवगुप्तोऽनन्तकारिकाधारेणैव परमार्थ-साराख्यं स्वग्रन्थं जग्रन्थ, आधारकारिकानाम्ना च तं स्मरतीति समस्येयं स्वं समा-धानमपेक्षते ।

१७५. **पराख्यसंहिता, १७६. परातन्त्रम्**—पराख्यं परातन्त्रं पराख्यसंहिता—इत्यादिनामभिरेक एव ग्रन्थः परामृश्यते । क्षेमराजो महासंहितानाम्नाऽपि स्मरत्येतत् तन्त्रं स्वच्छन्दोद्योते (१०।३१-३२) । अत्रत्यो निमित्तमीश्वर इति श्लोकः पौष्करागमेऽपि दृश्यते । परातन्त्रस्य मातृका ने॰ वी॰, भा॰ १, पृ॰ २३९; ता॰ सा॰, पृ॰ ३६२, आ॰ II. पृ॰ ७२० इत्यत्र च विवृता वर्तन्ते । स्वच्छन्दोद्योते (१०।२००) स्मृतायां परायां श्वेतो महामुनिश्चर्च्यते ।

१७७. **परापञ्चाशिका (मुद्रिता)**—अत्र प्रथमे भागे योगिनीहृदयदीपिकातः संगृहीतानि परापञ्चाशिकायाः सर्वाणि वचनानि काश्मीरग्रन्थावल्यां १३ संख्याकत्वेन मुद्रिते षट्त्रिंशत्तत्त्वसन्दोहादिग्रन्थसंग्राहके भागे श्रीआद्यनाथविरचितायामनुत्तरप्रकाश-पञ्चाशिकायां समुपलभ्यन्ते । अत्रत्यानां श्लोकानामन्यत्रापि परापञ्चाशिकानाम्नैव समुद्धरणात् 'परापञ्चाशिका' इत्येव ग्रन्थस्य मुख्यं नाम इति विभावनीयम् । अत्रत्यस्य षष्ठस्योद्धरणस्य द्वितीया तृतीया च पङ्क्तिर्न परापञ्चाशिकायाः। योगिनीहृदयस्य मूलस्थ एष श्लोकः प्रतीयते ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



१७८. **परामतम्,** १७९. **परासूक्तम्**—महेश्वरानन्देन महार्थमञ्जरीपरिमले प्रकाशविमर्शात्मकत्वनिरूपणप्रकरणे द्वितीयश्च स्मृतमेतद् ग्रन्थद्वयम्। प्रथमो विश्वस्य शक्तिस्वरूपनिरूपणावसरे स्मृतः। नाधिकं किमपि ज्ञायते।

१८०. **परास्तोत्रम्**—अत्रत्याः पञ्च श्लोका महेश्वरानन्देन परिमले स्मृताः। सौन्दर्यलहरीटीकाकारेण मयैवेत्युक्त्या स्वयं महेश्वरानन्देन विरचितमिदं स्तोत्रम्। सौन्दर्यलहरीटीकाकारेण कैवल्याश्रमेणाप्युद्धृतं परास्तोत्रमिति आ० I, पृ० ३२८ इत्यतो ज्ञायते। तत्रोद्धृत "अहमि प्रलयम्" इति श्लोको न परास्तोत्रस्य, किन्तु परापञ्चाशिकाया इति ध्येयम्।

१८१. **पर्यन्तपञ्चाशिका (मुद्रिता)**—डॉ० वे० राघवन्महोदयेनाभिनवगुप्त-विरचिता पर्यन्तपञ्चाशिका पूर्वं १९५०-५१ ई० वर्षे मद्रासविश्वविद्यालयस्य "एनल्स आफ ओरियण्टल रिसर्च" इत्याख्यायाः शोधपत्रिकाया अष्टमवर्षीयेऽङ्के प्रकाशिता। साम्प्रतं च पुनरस्य संशोधितं संस्करणम् "अभिनवगुप्त एण्ड हिज वर्क्स" इत्याख्ये तदीये ग्रन्थे १९८० ई० वर्षे वाराणसीतः प्रकाशिते दृश्यते। प्रथमभागे संगृहीतान्य-त्रत्यानि सर्वाणि वचनानि क्रमशो मुद्रिते ग्रन्थे ३, ९, २२, ६, ७ श्लोकत्वेन समुप-लभ्यन्ते।

१८२. **पश्चिमम्**—तन्त्रमेतन्महेश्वरानन्देन परिमले स्थलद्वये स्मृतम्। पश्चिम-तन्त्रं लक्ष्मीधरेण भास्कररायेण च चतुष्षष्टितन्त्रेषु परिगण्यते। कुलचूडामणिस्थेषु तन्त्रेष्वपि तदेतन्नाम दृश्यते।

१८३. **पादुकोदयः**—महेश्वरानन्देन परिमले बहूनि वचनान्यस्य संगृहीतानि। अयमपि ग्रन्थस्तेनैव रचितः। अस्य ग्रन्थस्य नूतने संस्करणे १०८, ११४, १४३, १७० पृष्ठेष्वपि श्लोकाः केचन दृश्यन्तेऽस्यैव पादुकोदयस्य।

१८४. **पारमेश्वरागमः**—मतङ्ग-पारमेश्वर-मतङ्गपारमेश्वरनामभिरेक एव ग्रन्थः स्मर्यत इति संभावयामः। सिद्धान्तशैवागमेषु रौद्रागमेषु पारमेश्वरागम पठ्यते। पारमेश्वरस्योपागमोऽपि तृतीय एतन्नाम्नैव प्रसिद्धः। प्र० सा० (२।१०९) इत्यत्रापि रुद्रभेदेषु पारमैश्वर्यं परिगण्यते। रथक्रान्ताविभागेऽपि परमेश्वरतन्त्रं परिपठ्यते। पारमेश्वरतन्त्र-पारमेश्वरसंहिता-पारमेश्वरीयमततन्त्राणां मातृकाः ता० सा०, पृ० ३६७-३६८ इत्यत्र विवृताः। ने० वी०, भा० १, पृ० २४०-२४२ इत्यत्रापि पारमेश्वरीमत-तन्त्रस्य चतस्रो मातृका दृश्यन्ते। आ० I, पृ० ३३४ इत्यपि द्रष्टव्यम्। मतङ्गसूत्र-(२१४) विवरणमपि द्रष्टव्यम्। मतङ्गपारमेश्वरं साम्प्रतं मुद्रितमुपलभ्यते। तत्र पारमेश्वरवचनानि नोपलभ्यन्ते।

१८५. **पिचुशास्त्रम्**—तन्त्रालोकेऽभिनवगुप्तेन शास्त्रमेतत् स्मर्यते। तन्त्रालोकेऽन्यत्रापि (२७।२१, २४) स स्मरति शास्त्रमेतत्। श्रीकण्ठ्यां चतुष्षष्टितन्त्रेषु परि-गणितं पिचुभैरवीतन्त्रमितोऽभिन्नं स्यात्। तन्त्रालोके (२८।३८३) पिचुमतनाम्नाऽपि शास्त्रमेतत् स्मर्यते। नि० षो० (१।१९) इत्यत्र च महापिचुमतं पठ्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



१८६. **पुष्पदन्तः**—परात्रिंशिकाविवृतावभिनवगुप्तेन स्मृतस्यास्य पुष्पदन्तस्य विषये किमपि न ज्ञायते। महिम्नःस्तवकर्ता पुष्पदन्तस्तु प्रसिद्ध एव।

१८७. **पूजनस्तोत्रम्**—"उवाच पूजनस्तोत्रे ह्यस्माकं परमो गुरुः" (१५।१५२) इति तन्त्रालोकप्रामाण्येन भट्टोत्पलोऽस्य कर्ता। मुद्रितायां शिवस्तोत्रावल्यामेतन्न दृश्यते। एवमेव "यत्र यत्र मिलिता मरीचयः" (यो० दी०, पृ० २९३) इति स्तोत्रावलीश्लोकार्धमपि तत्र नोपलभ्यते। "ईश्वरप्रत्यभिज्ञाकारः····श्रीमदुत्पलदेवाचार्योऽस्मत्परमेष्ठी····संग्रहस्तोत्रजयस्तोत्रभक्तिस्तोत्राण्याह्निकस्तुतिसूक्तानि····मुक्तकान्येव बबन्ध।····श्रीराम आदित्यराजश्च पृथक् पृथक् स्तोत्रशय्यायां न्यवेशयत्। श्रीविश्वावर्तस्तु विंशत्या स्तोत्रैः स्वात्मोत्प्रेक्षितनामभिर्व्यवस्थापितवानिति किल श्रूयते" (पृ० १-२) इति क्षेमराजप्रामाण्येन शिवस्तोत्रावली विश्वावसुना संकलितेति प्रतीयते। विश्वावसुसंकलनायां पूजनस्तोत्रादिकं नागतमित्येव साम्प्रतं वक्तुं शक्यते।

१८८. **पूजारहस्यम्**—महार्थमञ्जरीपरिमले समुद्धृतमित्यतोऽधिकं न किमपि ज्ञायते।

१८९. **(श्री)पूर्व(तन्त्रम् = शास्त्रम्)**—तन्त्रालोके तद्विवेके च श्रीपूर्वशास्त्रनाम्ना मालिनीविजयतन्त्रं परामृश्यते, किन्तु महार्थमञ्जरीपरिमले संगृहीतेषु श्रीपूर्ववचनेषु प्रथमे द्वे तत्र न दृश्येते, तृतीयं चतुर्थं चोद्धरणद्वयं तत्र (१८।२-४) वर्तते। तेन मालिनीविजयतो भिन्नमपि किञ्चिदेतन्नामकं तन्त्रमासीदिति कल्पनीयम्। पूर्वतन्त्रं लक्ष्मीधरेण भास्कररायेण च चतुष्षष्टितन्त्रेषु परिगण्यते। कुलचूडामणिपरिगणितेषु तन्त्रेष्वपि तद् दृश्यते।

१९०. **पौष्करागमः (मुद्रितः)**—सुप्रभेदागमे सिद्धान्तशैवरौद्रागमान्तर्गतस्य षोडशतमस्य पारमेश्वरस्योपागमतयाऽऽगमोऽयं वर्ण्यते। ता०सा०, पृ० ३८८-३८९ इत्यत्रास्यागमस्य उमापतिशिवाचार्यकृतायाष्टीकायाश्च विवरणं द्रष्टव्यम्। अस्यागमस्य योगपादक्रियापादयोर्नामान्तरं सर्वज्ञानोत्तरमिति, चर्यापादस्य च नामान्तरं मतङ्गपारमेश्वरतन्त्रमित्यत्र प्रमाणमन्वेषणीयम्। स्पन्दप्रदीपिकायां च पौष्करसंहिता पाञ्चरात्रागमीया स्मृता, न तु शैवागमीयः पौष्करागमः। श्रीज्ञानसंबन्धविलासयन्त्रशालाद्वारा चिदम्बरनगरतः १९२५ ई० वर्षे ग्रन्थलिप्यां मुद्रापितोऽयं ग्रन्थः। तन्त्रालोके (१६।२५४) पौष्करागमः स्मर्यते। तत्रत्यो विषयो मुद्रिते पौष्करागमेऽन्वेषणीयः, न तु पौष्करसंहितायाम्।

१९१. **प्रज्ञालङ्कारः**—"विस्तरेण च प्रज्ञालङ्कारे दर्शितमाचार्यशङ्करनन्दनेन" (ई० प्र० वि०, भा० १, पृ० २२५) इत्यभिनवगुप्तप्रामाण्येन प्रज्ञालङ्कारकर्ता शङ्करनन्दनः सिद्ध्यति। "प्रज्ञालङ्कारादिषु भाट्टदर्शनेषु" (ई० प्र० वि० वि०, भा० २, पृ० १४४) इति तदुक्त्यैव भाट्टदर्शनग्रन्थोऽयमिति च ज्ञायते। "यदाह शङ्करनन्दनः "अनुभवायन्ते विकल्पाः" इति धर्मोत्तरं दूषयितुम्" (ई० प्र० वि० वि०, भा० २, पृ० १६) इत्यभिनवगुप्तोक्तिः शङ्करनन्दनेन धर्मोत्तरग्रन्थो दूषित इति साधयति। धर्म-



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



कीर्तिकृतन्यायबिन्दुग्रन्थस्य टीकाकारो धर्मोत्तर इति जानन्त्येव मनीषिणः। तमिमं शङ्करनन्दनम्— "प्राक्तनकुशलविपाकप्रवर्तितसंवित्परामर्शाभ्यासतपःप्रभावप्रतिलब्धोन्मेषेण भट्टशङ्करनन्दनेन" (ई० प्र० वि० वि०, भा० २, पृ० १९९), "गुरुः शङ्करनन्दनः" (मा० वा०, पृ० ४१) इत्येवं सादरं स्मरत्यभिनवगुप्तः। नरेश्वरपरीक्षाटीकायां भट्टरामकण्ठोऽपि धर्मोत्तरमतसमालोचनावसरे (पृ० ५२-५३) अलङ्कारकारं स्मरति। सोऽयमलङ्कारकारः प्रज्ञालङ्कारकारः शङ्करनन्दन एव स्यात्। ई० प्र० वि० वि०, भा० २, पृ० २२०-२२१ इत्यत्र भट्टनाम्ना स्मृतानि वचनान्यपि भट्टशङ्करनन्दनस्यैव स्युः, कुमारिलभट्टकृतश्लोकवार्त्तिके तदनुपलब्धेः। एवं च नायं तन्त्रागमग्रन्थ इति विभावनीयम्। भट्टशङ्करनन्दनस्य ईश्वरापाकरणसंक्षेपनाम्नो मीमांसाग्रन्थस्य मातृका सी ४९३ संख्याका का० हि० संग्रहे द्रष्टव्या परीक्षणीया च।

१९२. **प्रबोधपञ्चदशिका**—ग्रन्थ एष काश्मीरग्रन्थमालायां प्रकाशिताया अभिनवगुप्तकृतेर्बोधपञ्चदशिकाया भिन्नः, तत्रात्रत्यस्य वचनस्यानुपलभ्यात्।

१९३. **प्रभाकौलम्**—महार्थमञ्जरीपरिमले महेश्वरानन्देन स्थलत्रये समुद्धृतमेतदित्यतोऽधिकं न किमपि ज्ञायते।

१९४. **प्रमाणस्तुतिः**—"श्रीमान् विद्यागुरुश्चाह प्रमाणस्तुतिदर्शने" (१३।१२८), "श्रीविद्याधिपतिश्चाह मानस्तोत्रे तदीदृशम्" (१४।९) इति तन्त्रालोकप्रामाण्याद् विद्यागुरुर्विद्याधिपतिश्चाभिन्नः। एवमेव प्रमाणस्तुतिर्मानस्तोत्रं चाभिन्नम्। अनुभवस्तोत्र-(१३)-विद्याधिपति(२९४)विवरणे अपि द्रष्टव्ये।

१९५. **प्रयोगमञ्जरी**—तत्त्वप्रकाशव्याख्यायां कुमारदेवेनास्य वचनमेकं स्मर्यते। ता० सा०, पृ० ४०१-४०२ इत्यत्र त्रिविधा मातृका विवृताः[१]। तत्र अष्टमूर्तिपुत्ररविविरचित एष ग्रन्थः स्यात्, जीर्णोद्धारशिवप्रतिष्ठादिविषयाणामत्र वर्णनात्। एष ग्रन्थ ईशानशिवगुरुदेवपद्धत्यां (भा० ३, पृ० ६५, ९७, १२५) चापि स्मर्यते।

१९६. **प्रशस्तिभूतिपादः**—तन्त्रालोकविवेके जयरथेनाचार्योऽयं स्मर्यत इत्यतोऽधिकमस्य विषये न किमप्युपलभामहे।

१९७. **बहुरूपगर्भस्तोत्रम्**—स्तोत्रमेतदीश्वरप्रत्यभिज्ञाविमर्शिनीटीकायां भास्करेण समुद्धृतम्। अनन्तशक्तिपादविरचितटीकया सह स्तोत्रस्यास्य मातृकाः समुपलभ्यन्ते। मूलस्तोत्रस्य, उपर्युक्तायाष्टीकायाः, आचार्यमिल्लनकृतटीकायाश्च मातृकाः काशीहिन्दूविश्वविद्यालयसंग्रहेऽपि सन्ति। अत्र शिवोपाध्यायेनापि टीका कृता। डॉ० रस्तोगी-(पृ० २२४-२२५)ग्रन्थोऽपि द्रष्टव्यः। आ० I, पृ० ३६८ इत्यत्रापि हस्तलेखविवरणमस्ति। सरस्वतीभवनपुस्तकालयेऽपि मातृका वर्तते। आ० II, पृ० ८३ इत्यत्रत्यं च विवरणं त्रुटिपूर्णं प्रतीयते।

१९८. **बृंहणी, २७९ लघुबृंहणी**—बृंहणी तत्त्वप्रकाशव्याख्यायां कुमारेण, लघुबृंहणी च महार्थमञ्जरीपरिमले महेश्वरानन्देन समुद्धृता। अनयोर्लघुबृंहणीमातृका

१. केरलग्रन्थालयसूच्यां विवृता।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



समुपलभ्यते। तस्याः प्रतिलिपिः सरस्वतीभवनपुस्तकालयेऽपि विद्यते। परीक्षानन्तरमेवानयोर्ग्रन्थयोर्भिन्नत्वाभिन्नत्वविषयो निर्णेतुं शक्येत।

**बृहत्तन्त्रम्**—"आगमोदितः" (४।३५) इति स्वच्छन्दवचनव्याख्याने—"आगमे बृहत्तन्त्रे उदितः" इति क्षेमराजवचनाद् बृहत्तन्त्रस्य सत्ता तस्य स्वच्छन्दतन्त्रात् प्राग् वर्तमानता च सिद्ध्यति। आ० III, पृ० ८० विवरणं द्रष्टव्यम्। बृहत्तन्त्रमीशानशिवगुरुदेवपद्धत्यां (भा० ४, पृ० ३६९) समुद्ध्रियते।

**१९९. बृहस्पतिपादः, ३१४ शिवतनुशास्त्रम्**—शिवतनुशास्त्रकर्ता बृहस्पतिपादस्तन्त्रालोकादिष्वभिनवगुप्तप्रभृतिभिः सबहुमानं स्मर्यते। सर्वदर्शनसंग्रहेऽप्ययमाचार्यः स्मर्यते।[1]तत्र (पृ० ६६) संगृहीतः श्लोकोऽत्र भवभोक्तृभोगेत्येवं पाठान्तरेण सह संकलितो द्रष्टव्यः। एवं च न केवलं तन्त्रालोके, अन्येष्वपि बहुषु ग्रन्थेष्वयमाचार्यस्तस्य ग्रन्थो वा प्रमाणभूतत्वेनाङ्गीक्रियते। सद्योज्योतिर्बृहस्पतिपादश्चेत्याचार्यौ द्वौ सिद्धान्तशैवागमानामाद्यव्याख्यातृत्वपदवीं धारयतः। डॉ० कान्तिचन्द्रपाण्डेयमहोदयेन 'अभिनवगुप्त०' (पृ० १७०-१७१) इत्याख्ये ग्रन्थे, शैवदर्शनबिन्दौ (पृ० ९) चास्य ग्रन्थस्य ग्रन्थकारस्य च किञ्चिदिव विवरणं समुपस्थापितम्।

**२००. बौद्धायनसंहिता**—संहितैषा स्पन्दप्रदीपिकायां स्थलद्वये स्मृता। बोधायनसंहिता श्रादरग्रन्थे पाञ्चरात्रसंहितानामावल्यां १०२ क्रमे, लक्ष्मीतन्त्रोपोद्घाते च ९९ क्रमे दृश्यते। ततोऽभिन्नैषा पाञ्चरात्रागमसंहिता स्यात्। नाम्नि विकृतिर्लेखकप्रमादकृता भवेत्।

**२०१. ब्रह्मयामलम्**—डॉ० बागचीमहोदयेन ब्रह्मयामलस्य[2] विस्तृतः परिचयः समुपस्थापितः। अस्यानेका मातृकाः ता० सा०, पृ० ४२९-४३०; ने० वी०, भा० २, पृ० १८-२३ आ० I, पृ० ३८२, आ० II, पृ० ८६, आ० III, ८१ इत्यत्र विवृताः सन्ति। पुष्पिकावाक्येषु—"भैरवस्रोतसि विद्यापीठे पिचुमते द्वादशसाहस्रिके" इत्यादीनि विशेषणान्यस्य दृश्यन्ते। चतुष्षष्टितन्त्रपरिगणितेषु यामलाष्टकेषु, श्रीकण्ठीपठितचतुष्षष्टितन्त्रेषु, विष्णुक्रान्ताविभागे चास्य नाम वर्तते। तन्त्रालोके ४।५४, ६०; ५।९७ इत्यत्रापि यामलमेतत् स्मर्यते। पिचुशास्त्र(१८५)श्लोका अत्र द्रष्टव्याः।

**भरुणतन्त्रम्**—"श्रीमद्भरुणतन्त्रे च तच्छिवेन निरूपितम्" (२५।१४) इत्येवं श्राद्धविधिनिरूपके तन्त्रालोकप्रकरणे तन्त्रमेतत् स्मर्यते।

**२०२. भर्गशिखा**—अभिनवगुप्त-क्षेमराज-जयरथादिभिरस्य ग्रन्थस्य वचनानि स्मर्यन्ते। भर्गाष्टकशिखाकुलनाम्नाऽप्ययं स्मर्यते। भानुर्भर्ग इति साम्बपञ्चाशिकाटीका

---

१. पुण्यपत्तनस्थ-आनन्दाश्रमसंस्कृतग्रन्थावलिसंस्करणस्य द्वितीयावृत्तिः १९२८ ई० वर्षे प्रकाशिता द्रष्टव्या।

२. "स्टडीज इन द तन्त्राज़" (पृ० १०२-१०५) इत्याख्ये ग्रन्थे कलिकाताविश्वविद्यालयत ई० १९३९ वर्षे प्रकाशिते।

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDAL
LIBRARY
Jangamwadi Math, Varanasi

CC0. In Public Domain. Jangamwadi Math Collection. Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



(पृ० ३४)। स्व० उ०, भा० १, पृ० २६ इत्यत्रापि मातृकाप्रस्तारप्रकरणे स्मृता भर्गशिखा। किमेतत् तन्त्रं सौरसम्प्रदायस्य प्रतिपादकम्?

२०३. **भार्गवोत्तरम्**—मृगेन्द्रागमवृत्तौ नारायणकण्ठेन तन्त्रमेतत् स्मर्यते। सिद्धान्तशैवागमेषु उपागमेषु वाऽस्य नाम न दृश्यते।

२०४. **भुवनेश्वरीकल्पः**—तत्त्वप्रकाशव्याख्यायां कुमारेण स्मृतः। अश्वक्रान्ता-विभागे भुवनेश्वरीतन्त्रं परिगण्यते। ता० सा०, पृ० ४४० इत्यत्रास्य मातृका विवृता। रुद्रयामलाद् गृहीत एष कल्प इति तत्र सूच्यते। आ० I, पृ० ४१४ इत्यत्रापि च। परीक्षासापेक्षमेतत्। भुवनमालिनीकल्पस्य मातृका का० हि० (पृ० ७५८) सी २८ संख्याका श्रीवत्सकृतविवरणसमेता वर्तते।

२०५. **भूतक्षोभः**—तन्त्रालोकविवेके जयरथेन वचनमस्य स्मर्यते तर्पणप्रकरणे।

२०६. **भूतशुद्धितन्त्रम्**—तत्त्वप्रकाशव्याख्यात्रा कुमारेण तन्त्रमेतत् स्मर्यते। भूतशुद्धितन्त्रं द्विविधं मुद्रितमुपलभ्यते। तत्रान्यथाख्यातिसदृशा दार्शनिका विषया नोपलभ्यन्ते। ता० सा०, पृ० ४४६-४४७ इत्यत्र अस्यान्या मातृका अपि विवृताः सन्ति। अश्वक्रान्ताविभागे च तन्त्रमेतत् परिगण्यते। उपलब्धानां मातृकाणां परीक्षण-मावश्यकम्। आ० I, पृ० ४१४; आ० II, पृ० ९५; आ० III, पृ० ८९-९० इत्यत्रा-प्यनेका मातृका विवृताः।

२०७. **भूतिराजः**—"एतद्विद्यात्रयं श्रीमद्भूतिराजो न्यरूपयत्॥ यः साक्षाद-भजच्छ्रीमाञ्श्रीकण्ठो मानुषीं तनुम्।" (तन्त्रा० ३०।१२०-१२१) इत्यभिनवगुप्तवर्णित-महिम्नः क्रमदर्शनाचार्यस्य भूतिराजस्य डॉ० रस्तोगीग्रन्थे (पृ० १५२-१५६) विस्तृतः परिचयो द्रष्टव्यः। अन्यानि तन्त्रालोक(१।९; ३०।६३; ३७।६०)स्थलान्यप्यवलोक-नीयानि। स हि भट्टेन्दुराजस्य हेलाराजस्य च पिता, अभिनवगुप्तस्य गुरुः, चक्रभानु-शिष्यः, सौचुकपुत्रश्चासीत्। आ० I, पृ० ४१४ द्रष्टव्यम्।

२०८. **भैरवकुलम्**—तन्त्रालोके तद्विवेके च वचनान्यस्य स्मर्यन्ते। तन्त्रा० अभि०, पृ० १८७ इत्यत्र भैरवकुलोर्मिविदः स्मृताः। ते च भैरवकुलसम्प्रदायानुवर्तिनः स्युः। भैरवकुलमेतत् तन्त्रालोकेऽन्यत्रापि (२२।४१, २८।५९, २८।३८८) स्मर्यते। अस्य सार्धं श्लोकद्वयमपरमपि त० वि० २८।५१ इत्यत्र द्रष्टव्यम्।

२०९. **भैरवयामलम्**—कामकलाविलासटीकायां चिद्वल्ल्याम्, सौन्दर्यलहरी-टीकयोररुणामोदिनीलक्ष्मीधरयोश्च यामलस्यास्य वचनानि संगृहीतानि। चन्द्रज्ञानविद्या (९३) अस्यैव नामान्तरं प्रतीयत इति नि० उ०, पृ० २६-२७ इत्यत्र द्रष्टव्यम्। भैरव-तन्त्रस्य, भैरवयामलान्तर्गतभैरवस्तवादीनां मातृकाः समुपलभ्यन्त इति ता० सा०, पृ० ४४९, ४५१ इत्यत्र द्रष्टव्यम्। काशीहिन्दूविश्वविद्यालये सी २९१ संख्याका मातृका परीक्षणीया भैरवयामलस्य (पृ० ७६०), आ० I, पृ० ४१७; आ० II, पृ० ९५; आ० III, पृ० ९१ इत्यत्रापि भैरवतन्त्रस्य।

LIBRARY

CC-0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



२१०. **भैरवागमः**—भुजङ्गवेधनिरूपणावसरे तन्त्रालोके (२९।२५१) भैरवागमः स्मर्यते। सार्धैकः श्लोकश्च तत्रत्यो विवेके जयरथेन संगृह्यते। भैरवागमाख्यः कश्चन स्वतन्त्रो ग्रन्थः, उत चतुष्षष्टिभैरवागमेष्वन्यतमः। कुत्रत्यश्चायं श्लोक इति सर्वं गवेषणाया विषयः।

२११. **भोगमोक्षप्रदीपिका**—"मयाऽप्युक्तम्, मयोक्तम्, मयैव चोक्तम्" इत्यादिवचनैर्ग्रन्थ एष स्पन्दप्रदीपिकाकारस्य उत्पलवैष्णवस्यैव कृतिरिति ज्ञायते। रामकण्ठेन नरेश्वरपरीक्षाटीकायां भोगमोक्षनामा कश्चन ग्रन्थः स्मर्यते (पृ० १०८-१०९)। छन्दोभेदाद् भिन्न एव स ग्रन्थः स्यात्। १३०. त्रिविक्रम-२२५. महाबलविवरणमपि द्रष्टव्यम्।

२१२. **भोगहस्तकम्**—तन्त्रालोके (२९।१९८) स्मृत एव ग्रन्थः कुलसम्प्रदायस्य स्यात्। अत्र विवेककारेण जयरथेन तत्स्थाने श्रीपञ्चाशिका समुदाहृता। तेनानुमातुं शक्यते यत्समक्षं तस्यायं ग्रन्थो नासीदिति।

२१३. **मतङ्गटीका (व्याख्यानिगुरुकृतिः)**—"तथा मतङ्गटीकायां व्याख्यानिगुरुणोदितम्" (३।१४) इति शिवदृष्टिकारसोमानन्दवचनेन, "व्याख्यानिसंज्ञकेन गुरुणा मतङ्गटीकायामेवमेव विशिष्टमुक्तम्" (पृ० १०४) इति भट्टोत्पलवचनेन च मतङ्गशास्त्रस्य व्याख्याता प्राचीनोऽयमाचार्य इति ज्ञायते। अनिरुद्धप्रभृतयो गुरवो मतङ्गशास्त्रव्याख्यातारस्तन्त्रालोके तद्विवेके च स्मृताः। साम्प्रतं मतङ्गपारमेश्वरः सम्पूर्णो भट्टरामकण्ठकृतवृत्तिसहितो मुद्रितो वर्तते। तत्र व्याख्यानिगुरोरनिरुद्धस्य वा कापि चर्चा नास्ति।

२१४. **मतङ्गसूत्रम् (सम्पूर्णं मुद्रितम्)**—[1]मतङ्ग-मतङ्गपारमेश्वर-मतङ्गसूत्र-पारमेश्वरनामभिः स्मृतानि सर्वाणि वचनान्यत्र नोपलभ्यन्ते। अस्य विद्यापादस्य मूलमात्रस्य प्रकाशनं १९२८ ई० वर्षे देवकोट्टैनगरतो देवनागरलिप्यामेव सम्पन्नमासीत्। अधुना विद्यापादस्य रामकण्ठकृतवृत्तिसहितस्य पाण्डिचेरीस्थफ्रेंचशोधसंस्थानतः १९७६ ई० वर्षे पुनरपि प्रकाशनमभवत्, १९८२ ई० वर्षे च द्वितीयभागस्य। तत्र मतङ्ग-मतङ्गपारमेश्वर-मतङ्गसूत्रवचनानि भूयांसि समुपलभ्यन्ते। सिद्धान्तशैवभेदेष्वष्टाविंशतिशैवागमेषु षड्विंशतितमस्य पारमेश्वरागमस्योपागमभूतोऽयं मतङ्गपारमेश्वर इति तत्रोपोद्घातारम्भे दृश्यते। ता० सा०, पृ० ३६७-३६८, ४५५-४५६ इत्यत्र पारमेश्वरागमस्य मतङ्गपारमेश्वरस्य च मातृका विवृताः सन्ति। तत्रत्येन विवरणेन तयोर्भिन्नत्वमभिन्नत्वं च सिद्ध्यति। रामकण्ठकृतवृत्तिसहितस्य सम्पूर्णस्य मतङ्गसूत्रस्य मातृका ने० वी० II, पृ० ३१-३२ इत्यत्रापि वर्तते। उदयपुरस्था रामकण्ठकृता

---

१. पारमेश्वरं मृगेन्द्रवृत्तिविद्यापादे (पृ० ४१), पारमेश्वरं मतङ्गं च मृगेन्द्रवृत्तिक्रियापादे, मतङ्गपारमेश्वरं स्वच्छन्दे (५।६१), मतङ्गसूत्रं च शतरत्नसंग्रहे (पृ० १३) इत्यादिषु स्मर्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मतङ्गपारमेश्वरवृत्तिमातृकाऽस्माभिरन्यत्र[1] विवृता। पारमेश्वरागम(१८४)विवरणमपि द्रष्टव्यम्।

२१५. **मतदेवः**—महार्थमञ्जरीपरिमले समुद्धृतमस्य वचनमित्यतोऽधिकं न किमपि ज्ञायते। श्रीकण्ठ्यां ६४ तन्त्रेषु मततन्त्राणि परिगण्यन्ते।

२१६. **मतशास्त्रम्**—नि० उपोद्घाते (पृ० ४२) विवृतमेतदस्माभिः। श्रीकण्ठी-वर्णितचतुष्षष्टितन्त्रेषु मततन्त्राणि परिगण्यन्ते। मत (१५।१५७, १६९, ३१९)-मत-शास्त्र(४।२६२, २६९)-मतभट्टारक (१५।१२५)-मतमहाशास्त्र(२६।७४)नामभिस्तन्त्रालोके तद्विवेके च शास्त्रमेतत् स्मर्यते। क्षेमराजेन शिवस्तोत्रावलीविवृतौ (पृ० २१) मतागमः स्मर्यते। "मतादिशास्त्रेषु भगवद्भैरवभट्टारकपरिवारभूताश्च। तदुक्तम्" (पृ० ४२) इत्युत्थापनिकापूर्वकं कानिचन वचनानि संगृह्णात्यभिनवगुप्तः परात्रिंशिका-व्याख्यायाम् (पृ० ४३-४४)। मतशास्त्रनाम्ना संगृहीतं प्रथमं वचनं विज्ञानभैरवे (श्लो० ७३), द्वितीयं च कुब्जिकामते दृश्यते। "मतादिषु इति श्रीसिद्धामतादौ" (१५।१५६) इति च जयरथ आह। एवं च मतशास्त्रनाम्ना समुपलभ्यमानानि वचनानि कुब्जिकामते सिद्धामते चान्वेषणीयानि। विज्ञानभैरवः किं मतशास्त्रस्य ग्रन्थ इति किल विवेचनीयम्। मतसारनामकस्य ग्रन्थस्य मातृकाः ता० सा०, पृ० ४५६-४५७; ने० वी०, भा० २, पृ० २०४-२०५, २१०-११२ इत्यत्र विवृताः सन्ति।

२१७. **मतोत्तरम्**—नि० उपोद्घाते (पृ० २८, ४२) विवरणमस्य द्रष्टव्यम्। लक्ष्मीधरेण चतुष्षष्टितन्त्रेष्वेतत् परिगण्यते। श्रीमतोत्तरनाम्ना ने० वी०, भा० २, पृ० २०५-२१० इत्यत्राऽस्य मातृका विवृताः सन्ति, ता० सा०, पृ० ४५७, ४६५ इत्यत्र च। वाराणसीप्रकाशिता गोरक्षसंहिता अस्यैव त्रुटिपूर्णं संस्करणमिति प्रतीयते। मतोत्तरस्य मातृका म० म० हरप्रसादशास्त्रिणाऽपि विवृता। पिण्डं कुण्डलिनीति श्लोको यो० दी०, पृ० ५९ इत्यत्र स्वच्छन्दसंग्रहवचनत्वेन स्मर्यते। किं मतोत्तरमेव स्वच्छन्द-संग्रहः? परीक्षणीयमेतत्।

**मत्स्योदरीमतम्**—"मत्स्योदरीमतादिप्रसिद्धा विमर्शाभिधा क्रिया" (पृ० २८) इत्येवमभिनवगुप्तेन परात्रिंशिकाव्याख्यायां मत्स्योदरीमतं स्मर्यते। मत्स्योदराख्यस्य ग्रन्थस्य काश्मीरलिपिलिखितं हस्तलेखद्वयं काशीहिन्दूविश्वविद्यालयसंग्रहे (पृ० २१६) दृश्यते। जोधपुरस्य राजस्थानप्राच्यविद्याप्रतिष्ठानेऽपि सोऽयं ग्रन्थः समुपलभ्यते। मछोदरचोपई-मत्स्योदरकथा-मत्स्योदरचतुष्पदी-मत्स्योदररासप्रभृतयो ग्रन्था अपि दृश्यन्ते। सर्वेषामेषां परस्परं कः सम्बन्ध इति परीक्षणीयम्। "निजशक्त्याश्लिष्टः सदा पञ्चविधकृत्यकारो स्वतन्त्रः स्पन्दललितेश्वरादिशब्दैरागमेषूद्घोष्यते। स्वातन्त्र्य-शक्तिरेवास्य सनातनी पूर्णाहन्तारूपा परा मत्स्योदरी महासत्ता स्फुरत्तोर्मिः सारं हृदयं

१. "साहित्य संस्थान में आगमशास्त्र के विशिष्ट ग्रन्थ" इति शीर्षक उदयपुरस्य-साहित्यसंस्थानशोधपत्रिकायां प्रकाशितो निबन्धोऽस्मदीयो द्रष्टव्यः (व० २१, अ० ३, पृ० ७३-७५)।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



भैरवी देवी शिखा—इत्यादिभिरसंख्यैः प्रकारैस्तत्र तत्र निरुच्यते" (पृ० ६६) इत्यत्र तु स्पन्दनिर्णये क्षेमराजेन मत्स्योदरीशब्दः शक्तिपर्यायित्वेन निर्दिष्टः। एवमेव परात्रिशिकाव्याख्यायां २०७ पृष्ठेऽभिनवगुप्तेन प्रयुक्तो मत्स्योदरीशब्दोऽपि शक्तिमेव निर्दिशति, न कञ्चन ग्रन्थमिति विभावनीयम्।

२१८. **मनोनुशासनस्तोत्रम्**—"तदुक्तमस्मद्गुरुभिर्मनोनुशासनस्तोत्रे" इत्याकारकस्य वचनस्य परिमले (पृ० १२, ४४, ९१) समुपलम्भादस्य स्तोत्रस्य कर्ता महेश्वरानन्दस्य गुरुर्महाप्रकाश इति ज्ञायते। एष विषयस्तदुपोद्घातेऽस्मत्कृते (पृ० ङ) डॉ० रस्तोगीग्रन्थे (पृ० ८७, १७४, २१५) च विवेचितो द्रष्टव्यः। सेतुबन्धेऽपि स्तोत्रमेतत् स्मर्यत इति ता० सा०, पृ० ४५८ इत्यनेन ज्ञायते।

२१९. **मन्त्रराजः**—विद्यानन्दकृतनित्याषोडशिकार्णवव्याख्यार्थरत्नावलीस्मृतानि वचनान्यस्य ग्रन्थस्यात्र संगृहीतानि। टिप्पण्यां तत्र 'तन्त्रराजीये' इति पाठान्तरं दृश्यते। स्वच्छन्दोद्योतेऽपि (२।२००) मन्त्रराजस्य "इत्थमूर्ध्वमुखैः" इति वचनं स्मर्यते। अत्रापि तन्त्रराज इति पाठान्तरम्। कादिमताख्ये तन्त्रराजे वचनान्येतान्यन्वेषणीयानि। अथवा तन्त्रराजस्य प्राचीनस्येमानि वचनानि स्युः। मन्त्रराजमातृकाणां समुपलम्भात् स्वतन्त्र एष ग्रन्थ इत्यपि वक्तुं शक्यते। २४३६८ संख्याका सरस्वतीभवनस्था मन्त्रराजमातृकाऽत्र परीक्षणीया। एष ग्रन्थः श्रीविद्याविवरणनाम्ना शिवोपाध्यायेन विवृत इति डॉ० रस्तोगीग्रन्थे (पृ० २२६-२२७) वर्ण्यते। अनुभवबोधविद्याख्यमिति नामान्तरं तस्य। अनुभवबोधकश्रीविद्यामन्त्रविवरणमातृका हि० वि० (पृ० ७८०) इत्यत्र सी १०२३ संख्याका विवृता दृश्यते। एतदर्थं ता० सा०, पृ० ४७५; आ० I, पृ० ४३१; III, पृ० ९८ इति द्रष्टव्यम्। आगमतत्त्वविलासेऽपि स्मर्यत एष ग्रन्थ इति ता० सा०, पृ० ४७५ इत्यत्र निर्दिष्टम्।

२२०. **मन्त्रवार्त्तिकम्**, २२१. **मन्त्रवार्त्तिकटीका**—यथा रामकण्ठेन नरेश्वरपरीक्षाटीकायां मन्त्रवार्त्तिकं स्मृतम्, तथैव मतङ्गपारमेश्वरवृत्तावपि (पृ० ७२) तदेतत् खेटकबालकृतित्वेन स्मर्यते। श्लोकश्चायं तत्र प्रमाणत्वेनोपस्थाप्यते—

> निष्कलशम्भोर्वाग् यानीह निरञ्जनानि वस्तूनि।
> पञ्चमपादेन पुनस्तानि गृहीतान्यतीव शुद्धेन॥ इति।

एवं च खेटकतनयस्य सद्योज्योतिःशिवाचार्यस्य कृतिरियमिति निश्चप्रचम्। अत्र टीका रामकण्ठेन रचितेति—"उक्तमस्माभिर्मन्त्रवार्त्तिकटीकायाम्" (मो० का०, पृ० ४) इति तदुक्तिक एव ज्ञायते।

२२२. **मयतन्त्रम्, मय(मतम्), मयसंग्रहः**—मयतन्त्रं तन्त्रालोके (१६।१०८) स्मर्यते। नेत्रोद्योते च सर्वत्र केवलं मयनाम्नैव सर्वाणि वचनानि संगृहीतानि। स्वच्छन्दोद्योते वृषो धर्म इति वचनं मयसंग्रहनाम्ना संगृहीतम्। मयतन्त्रं मयमतं चैक एव

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



ग्रन्थः स्यात्। मयमतं मुद्रितं विद्यते। मयसंग्रहस्ततो भिन्नोऽभिन्नो वा ग्रन्थ इति तु परीक्षामपेक्षते। मयसंग्रहो हेमाद्रिणापि स्मृत इति आ० I, पृ० ४३२ इत्यतो ज्ञायते। मयमतं च तत्र प्रतिष्ठातन्त्रत्वेन [1]परिचायितम्। तत्र मयदीपिकाऽपि विवृता।

२२३. **मलयतन्त्रम्**—अस्य ग्रन्थस्य कस्यचन श्लोकस्य पाद एकः स्वच्छन्दोद्योते संगृहीतः। चिन्त्ये नैर्ऋतमित्यस्य स्थाने मलयमिति पाठो वर्तते। तेन सिद्धान्तशैवोपागमेष्वस्य मूले परिगणनं विधेयम्, न तु पाठभेदेषु। एवमेव ये आगमा उपागमा वोद्धरणमुखेन समुपलभ्यन्ते, तेषां नामान्यवश्यमेव मूलनामावल्यां स्थापनीयानि।

२२४. **महानयपद्धतिः**—ग्रन्थ एष महार्थमञ्जरीपरिमले समुद्धृत इत्यतोऽधिकमस्य विषये न किमपि ज्ञायते। डॉ० रस्तोगीग्रन्थोऽपि (पृ० २४४) द्रष्टव्यः।

२२५. **महाबलः**—"अस्मत्पितुर्मातामहाचार्येण महाबलेन" (पृ० ८४) इति स्पन्दप्रदीपिकावचनादाचार्योऽयमुत्पलवैष्णवस्य पितुस्त्रिविक्रमस्य मातामह इति ज्ञायते। डॉ० रस्तोगीग्रन्थोऽपि (पृ० १३०, १३२, १५१-१५२) द्रष्टव्यः। अनेन रहस्यस्तोत्रं रचितमिति तद्विवरणं (२६४) द्रष्टव्यम्। शारदातिलककर्तुर्लक्ष्मणदेशिकेन्द्रस्य प्रपितामहोऽपि वर्तते महाबलनामा, तस्य पुत्र आचार्यपण्डितः, तस्य श्रीकण्ठः, तस्य च लक्ष्मणदेशिकेन्द्र इति (शा० ति० २५।८३-८६)। अनयोरभेदः साम्प्रतं प्रमाणान्यपेक्षते। लक्ष्मणदेशिकोऽयं लक्ष्मणगुप्ततो भिन्न इति तु निश्चप्रचम्। १७१ पदसंगतिविवरणस्था टिप्पणी द्रष्टव्या।

२२६. **महाम्नायः**—महार्थमञ्जरीपरिमले समुद्धृतोऽयं क्रमदर्शनस्म ग्रन्थः। डॉ० रस्तोगीग्रन्थे विवरणमस्य न दृश्यते।

२२७. **महार्थोदयः**—"तत्तद्देवतामन्त्रोद्धारो मदीये महार्थोदये" (पृ० १०४), "मयैव महार्थोदये" (पृ० १२७) इति परिमलवाक्याभ्यां महेश्वरानन्देनैव विरचितोऽयं ग्रन्थ इति ज्ञायते। अत्र डॉ० रस्तोगीग्रन्थोऽपि (पृ० २१६, २१८-१९) द्रष्टव्यः।

२२८. **महावनमुनिः**—आचार्यस्यास्य श्लोक एको महार्थमञ्जरीपरिमले दृश्यते। अर्थरत्नावलीकारो विद्यानन्दः (नि० षो०, पृ० १) सर्वप्रथमं महावनेशानं नमति। सोऽयं महावनेशानो महावनमुनितोऽभिन्न एव स्यात्।

---

१. "प्रतिष्ठाकल्पकौमारं किरणं पिङ्गलामतम्। देव्यामतं मयं नन्दि प्रतिष्ठापारमेश्वरम्॥ भास्करं लिङ्गकल्पं च विद्यापुराणवाठुलम्। शक्राख्यं वामदेवं च द्विधा पैतामहं तथा॥ वाणगर्गमतं याम्यं हंसाख्यं वैश्वकर्मकम्। प्रतिष्ठातन्त्राण्येतानि शिवोक्तान्येकविंशतिः॥" (२।१७८-१८१) इति प्रतिष्ठालक्षणसारसमुच्चये वैरोचनीये परिगणितान्येकविंशतिप्रतिष्ठातन्त्राणि। अत्र मयमतमपि वर्तते। प्रायः सर्वाणीमानि तन्त्राणि शैवागमेषु उपागमेषु च परिदृश्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



२२९. **महास्वच्छन्दः**, २३०. **महास्वच्छन्दसंग्रहः**—अनयोर्विवरणं नि० उपोद्घाते (पृ० ४८) द्रष्टव्यम्। महास्वच्छन्दतन्त्रं महास्वच्छन्दसंग्रहश्च सौभाग्यभास्करेऽपि (पृ० ३०, ५१, ८८) स्मर्येते। महास्वच्छन्दसारसंग्रहस्य मातृका ता० सा०, पृ० ५०३ इत्यत्र विवृता। तया तुलनीयानि महास्वच्छन्दसंग्रहस्य वचनानि।

**मातङ्गीस्तोत्रम्**—आनन्दताण्डवविलासस्तोत्रविवरणमवलोक्यताम्।

२३१. **महेश्वरानन्दः**—अत्र द्वितीये भागे महार्थमञ्जरीपरिमले "मदीयं सूक्तम्" इत्युक्त्वोद्धृतः श्लोको महेश्वरानन्दनाम्ना संगृहीतः। सूक्तनामा कश्चन ग्रन्थः, अथवा स्फुटं किमपि पद्यमिति नाधुना वक्तुं शक्यते। महेश्वरानन्देन महार्थमञ्जरी तत्र स्वोपज्ञा परिमलाख्या व्याख्या च निर्मितैव; तदतिरिक्तं तेन कुण्डलाभरणम्, कोमलवल्लीस्तवः, नखप्रलापः, परास्तोत्रम्, पादुकोदयः, मुकुन्दकेलिः, महार्थोदयः, संविदुल्लास इत्येते ग्रन्था अपि रचिता इति महार्थमञ्जरीपरिमले तदुक्तिभिरेव ज्ञायते। एतेषु कुण्डलाभरण-नखप्रलाप-मुकुन्दकेलिनामानो ग्रन्थास्तत्र केवलं नाम्नाऽन्ये च वचनोद्धरणपुरस्सरं स्मृताः। परास्तोत्र-पादुकोदय-महार्थोदय-संविदुल्लासवचनान्यत्र प्रथमे भागेऽस्मिन्नुपोद्घाते च संगृहीतानि। कोमलवल्लीस्तवस्य वचनानि नात्र द्वयोरपि भागयोः समावेशितानीति तानि वाराणसीसंस्करणे ५०, ७२, ७६, ८६, ११२, ११८-११९ पृष्ठेषु द्रष्टव्यानि। क्रमाख्यः कश्चन ग्रन्थ इति तु साहसमात्रम्। सूक्तविषयेऽप्युक्तमेवास्माभिः। एवं च महार्थमञ्जरीं परिमलं च संमेल्य दश ग्रन्था महेश्वरानन्देन रचिता इत्येव निर्विचिकित्सं मन्तव्यम्। अत्र ३३२ संविदुल्लासविवरणमपि द्रष्टव्यम्। महेश्वरानन्दस्य स्थितिकालो योगतन्त्रविमर्शिन्यां प्रकाशितेऽस्मदीये निबन्धे निर्णीतो द्रष्टव्यः। तेन च तत्समयविषयकं डॉ० रस्तोगीमतं प्रमाणपराहतं भवति।

२३२. **मातृकाहृदयम्**—सौन्दर्यलहरीटीकायां सौभाग्यवर्धन्यां तन्त्रमेतत् स्मर्यते। भावार्थदीपिकायामपीति ता० सा०, पृ० ५११ इत्यनेन, गौरीकान्तेनापि स्मृतमेतदिति च आ० I, पृ० ४८८ इत्यनेन ज्ञायते। कश्चन मातृसद्भावभट्टारकस्तन्त्रालोके (१६।१९), मातृकासद्भावश्च परा० अभि०, पृ० १२५ इत्यत्र स्मृतः। अस्य मातृकाद्वयं ता० सा०, पृ० ५१३ इत्यत्र विवृतम्। परीक्षणीयमेतत्। मातृकाहृदय-मातृकासद्भावयोश्च भिन्नत्वमेवाभिप्रेतव्यम्।

२३३. **माधवकुलम्**—तदेतत् तन्त्रराजभट्टारकग्रन्थैकदेशभूतमित्यस्माभिस्तत्रैव (११८) विवृतम्।

२३४. **मानसोल्लासः**—सुरेश्वराचार्यकृतस्य दक्षिणामूर्तिस्तोत्रव्याख्यानस्य नाम वर्तते मानसोल्लास इति। तत्रात्रत्यानि वचनानि न दृश्यन्ते। वर्तते च गायकवाड़ग्रन्थमालायां मुद्रितो मानसोल्लासो भागत्रयात्मकः। स च भिन्नविषयको ग्रन्थः। त्रिपुरासम्प्रदायस्य ग्रन्थोऽयं प्रतीयते। आ० I, पृ० ४५३; आ० II, पृ० १०४; ता० सा०, पृ० ५१२ इत्येतेषु स्थलेषु निर्दिष्टा मातृकाः परीक्षणीयाः।

२३५. **मायावामनसंहिता**—संहितेयं स्पन्दप्रदीपिकायां स्मर्यते। "श्रीजयासंहितादृष्टयोक्त्वा मायावामनिकास्थित्याप्याह" (भा० I, पृ० २६३) इत्येवं नेत्रोद्योते

८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



क्षेमराजोऽप्येनां स्मरति। जयासंहिता पाञ्चरात्रागमे प्रसिद्धा जयाख्या संहितैव। अत्र (१३।२-९) वर्णितं नारायणस्य तच्छक्तीनां च ध्यानादिकं जयाख्यसंहितायां (६।७३-९१) तथैव दृश्यते। एवं च संहिताद्वयमेतन्नेत्रतन्त्रतः[1] प्राचीनमिति सुतरां सिद्ध्यति। जयासाहचर्यान्मायावामनसंहितापि पाञ्चरात्रान्तर्गतैवाभिप्रेतव्या। संहितानामावलीष्वस्या नाम न दृश्यते। नेत्रतन्त्रधृतमायावामनिकायामूर्ध्वलिङ्गिनो विश्वरूपस्य ध्यानं वर्ण्यते। अत्रैव नरसिंह-वराह-वामन-कपिलावताराश्च स्मर्यन्ते।

२३६. **मायावैभवागमः**—आगमोऽयमभिनवगुप्तेन ई० प्र० वि० वि०, भा० ३, पृ० ३८४ इत्यत्र स्मृतः। अत्र अष्टाष्टकभेदिनी भगवतो माया एकैवेति वर्णविचारप्रसङ्गे समुपस्थाप्यते। विशेषविवरणालाभे विषयोऽयं न स्पष्टीभवति। "त्रिषष्टिश्चतुष्षष्टिर्वा वर्णा शम्भुमते मताः" (श्लो० ३) इति पाणिनीयशिक्षानुसारं वर्णानां संख्या तावती भवति। किन्तु तेषां वर्णानामष्टाष्टकविभागः कथं विधेय इति प्रश्नः प्रामाणिकागमवचनोपलम्भानन्तरमेव समाहितः स्यात्। पाञ्चरात्रसंहितानामावलीष्वस्यागमस्य नाम दृश्यते।

२३७. **मालिनीतन्त्रम्**—परात्रिंशिकाव्याख्यायामभिनवगुप्तेन स्मृतस्य मालिनीतन्त्रस्य वचनं मालिनीविजयोत्तरतन्त्रे नोपलभ्यत इति तन्त्रमेतन्मालिनीमततो भिन्नमेव मन्तव्यम्। विष्णुक्रान्ताविभागेऽपि मालिनीतन्त्रं मालिनीविजयं च पृथक् परिगण्यते। मालिनीतन्त्रं सर्वोल्लासपरिगणितेषु चतुष्षष्टितन्त्रेष्वपि वर्तते। तत्र मालिनीमतस्य नाम नास्ति। ता० सा०, पृ० ५१६ द्रष्टव्यम्।

२३८. **मालिनीमतम् (मुद्रितम्)**—मालिनीमत-मालिनीविजय-मालिनीविजयोत्तर-मालिनीशासन-मालिनीशास्त्र-पूर्वशास्त्रप्रभृतीनि नामानि एकस्यैव ग्रन्थस्य मन्तव्यानि। ता० सा०, पृ० ५१६-५१७ इत्यत्र मालिनीविजयं मालिनीविजयोत्तरं च पृथग् विवृतम्। तन्न। मालिनीमतस्यात्र प्रथमे भागे संगृहीतास्त्रयोऽपि श्लोकाः काश्मीरसंस्कृतग्रन्थावल्यां मुद्रिते मालिनीविजयोत्तरतन्त्रे (१।४२-४५) समुपलभ्यन्ते। अत्र प्रथमे भागे संगृहीतस्य रहस्यशास्त्रद्वितीयोद्धरणस्य सर्वाणि वचनानि मालिनीविजयोत्तरे समुपलभ्यन्ते। तत्र दृश्यते वसिष्ठस्य नाम। तच्च योगवासिष्ठं स्मारयति। ततश्च योगवासिष्ठात् परमस्य तन्त्रस्य प्रादुर्भावो मन्तव्यः।

२३९. **मालिनीसारः**—मालिनीसारस्य सार्धैकः श्लोक ई० प्र० वि० वि०, भा० ३, पृ० २९३ इत्यत्र दृश्यते। मालिनीविजयोत्तरतन्त्रे तन्नोपलभ्यत इति ततो भिन्न एवैष ग्रन्थः। त्रिकसारे तु कदलीगर्भेति श्लोको वर्तते। किमेष मालिनीसारस्त्रिकसारादभिन्नः।

२४०. **मीनकुलम्**—नेत्रोद्योते मीनकुलनाम्ना स्मृतः श्लोकार्धस्त्रिकसारेऽपि पाठान्तरेण साकं समुपलभ्यते।

१. नेत्रतन्त्रस्य सम्पूर्णस्त्रयोदशोऽधिकारोऽवश्यं पठनीयः। अत्र—"विष्णु-शिव-सूर्य-बुद्धादिरूपतया"......"भगवानेक एव" (पृ० ९२) इति स्पन्दप्रदीपिकोद्धृतमायावामनसंहितासूचितं सर्वदेवसमाराधनं वर्ण्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



**मीननाथः**—"प्राणिनो जलजाः पूर्वं दीक्षिताः शम्भुना स्वयम्। विधिना भाविना श्रीमन्मीननाथावतारिणा ॥" (२६।७१) इत्येवं तन्त्रालोकेऽभिनवगुप्तेन मीननाथः स्मर्यते। "भाविना एकान्नत्रिंशाह्निकादौ वक्ष्यमाणेन (विधिना)" इति जयरथस्तत्र व्याख्याति। एकोनत्रिंशाह्निके च कौलिको यागः प्रतिपाद्यते। मीननाथेन कौलिको विधिरुपदिष्टः। स एव सकलकुलशास्त्रावतारकतया प्रसिद्धो मच्छन्दः। [1]अघोरशिवो मत्स्येन्द्रं कौलशास्त्रप्रवर्तकं मनुते। एवं च मच्छन्दविभुर्मत्स्येन्द्रो वात्र मीननाथ इति नाम्ना स्मृतो मन्तव्यः। अयमेवार्थः—"भैरव्या भैरवात् प्राप्तं योगं व्याप्य ततः प्रिये। तत्सकाशात्तु सिद्धेन मीनाख्येन वरानने ॥" (१।१; पृ० २४), "कामरूपे महापीठे मच्छन्देन महात्मना" (१।७) इत्याभ्यां तन्त्रालोकविवेके जयरथोद्धृताभ्यां वचनाभ्यामपि ज्ञायते। मत्स्येन्द्रनाथो गोरक्षनाथस्य गुरुरिति प्रवादस्त्वस्माभिर्नित्याषोडशिकार्णवोपोद्घाते (पृ० ११६-११७), महार्थमञ्जरीपरिमलोपोद्घाते (पृ० ङ-च), हिन्दीसंस्कृतभाषानिबद्धेषु च केषुचिन्निबन्धेषु बहुशः समालोचितः। अस्यामेव पृष्ठभूमौ आ० I, पृ० ४५५; आ०, II, पृ० १०५ इत्यत्रत्यं विवरणं द्रष्टव्यम्।

२४१. **मुकुटतन्त्रम्**, २४२. **मुकुटसंहिता**—शतरत्नसंग्रहे मुकुटतन्त्रनाम्ना, स्वच्छन्दोद्योते ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां च मुकुटसंहितानाम्ना, तन्त्रालोके च मुकुटशास्त्रनाम्ना स्मृतो ग्रन्थोऽष्टादशरुद्रागमान्तर्गत इति प्र० सा० (२।१११) इत्यनेन, सिद्धान्तशैवागमोपागमसूचीतश्च ज्ञायते। प्रथमे माकुटं द्वितीये च मकुटं नामास्य दृश्यते। उपागमस्याप्येतदेव नाम। ता० सा०, पृ० ४५४, ५१७-५१८ इत्यत्र मकुटतन्त्र-मकुटागम-मुकुटसंहिता-मुकुटागमनामभिस्तन्त्रमेतद्विवृतम्। मुकुटसंहिताया नाम परा० अभि०, पृ० २३७; स्व० उ० २।३० इत्यत्रापि दृश्यते। मुकुटागमस्य मातृकाऽजितागमद्वितीयभागे (पृ० २०४) सूचिता, आ० I, पृ० ४१९ इत्यत्र च।

२४३. **मुकुटोत्तरम्**—तन्त्रालोके स्मर्यते। अष्टादशरुद्रागमान्तर्गतस्य मुकुटस्योपागमतया मुकुटोत्तरं शैवागमसूचीषु दृश्यते। तदभिन्नमेतन्मुकुटोत्तरं स्यात्।

२४४. **मुख्याम्नायक्रमः**, २४५. **मुख्याम्नायरहस्यविधिः**—नि० उपोद्घाते (पृ० ४३) विवरणमनयोर्द्रष्टव्यम्।

२४६. **मूलतन्त्रम्**—शतरत्नसंग्रहे स्मृतमेतत् तन्त्रमिति तेन शिवागमान्तर्गतेन भाव्यम्। न च तत्र नामास्य दृश्यते। भैरवागमेषु च श्रीकण्ठीपठितेषु तन्त्रमेतद् दृश्यते।

२४७. **मृगेन्द्रोत्तरम्**—स्वच्छन्दोद्योते स्मर्यते तन्त्रमेतत्। ता० सा०, पृ० ५२४ आ० II, पृ० १०७ इत्यत्र मातृकास्य विवृता। आ० I, पृ० ४६५ तु मृगेन्द्रतन्त्रादभिन्नमेतदिति निदर्श्यते, नारायणकण्ठवृत्तिश्च तत्र स्मर्यते। अत्रत्यं प्रथममुद्धरणं च तत्र क्रियापादे (७।४२) समुपलभ्यते। द्वितीयं तु वचनं तत्र न दृश्यते।

१. "हिरण्यगर्भ-कपिल-मत्स्येन्द्रादयो वेद-सांख्य-कौलादितन्त्राणाम्" (पृ० ७४) इत्येवं मृगेन्द्रवृत्तिदीपिकायां देवकोट्टैनगरतः शिवागमसिद्धान्तपरिपालनसंघसंस्थया १९२८ ई० वर्षे प्रकाशितायां द्रष्टव्यमेतत्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



२४८. **मोक्षोपायः**—योगवासिष्ठस्यैवापरमिदं नामधेयम् । "मोक्षोपायाभिधा-नेयं संहिता सारसंज्ञिका । त्रिंशद् द्वे च सहस्राणि ज्ञाता निर्वाणदायिनी ॥" (२।१७।६) इति, "मोक्षोपायाभिधं शास्त्रमिदं वाचयताऽनिशम्" (नि० उ० १७४।२३) इति च तत्रैव दृश्यते । का० वि० संग्रहे (पृ० ३०४, ३४२) राजानकभास्करकण्ठविरचिताया मोक्षो-पायव्याख्याया मातृका विवृताः सन्ति । कृतेऽपि प्रयत्ने मुद्रिते योगवासिष्ठे नोपलब्धोऽत्र मोक्षोपायनाम्ना संगृहीतः श्लोकः ।

२४९. **यज्ञसूत्रम्**—ग्रन्थोऽयं स्वच्छन्दोद्योते स्थलद्वये स्मृतः । वैदिकस्तान्त्रिको वाऽयं ग्रन्थ इति न निश्चेतुं शक्यते । यज्ञसूत्रविधानस्य, यज्ञसूत्रप्रमाणस्य वा मातृका-भेदतन्त्रान्तर्गतस्य मातृका आ० I, पृ० ४७०, ता० सा०, पृ० ५३१ इत्यत्र विवृता ।

२५०. **योगपादः (मुद्रितः)**—योगपादस्य मतङ्गसूत्रीयस्य त्रीणि वचनानि शतरत्नसंग्रहस्थान्यत्र प्रथमे भागे संगृहीतानि । मतङ्गपारमेश्वरागमस्य योगपादे (चतुर्थपटले) सर्वाण्येतानि वचनानि समुपलभ्यन्ते ।

२५१. **योगसंचरः**, २५२. **योगसंचारः**—योगचार-योगसंचर-योगसंचारनामभि-रेक एव ग्रन्थस्तन्त्रालोके तद्विवेके तन्त्रसारे च अभिनवगुप्तजयरथाभ्यां स्मृतः । ने० वी०, भा० २, पृ० ११२ इत्यत्र योगिनीसंचारस्य मातृका विवृता । अत्र वचनानी-मान्यन्वेषणीयानि ।

२५३. **योगिनाथः**—अस्याचार्यस्य वचनद्वयं स्पन्दप्रदीपिकायां दृश्यते । "उक्तं च योगिनाथेन ह्येतच्चिच्छक्तिसंस्तुतौ" (पृ० ८७) इति वचनादत्रत्यं प्रथमं वचनं योगिनाथकृतचिच्छक्तिसंस्तुतिग्रन्थस्येति ज्ञायते । द्वितीयमपि वचनं तत्रत्यमेव स्यात् । चिच्छक्तिसंस्तुति(९५)विवरणं द्रष्टव्यम् ।

२५४. **योगिनीकौलम्**—ग्रन्थोऽयं तन्त्रालोके तद्विवेके च स्थलद्वये स्मृतः । "उक्तं च योगिनोकौले तदेतत्परमेशिना" (७।४०) इति तन्त्रालोकवचनादागमग्रन्थोऽयं प्रतीयते । योगिनोकौलसम्प्रदायश्च मृगेन्द्रागमे चर्यापादे (१।४०) विवृतः ।

२५५. **योगीश्वराचार्यः**—विरूपाक्षपञ्चाशिकाविवृतौ विद्याचक्रवर्तिना आचा-र्योऽयं स्मर्यते । तत्र हि सकलीकरणलक्षणमाचार्येणानेनोपपादितमुद्धृतम् । त्रिकदर्शन-विषयकस्याचार्यस्यास्य कस्यचन ग्रन्थस्यैतदुद्धरणं स्यात् । योगीश्वर इति याज्ञवल्क्यस्य विशेषणमिति तु सत्यम् (आ० I, पृ० ४८१), किन्त्वत्र प्रकाशविमर्शादिशैवागम-पारिभाषिकशब्दानां दर्शनादाचार्योऽयं योगीश्वरयाज्ञवल्क्यात् पृथगेवाभिप्रेतव्यः ।

२५६. **रत्नत्रयम् (मुद्रितम्)**— देवसालपुरीशिवागमसिद्धान्तपरिपालनसंघा-ध्यक्षैः श्रीरङ्गे श्रीवाणीविलासमुद्रणालये १९२५ ई० वर्षे मुद्रापयित्वा प्रकाशितम्, अष्टसु प्रकरणग्रन्थेष्वन्यतमत्, श्रीकण्ठसूरिणा विरचितम्, अघोरशिवाचार्यकृतरत्नत्रयो-ल्लेखिन्याख्यया व्याख्यया सहितम् । अत्रत्यः १२८ संख्याकः श्लोकोऽत्र प्रथमे भागे संगृहीतः ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



२५७. **रत्नदेवः**—महार्थमञ्जरीपरिमले संगृहीतेऽत्रत्ये वचने 'देवि' इति संबोधनदर्शनात् कश्चनागमग्रन्थोऽयं प्रतीयते। महामोक्षतन्त्रेऽपि नाम इदं दृश्यत इति ता० सा०, पृ० ५४८ इत्यनेन ज्ञायते। पूर्वाम्नायतन्त्रस्य कर्ता रत्नदेव इति आ० III, पृ० १०५ इत्यत्र वर्तते।

२५८. **रत्नमाला**—कुलरत्नमाला(७०)विवरणमत्र द्रष्टव्यम्। अत्र केषाञ्चन वचनानामुभयोर्भागयोर्द्विरावृत्तिर्दृश्यते। समानानि च वचनानि द्वाभ्यामपि नामभ्यामुद्धृतानि वर्तन्ते। तेनैकस्यैव शास्त्रस्य नामद्वयमिति निश्चीयते। "रत्नमालायामिति श्रीकुलरत्नमालायाम्" (त० वि० १।२७४) इति जयरथवचनं चात्र प्रमाणम्। रत्नमाला परमेशिना, कुलरत्नमाला च सिद्धनाथेन पठितेत्यस्याः समस्यायाः समाधानं च "द तन्त्राज" इत्याख्ये ग्रन्थे श्रीचक्रवर्तिप्रदर्शितपद्धत्या विधेयम्। ता० सा०, पृ० ५४८ इत्यपि द्रष्टव्यम्। "रत्नमालाकुलागमे" (२८।१२८) इति तन्त्रालोकवचनात् कुलागमस्य ग्रन्थोऽयमिति निश्चीयते। तन्त्रालोके २८।११२, १२८, ३०९, ४१६; ३७।२५ इत्येतानि स्थलान्येतान्यवलोकनीयानि। श्रीमाला (३२४) च रत्नमालातोऽभिन्नैव।

२५९. **रससारसंग्रहः**—नि० उपोद्घाते (पृ० ४४) विवरणमस्य द्रष्टव्यम्। एतन्नामकः कश्चन आयुर्वेदग्रन्थः आ० I, पृ० ४९६ इत्यत्र विवृतः, ग्रन्थोऽयं गङ्गाधरकृत इति च। आयुर्वेदग्रन्थेषु बहुषु तान्त्रिकमन्त्रयन्त्रादीनामुपयोगः प्रदर्श्यत एव।

२६०. **रसान्वयः**—रसान्वयशास्त्रमेतन्महार्थमञ्जरीपरिमले स्मृतमित्यतोऽधिकं न किमपि ज्ञायतेऽस्य विषये।

२६१. **रहस्यविधिः**—नेत्रोद्योते क्षेमराजेन स्मृत एष ग्रन्थो दीक्षितानामन्त्येष्टिसंस्कारनिरूपणावसरे।

२६२. **रहस्यशास्त्रम्**—अत्र प्रथमे भागे रहस्यशास्त्रस्य त्रीणि वचनानि विज्ञानभैरवविवृतितः स्पन्दप्रदीपिकातश्च संगृहीतानि। रहस्यशास्त्रमिति नहि कस्यचन ग्रन्थस्य नाम, किन्तु सामान्येन तन्त्रशास्त्रस्य रहस्यात्मकस्य वाचकम्। अत्रत्यं प्रथमं वचनं [1]संकेतपद्धतेः, द्वितीयं मालिनीविजयोत्तरतन्त्रस्य (१८।७४-८१), तृतीयं च सर्वमङ्गलाशास्त्रस्येत्यवगन्तव्यम्। द्वितीयोद्धरणे दृश्यते वसिष्ठस्य नाम। तच्च योगवासिष्ठं स्मारयति। ततः परतरं पङ्क्तित्रयं योगवासिष्ठस्यैव स्यात्।

२६३. **रहस्यसिद्धिसोपानम्**—ग्रन्थोऽयं सौन्दर्यलहरीटीकायां सौभाग्यवर्धन्यां कुण्डलिनीषट्चक्रभेदनिरूपणावसरे प्रमाणत्वेनोपन्यस्तः।

२६४. **रहस्यस्तोत्रम्**—अस्य स्तोत्रस्य वचनचतुष्टयं स्पन्दप्रदीपिकायामुद्धृतं दृश्यते। "यथार्थनाम्नः क्रोधे" इति महाबलनाम्ना संगृहीतं वचनमपि रहस्यस्तोत्रस्यैव

१. संकेतपद्धतिस्थं वचनमकारस्य शिरो रौद्रीत्येवंपाठपुरस्सरं त० वि० (३।६७) इत्यत्र दृश्यते। तेन संकेतपद्धतिग्रन्थस्य जयरथपूर्ववर्तित्वं सिद्ध्यति। रहस्यशास्त्रस्य द्वितीयोद्धरणस्थो विषयस्तन्त्रालोकेऽपि (४।१०६-१०९) "उक्तं च श्रीपूर्वशास्त्रे" इत्यादिना वर्णितः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



विद्यते, "अस्मत्पितुर्मातामहाचार्येण महाबलेन "यथार्थनाम्नः क्रोधे" इत्यादिनोक्तो विभवोदयो रहस्यस्तोत्रे" (पृ० ८४) इति तत्र सम्पूर्णस्य वाक्यस्य दर्शनात्। महाबल-(२२५)विवरणमपि द्रष्टव्यम्। आगमरहस्यस्तोत्र(२०)मितो भिन्नमिति चास्माभिः प्रतिपादितमेव। डा० रस्तोगी(पृ० १४९)ग्रन्थे रहस्यगर्भस्तोत्रनाम्ना तदेतद् विवृतम्। रहस्यस्तोत्रनाम्ना संगृहीतम् "एषोऽन्यत्र" इति वचनं तु तत्रत्यं नास्ति।

२६५. **राजभैरवसूत्रम्**—अत्रत्यम्—"पामरप्रवृत्तिः प्रमाणम्" (पृ० १४६) इत्येतावन्मात्रं वाक्यं महार्थमञ्जरीपरिमले शाक्तोपायनिरूपणावसरे प्रमाणितं दृश्यते।

२६६. **राजराजभट्टारकः**—महार्थमञ्जरीपरिमले मन्त्रस्वरूपनिरूपकोऽस्य श्लोक एकः समुपलभ्यते।

२६७. **रात्रिकुलम्**—तन्त्रालोके समयदीक्षानिरूपणप्रसङ्गे स्मृतमेतत्।

२६८. **रामकण्ठः**—रामकण्ठोऽयं स्पन्दकारिकाविवृतिकारो राजानकश्रीमदुत्पल-देवपादपद्मानुजीवी राजानकरामनाम्ना प्रथिततमः। "श्रीराम आदित्यराजश्च पृथक् पृथक् स्तोत्रशय्यायां न्यवेशयत्" (शि० स्तो० वि०, पृ० २) इति क्षेमराजवचनानुसार-मनेन भट्टोत्पलस्य मुक्तकश्लोकाः स्तोत्रशय्यायां संनिवेशिताः। "स्वस्तोत्रे प्रतिपादितोऽ-स्माभिः" (स्पन्द० राम०, पृ० १६४), "स्तुतिद्वारेण राजानकरामो दृब्धवान्" (पर० योग०, पृ० १४५) "यथोक्तं रामेण" (प्र० हृ०, पृ० ६५), "यदुक्तं स्तोत्रे" (स्पन्द० राम०, पृ० १३५) इति वचनैरनेन कश्चन स्तोत्रग्रन्थोऽपि रचित इति स्पष्टीभवति। तत्रत्या एव त्रयः श्लोका अत्र संगृहीताः सन्ति। अस्मिन् प्रसङ्गेऽस्मदीयः [1]काश्मीरे-तिहाससमालोचको निबन्धोऽपि द्रष्टव्यः। अनेन स्तवचिन्तामणिविवृतिरपि रचितेति क्षेमराजवचनत एव ज्ञायते।

आ० I, पृ० ५०७ इत्यत्र रामकण्ठस्येमे ग्रन्था निर्दिष्टाः सन्ति—आत्मार्थपूजा-पद्धतिः, नादकारिका, नरेश्वरपरीक्षाप्रकाशः, भगवद्गीताभाष्यम्, मतङ्गवृत्तिः, स्पन्द-विवृतिः, स्पन्दकारिकाविवरणम्, स्पन्दसर्वस्वविवरणम्, परमोक्षनिरासकारिकावृत्तिः, भोगकारिकावृत्तिः, मोक्षकारिकावृत्तिश्चेति। अत्रेदं विभावनीयम्—स्पन्दविवृत्यादिकं नामत्रयमेकस्यैव ग्रन्थस्य मन्तव्यम्। तस्य च कर्ता राजानकराम उपरि वर्णितः। स च नारायणकण्ठसुतरामकण्ठाद् भिन्नः। अत्रत्याः शिष्टा ग्रन्था ग्रन्थद्वयमपहाय नारायण-कण्ठसुतरामकण्ठेन रचिता इति वक्तुं शक्यते। आत्मार्थपूजापद्धतिं विहाय मुद्रिताश्च ते समुपलभ्यन्ते। तत्र भोगकारिकावृत्तिरघोरशिवाचार्येण रचिता। भगवद्गीताभाष्यकर्ता च कश्चन भिन्न एव रामकण्ठः प्रतीयते। वर्तते च विद्याकण्ठगुरुः रामकण्ठः। तस्य च सद्वृत्तिमनुकुर्वता श्रीकण्ठेन रत्नत्रयं नाम प्रकरणं रचितमिति प्रतिपाद्यते[2]। जाति-

१. तन्त्रयात्रायां काश्मीरेतिहास इत्याख्यो निबन्धः पुनर्मुद्रितः। तत्र १०२-१०३ पृष्ठे द्रष्टव्ये।

२. पाण्डिचेरीस्थफ्रेंचशोधसंस्थानतः १९७७ ई० वर्षे प्रकाशितस्य मतङ्गपारमेश्वरविद्या-पादस्य उपोद्घाते पृ० ३९ अवलोकनीयम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



निर्णयपूर्वंकालयप्रवेशविधी रामकण्ठस्य मुद्रितो ग्रन्थः। किरणागमवृत्तिः, सार्धत्रिशतिक-कालोत्तरागमवृत्तिः, व्योमव्यापिस्तवश्चेति त्रयो ग्रन्था मातृकारूपेण, मन्त्रवार्त्तिकटीका, आगमविवेकः, रौरववृत्तिविवेक इत्येते च ग्रन्था उद्धरणमुखेन तस्योपलभ्यन्त इति मतङ्गपारमेश्वरविद्यापादोपोद्घाते (पृ० ४०-४१) द्रष्टव्यम्। तस्य सर्वागमप्रामाण्यमत्र (३४६) विवृतं वर्तते। "दर्शितमस्माभिः सर्वागमप्रामाण्योपन्यासे रौरववृत्तिविवेके" (म० पा० वृ० ३।२०) इति तद्वचनेन रौरववृत्तिविवेकोऽपि तेन रचित इति ज्ञायते। स्वायम्भुवोद्योतश्च तेन निर्मित इति नरेश्वरपरीक्षाप्रकाशतो (पृ०३९, ८८-८९) ज्ञायते। सार्धत्रिशतिकालोत्तरवृत्तिः साम्प्रतं मुद्रितोपलभ्यते। नादकारिकाश्लोकः क्षेमराजेन नेत्रोद्योते (२१।५८) स्मर्यंत इति नारायणकण्ठसुतरामकण्ठः क्षेमराजात् पूर्वतनः।

२६९. **रुद्रयामलसारः (मुद्रितः)**—अभिनवगुप्तेन रुद्रयामलसारनाम्ना संगृहीतः श्लोकार्धो विज्ञानभैरवे (श्लो० ९३) दृश्यते। "रुद्रयामलतन्त्रस्य सारमद्यावधारितम्" (श्लो० १६०) इति तत्रत्यवचनाद् विज्ञानभैरवो रुद्रयामलतन्त्रस्य सारभूत इति सिद्ध्यति। एवं च विज्ञानभैरववचनमेवाभिनवगुप्तेन रुद्रयामलसारनाम्ना संगृहीतमिति वक्तुं शक्यते। "इत्येतद् रुद्रयामलम्" (श्लो० ३५) इति वचनात् परात्रिंशिकाख्य-मनुत्तरसूत्रमपि रुद्रयामलसारभूतम्, किन्तु तत्र श्लोकार्धं एष नोपलभ्यते।

२७०. **रुद्ररहस्यम्**—सौन्दर्यलहरीटीकायां लक्ष्मीधरायामरुणामोदिन्यां च तदेतत् स्मर्यते। किं शिवरहस्यमेव रुद्ररहस्यनाम्नाऽत्र स्मृतमिति तु परीक्षणीयम्।

२७१. **रौरववार्त्तिकम्**, २७२. **रौरवसंग्रहः**, २९०. **वार्त्तिककारः**—"तत्र हि वार्त्तिककारस्तच्छब्देन मायां व्याख्यातवान्" (त० वि० ९।२१७) इत्यत्र जयरथो रौरववार्त्तिककारं स्मरति। रौरववार्त्तिकस्य प्रथममुद्धरणं च (८।९२) टीकायां संगृह्णाति। "गुरुभिर्गीतं श्रीमद्रौरवशासने" (८।१०१) इत्यत्र च "गुरुभिरिति बृहस्पतिपादैः। यदुक्तं तत्र" (पृ० ७६) इत्युक्त्वा द्वितीयमुद्धरणं संगृह्णाति, (८।१८३) टीकायां च तत्रत्यं तृतीयमुद्धरणम्। अत्र—"गुरुभिर्गीतं श्रीमद्रौरवशासने" (८।१०१) इति तन्त्रालोकवचनं विशेषतोऽवधानार्हम्। "मायातोऽव्यक्तकलयोरिति रौरवसंग्रहे" (९।४०) इत्यत्र जयरथः—"रौरवसंग्रह इति बृहत्तन्त्रापेक्षया।.......अत्र च—"अव्यक्तं च ततः" इति तच्छब्देन मायापरामर्शं इति बृहस्पतिपादाः। यदुक्तम्—"मायातोऽव्यक्त-कलयोः कलातो रागविद्ययोः" इति। "पूर्वं पुनर्व्याख्यातृभेदमवलम्ब्य "मायातोऽव्यक्त-कलयोः" इत्याद्युक्तम्" (९।२१७) इत्यत्रापि स वचनमेतत् स्मरति। एभिर्वचनैर्वयमुत्प-श्यामो यद् रौरववार्त्तिककारो बृहस्पतिपादः, स एव च बृहत्तन्त्रं रौरवागमं रौरवसंग्रह-नाम्ना संचिक्षेप इति। बृहस्पतिपादेन शिवतनुशास्त्रमार्याछन्दसि, रौरववार्त्तिकं चानुष्टुप्श्लोकेषु निबद्धमिति ज्ञायते। एवं च नारायणकण्ठेन मृगेन्द्रवृत्तौ स्मृतो जन्तोरिति श्लोकोऽपि वार्त्तिकस्यैव स्यात्। रौरवसंग्रहो बृहस्पतिपादेन संगृहीत इति च पुनः परीक्षणमपेक्षते। रुरुसंग्रह(स्व० उ० ५।१०।४०२)-रौरवसूत्रसंग्रह(ई० प्र० वि० वि०, भा० २, पृ० ३०५) इति नामभ्यामपि स एव ग्रन्थः स्मर्यते। प्रथमे द्वितीये च भागे वार्त्तिककारनाम्ना संगृहीतानि वचनानि रौरववार्त्तिकस्यैव स्युः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



२७३. **रौरवागमः (मुद्रितः)**—रुरु-रुरुशासन-रुरुसंहिता-रौरव-रौरवमत-रौरवशासन-रौरवसंहिता-रौरवसूत्रनामभिः स्मृतो रौरवागमो दशाष्टादशभेदभिन्नेषु सिद्धान्तशैवागमेष्वन्यतमो रुद्रागमेषु षष्ठः साम्प्रतं पाण्डिचेरीस्थ-फ्रेंचशोधसंस्थानतो मुद्रितः समुपलभ्यते भागद्वयात्मकः। २७१ रौरववार्तिक-२७४ रौरवागमवृत्तिविवरणं द्रष्टव्यम्। "गुरुश्चैव रुरौ सम्यङ्न्यरूपयत्" (८।१६२) इति तन्त्रालोकवचने गुरुपदेन वृत्तिकारो वार्तिककारो वा ग्राह्यः।

२७४. **रौरवागमवृत्तिः**, ३०५. **वृत्तिकारः**—"उक्तं च गुरुभिः श्रीमद्रौरवादिस्ववृत्तिषु" (६।१३४) इत्यत्राभिनवगुप्तः, "आदिशब्दाद् रुरुवृत्तिकारोक्तिः" (६।१३७), "वृत्तिकारस्तु आनन्तर्यमिति" (९।२१७) इत्यत्र च जयरथो रौरववृत्तिकारं स्मरति। तन्त्रालोके (६।१३५) वृत्तिग्रन्थस्थ श्लोकात्मकं वचनम्, विवेके च "यद् रुरुवृत्तिः" (९।२११) इत्युक्त्वा गद्यात्मकं द्वितीयं वचनं स्मृतम्। तेन तन्त्रवार्तिकसदृशो गद्यपद्यमयोऽयं ग्रन्थः स्यात्। वृत्तिरियं सद्योज्योतिषा विरचितेति—"सद्योज्योतिः सुवृत्तिकृत्" (श्लो० ५७) इति, "सुवृत्तिः सद्वृत्तिरिति रौरववृत्तेर्नाम" इति च तत्त्वसंग्रहतट्टीकावचनाभ्यां ज्ञायते। रौरवागममनुसृत्य वृत्तिकृताऽनेन सद्योज्योतिषा तत्त्वसंग्रहः, भोगकारिका, मोक्षकारिका, परमोक्षनिरासकारिका चेति प्रकरणचतुष्टयं निर्मितम्। "दर्शितमाचार्येण रौरववृत्तौ परमोक्षनिरासकारिकासु" (न० प० टी०, पृ० ४७) इत्यादिरामकण्ठवचनप्रामाण्यादेते प्रकरणग्रन्था रौरवागमवृत्त्यङ्गभूता इत्यनुमातुं शक्यते। मतङ्गपारमेश्वरानुवन्धधृतवृत्तौ—"गुणतत्त्वोर्ध्वभोगस्य कर्मणोऽनुपलब्धितः। कैवल्यमपि सांख्यानां नैव युक्तमसंक्षयात्॥" (पृ० ६०९) इत्ययं श्लोको रौरववृत्तिनाम्ना धृतः। अयं च परमोक्षनिरासकारिकासु (श्लो० ५२) समुपलभ्यत इति द्रढयत्यनुमानमुपर्युक्तम्। "दर्शितमस्माभिर्विस्तरेण रौरववृत्तिविवेकपरमोक्षनिरासकारिकासु" (न० प० टी०, पृ० ९५), "दर्शितमस्माभिः सर्वागमप्रामाण्योपन्यासे रौरववृत्तिविवेके" (म०पा० ३।२०) इति रामकण्ठवचनाभ्यां तेन रौरववृत्तिविवेकनामा ग्रन्थो रचित इति ज्ञायते। द्वितीये भागे संगृहीतानि वृत्तिकारस्य त्रीणि वचनान्यत्रत्यान्येव स्युः।

२७५. **लक्षणसारः**—नि० उपोद्घाते (पृ० ४५) विवरणमस्य द्रष्टव्यम्। वैरोचनकृतप्रतिष्ठालक्षणसारसमुच्चयग्रन्थेन सह तुलनाऽस्य विधेया।

२७६. **लक्ष्मीकौलार्णवः**—अयं ग्रन्थः क्षेमराजेन स्वच्छन्दोद्योते स्थलत्रये स्मृतः। श्यामासपर्याविधौ सौभाग्यभास्करे चायं स्मर्यत इति ता० सा०, पृ० ५६५ इत्यत्र दृश्यते। तत्र सौभाग्यभास्करे लक्ष्मीतन्त्रं स्मर्यते। तच्च लक्ष्मीकौलार्णवाद् भिन्नम्। लक्ष्मीकुलार्णव आत्मतत्त्वविलासे क्षेमराजेन स्मृत इति च आ० I, पृ० ५३७ इत्यत्र दृश्यते। एतन्नामको न कोऽपि ग्रन्थः क्षेमराजस्यान्यस्य वा कस्यचन समुपलभ्यते। आगमतत्त्वविलासः परं रघुनाथतर्कवागीशस्य शिवरामपुत्रस्य वर्तते।

२७७. **लक्ष्मीसंहिता**—परमार्थसारव्याख्यायां योगराजेन स्मृता संहितैषा लक्ष्मीतन्त्रतो भिन्ना। पाञ्चरात्रसंहितासूचीषु नास्य नाम दृश्यते, अथापि निश्चप्रचमियं

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पाञ्चरात्रसंहितैव । आ० I, पृ० ५४०; आ० III, पृ० ११४ इत्यत्र विवृता मातृकाः परीक्षणीयाः ।

२७८. **लघुचर्चाकुलम्**—ज्ञानदीपविमर्शिन्यां विद्यानन्देनास्य श्लोकद्वयं मद्य-मांसयोराध्यात्मिकार्थप्रदर्शनपरं स्मृतम् ।

२७९. **लघुबृंहणी**—बृंहणी(१९८)विवरणं द्रष्टव्यम् ।

२८०. **ललिता**—संहितेयमभिनवगुप्तेन स्मर्यते । प्र० सा० (२।१११) इत्यत्र शैवागमसूचीषु चाष्टादशरुद्रागमान्तर्गतेयं पठ्यते । ता० सा०, पृ० ५६९ इत्यत्रास्या मातृका विवृता । एतन्नामक उपागमोऽपि तत्रैव दृश्यते । विष्णुक्रान्ताविभागे ललिता-तन्त्रं परिपठ्यते ।

२८१. **लाद्यादिशास्त्रम्**—अभिनवगुप्तेन "सप्तदशी कला श्रीलाद्यादिशास्त्रेषु निरूपिता" (प० त्रिं०, पृ० २०१) इत्युक्त्वाऽत्रत्यः श्लोकार्धः स्मृतः ।

२८२. **लिङ्गोद्भवम्**—उपपुराणमेतत् कुमारेण तत्त्वप्रकाशव्याख्यायां स्मृतम् ।

२८३. **लीलाकारः**—"केचिदिति लीलाकारादयः" (८।१०८) इति जयरथ-प्रामाण्यात् तन्त्रालोकेऽत्र केचिदिति पदेन लीलाकारः स्मर्यते । कर्मकाण्डक्रमावल्यां (पृ० ३१-३२) लीलावतीनामकः शिवागमः स्मृतः । न दृश्यते शैवागमोपागमसूचीषु तस्यागमस्य नाम, अश्वक्रान्ताविभागे तु दृश्यते ।

२८४. **वरुणपद्धतिः**—शतरत्नसंग्रहे वरुणपद्धतिरुद्धृता । सिद्धान्तशैवसम्प्रदायेऽ-ष्टादशपद्धतिकारेषु वरुणोऽप्यस्ति । ईशानशिवगुरुदेवपद्धतौ स स्मर्यते । ता० सा०, पृ० ५८२ इत्यत्र मातृका अस्य विवृताः, अस्या एव नामान्तरं सिद्धान्तदीप इति च तत्रोक्तम् ।

२८५. **वाजसनेयतन्त्रम्**—अभिनवगुप्तेन, क्षेमराजेन, जयरथेन च तन्त्रमेतत् स्मृतम् । वाजसिनेया-वाजसनेया-वाजसनीयेत्येवं नाम्नि मात्राकृतो विभेदो लेखकप्रमाद-कृत इति विभावनीयम् ।

२८६. **वातुलोत्तरम्**—शतरत्नसंग्रहे स्मृतमेतत् । उपागमनामावलीषु वातुलो-पागमतया, लक्ष्मीधरेण भास्कररायेण च चतुष्षष्टितन्त्रान्तर्गततयाऽस्य नाम स्मर्यते । ता० सा०, पृ० ५८७ इत्यपि द्रष्टव्यम् । वातुलशुद्धाख्यं तन्त्रं देवनागरीलिप्याम्, वातुल-शुद्धागमो ग्रन्थलिप्यां मुद्रिते समुपलभ्येते । वातुलागमस्य च मातृकोपलब्धा । वातुला-गमः सिद्धान्तशैवागमेषु चतुष्षष्टितन्त्रेषु च पठ्यते ।

२८७. **वाद्यतन्त्रम्**—अनुत्तरस्वरूपविवेचनावसरेऽभिनवगुप्तेन तन्त्रमेतत् स्मृतम् ।

२८८. **वामननाथः**—अद्वयसम्पत्तिवार्तिक(३)विवरणमत्र द्रष्टव्यम् । "द्वय-सम्पत्तिकारस्तु वामननाथः" (वि० भै० वि०, पृ० ७८), "श्रीह्रस्वनाथेन हर्षदत्तसूनु-नाऽपि····इत्यादिनाऽद्वयसम्पत्तौ" (वि० भै० वि०, पृ० ९०), "एष एव श्रीवामनविरचितेऽ-



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



द्वयसम्पत्तिवार्त्तिके उपदेशनयो बोद्धव्यः" (परा० अभि०, पृ० १९८), "गुरुभिर्वामन-दत्ताचार्येण, भाषितमिति संवित्प्रकाशे" (त० वि०, ५।१५४-१५५) इत्येतेभिरुद्धः रणैर्वामनो वामननाथो वामनदत्तो ह्रस्वनाथो वाऽयमद्वयसम्पत्तिवार्त्तिकस्य संवित्प्रकाशस्य च कर्ता हर्षदत्तसूनुरिति विज्ञायते। वामनदत्तः संवित्प्रकाशकर्तेति आ० I, पृ० ५६४ इत्यत्रत्येन विवरणेनापि बोद्धयते। ह्रस्वनाथवामननाथयोः साह-चर्याच्छरीरेणायं वामनावतारः स्यादिति संभाव्यते। क्षेमराजेन (स्पन्द०, पृ० ४८) भट्टश्रीवामन इति, योगराजेन (पर०, पृ० १४६) च भट्टश्रीवीरवामनक इति नामपुरस्सर-मस्य वचनमुद्ध्रियते। डा० रस्तोगीग्रन्थे (पृ० १७६-१८३) ह्रस्वनाथद्वयी प्रति-पादिता, प्रथमस्य तस्य समयश्च निर्धारितः। महेश्वरानन्दसमयनिर्धारणवद् ह्रस्वनाथ-समयनिर्धारणे कृतस्तस्य स्तुत्यः प्रयासो नैव याथार्थ्यं प्रकटयति। ह्रस्वनाथद्वयीस्वीकारो नैवौचित्यं भजते। एक एव ह्रस्वनाथः। स चाभिनवगुप्ततः प्राचीन इति मन्तव्यम्। लोल्लट-शङ्कुक-नायकप्रभृतयो महान्तो दार्शनिका आलङ्कारिकाश्च तान्त्रिकोपासका अप्यासन्निति नैव विस्मर्तव्यम्। एवं च क्रमदर्शनाचार्यो ह्रस्वनाथोऽद्वयसम्पत्तिवार्त्तिक-संवित्प्रकाशसदृशानां ग्रन्थानां कर्ता मीमांसावनकेसरी च स्यादित्यत्र किमाश्चर्यम्। संवित्प्रकाश(३३०)-सुबोधमञ्जरी(३७०)-स्वबोधोदयमञ्जरी(३९०)विवरणानि द्रष्टव्यानि।

२८९. **वीयवीयसंहिता (मुद्रिता)**—शिवपुराणान्तर्गता सप्तमी वायवीयसंहिता मुद्रिता वर्तते। तत्रान्वेष्टव्यानि वचनान्यत्र संगृहीतानि। शतरत्नसंग्रहे वायवीयस्य वायव्यस्य वा वचनानि समुद्धृतानि। वर्तेते च वायव्यस्य वायुप्रोक्तस्य चोपागमद्वयस्य नामनी शैवसिद्धान्तोपागमसूचीषु। सर्वमेतत् परीक्षणीयम्। आ० I, पृ० ५६४-५६५ इत्यत्रत्यं विवरणं च द्रष्टव्यम्।

२९०. **वार्त्तिककारः**—रौरववार्त्तिक(२७१)विवरणं द्रष्टव्यम्।

२९१. **वासुदेवः**—विज्ञानभैरवविवृतौ शिवोपाध्यायेनायमाचार्यः स्मर्यते। आ० II, पृ० १३४ इत्यत्र काश्मीरः कश्चन वासुदेवस्तस्य चित्तप्रदीपाख्यो ग्रन्थो वेदान्ताख्या व्याख्या च वर्ण्यते। न्यू० VII, पृ० ३४ इत्यत्रापि चित्तप्रदीपस्तस्य वेदान्ताख्या व्याख्या च विवृता। तदनुसारमेष ग्रन्थः १८६६ ई० वर्षे लिखितः। शिवोपाध्यायस्य च समयो डॉ० रस्तोगीग्रन्थे १७२५-१७७५ ई० निर्धारितः। तेन शिवोपाध्यायोद्धृताद् वासुदेवाद् भिन्न एव स स्यात्। कालनिर्धारणे कश्चन व्यत्यासः स्यादिति धिया चित्तप्रदीपे वासु-देववचनमन्वेषणीयम्। रथक्रान्ताविभागे वासुदेवरहस्यं पठ्यते।

२९२. **विंशतिकत्रिकम्**—त्रिकतन्त्रमेतत् तन्त्रालोके मन्त्रविद्याचक्रोदयप्रसङ्गेऽ-भिनवगुप्तेन स्मृतम्। "आद्यन्तोदयनिर्मुक्ता मध्यमोदयसंयुताः। मन्त्रविद्याचक्रगणाः सिद्धिभाजो भवन्ति हि॥" (७।५५) इत्ययं श्लोकोऽपि तत्रत्य एव।

२९३. **विज्ञानेन्दुकौमुदी**—ज्ञानेन्दुकौमुदी(१०८)विवरणं द्रष्टव्यम्।

२९४. **विद्याधिपतिः**—अनुभवस्तोत्र(१३)-प्रमाणस्तुति(१९४)विवरणं द्रष्टव्यम्। "गुरुः श्रीविद्याधिपतिः, मानस्तुतौ प्रमाणस्तोत्रे" (त० वि० ९।१७३), "श्रीमान् विद्या-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


गुरुस्त्वाह प्रमाणस्तुतिदर्शने" (तन्त्रा० १७।११५) इत्याभ्यामुद्धरणाभ्यामपि ग्रन्थकर्तुर्नाम विद्यागुरुः, विद्याधिपतिरिति च, ग्रन्थस्य च नाम मानस्तुतिः, प्रमाणस्तुतिः, प्रमाणस्तोत्रमिति च सिद्ध्यति। एवं च अनुभवस्तोत्र-प्रमाणस्तोत्रयोः कर्ता विद्याधिपतिरेवेति निश्चितम्। प्रथमभागे (पृ० १२३) पठितमनुष्टुप्पङ्क्तित्रयम्, द्वितीयभागे (पृ० १५९) च विद्याधिपतिनाम्ना स्मृतोऽनुष्टुप्श्लोकश्चानयोः स्तोत्रयोर्न स्यात्। किन्तु तन्त्रालोके—"श्रीमान् विद्यागुरुस्त्वाह प्रमाणस्तुतिदर्शने"(१७।११५) इत्यतः परमनुष्टुप्छन्दोनिबद्धं सार्धश्लोकद्वयं दृश्यते। प्रथमभागेऽनुभवस्तोत्रोद्धरणानन्तरमत्र प्रमाणस्तुतिस्मरणानन्तरमनुष्टुप्छन्दोनिबद्धमेतद्वचनद्वयम्, मोक्षकारिकाव्याख्यायां च रामकण्ठेन धृतं वचनमनयोः स्तोत्रयोः केचन श्लोका अनुष्टुप्छन्दोमया अपि स्युः, अथवा तेन स्वतन्त्रोऽनुष्टुप्छन्दोनिबद्धो ग्रन्थोऽपरो रचितः स्यादिति संभावनां पोषयन्ति। रामकण्ठस्य मतङ्गपारमेश्वरवृत्तावपि सन्त्यत्रत्याः श्लोकाः।

लकुलीशादिविद्यागुर्वन्तानामष्टादशपाशुपताचार्याणां नामावली गुणरत्नकृतषड्दर्शनसमुच्चयटीकायामथ च राजशेखरसूरिकृते षड्दर्शनसमुच्चये दृश्यते। विद्यागुरुरेष विद्याधिपतितोऽभिन्नः स्यादित्युपर्युक्तैरुद्धरणैरनुमातुं शक्यते। विद्याधिपतिपदेन रत्नाकरो हरविजयकर्ता परामष्टव्य इति क्षेमेन्द्रः सुवृत्ततिलके (२।२०) वदति। सुभाषितावल्यामस्य ये श्लोकाः संगृहीतास्ते हरविजये नोपलभ्यन्त इति आ० I, पृ० ५७३ इत्यत्र द्रष्टव्यम्।

२९५. **विमर्शदीपिका**—विज्ञानभैरवविवृतावस्या उद्धरणद्वयं दृश्यते। ग्रन्थकारविषये तु तत्र न किमपि दृश्यते। विज्ञानभैरवटीका शिवोपाध्यायकृता मुद्रितेति विवरणमस्याः ता० सा०, पृ० ५९६ इत्यत्र दृश्यते। तन्न, शिवोपाध्यायेन स्वटीकायां नामपुरस्सरमस्याः पृथग्ग्रन्थत्वेन स्मरणात्।

२९६. **विवेकमार्तण्डः**—अयमपि ग्रन्थो विज्ञानभैरवविवृतौ शिवोपाध्यायेन स्मर्यते। ग्रन्थकारस्य तु नाम न दृश्यते। काशीहिन्दूविश्वविद्यालयसूच्यां विवृता गोरक्षनाथकृतस्य विवेकमार्तण्डस्य सी ४२४२ संख्याका मातृका परीक्षणीयाऽत्र (पृ० २२०)। आ० I, पृ० ५८१; आ० III, पृ० १२३ अत्रत्यं विवरणमपि पश्यतु।

२९७. **विवेकाञ्जनम्**—"यदाह भट्टदिवाकरवत्सो विवेकाञ्जने" (ई० प्र० वि०, भा० १, पृ० २४) इत्यभिनवगुप्तोक्त्या भट्टदिवाकरवत्सस्य कृतिरियम्। सोऽयं दिवाकरवत्सो भट्टभास्करात् शिवसूत्रवार्त्तिककारादभिन्नः कक्ष्यास्तोत्रमपि जग्रन्थेति कक्ष्यास्तोत्र(४३)विवरणं द्रष्टव्यम्।

२९८. **विश्वसंहिता**—स्पन्दप्रदीपिकाकारेण उत्पलवैष्णवेन ध्येयसमापत्तिप्रसङ्गे प्रमाणत्वेनोदाहृता। श्रीकण्ठीपठितचतुष्षष्टितन्त्रनामावल्यां विश्वाद्यं विश्वमतं वा पठ्यते। शैवागमनामावलीष्वपि विश्वं विश्वात्मकं च वातुलोपागमतया परिगण्यते। विश्वसंहिता पाञ्चरात्रसंहितास्वन्यतमा।

२९९. **विश्वसारोत्तरसूत्रम्**—शैवागमग्रन्थोऽयं शतरत्नसंग्रहे स्मर्यते। विश्वसारतन्त्रस्य विश्वसारोत्तरतन्त्रस्य च मातृकाः ता० सा०, पृ० ५९८ इत्यत्र विवृताः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



शैवागमनामावलीष्वस्य नाम न दृश्यते। विश्वसारतन्त्रं सर्वोल्लासे विष्णुक्रान्ताविभागे च परिपठ्यते।

३००. **विषयपञ्चिका**—ग्रन्थस्यास्य श्लोक एको महार्थमञ्जरीपरिमले शाक्तोपायप्रकरणे संगृहीतः।

३०१. **विष्णुयामलम्**—स्पन्दप्रदीपिकायामुत्पलवैष्णवेनास्य श्लोकद्वयं संगृहीतम्। यामलाष्टके तदेतत् परिपठ्यते सर्वत्र, श्रीकण्ठ्यामपि च। ज्योत्स्नाटीकासहितस्य विष्णुयामलस्य मातृकाः ता० सा०, पृ० ६००; आ० I, ५९२; III, पृ० १२४ इत्यत्र विवृता उक्तश्लोकद्वयान्वेषणपुरस्सरं परीक्षणीयाः।

३०२. **वीरनागः**—आचार्यस्यास्य वचनमभिवनगुप्तेन स्मर्यते। वामननाथापरपर्यायो ह्रस्वनाथो वीरनाथपादनाम्नाऽपि प्रसिद्ध इति जयरथ(त०वि०, आ० ४, पृ० १९६)वचनतो ज्ञायते। एनं वीरवामनकनाम्ना योगराजः (पर०, पृ०१४६) स्मरति। त्रिपुरासारसमुच्चयकारो नागभट्टः सुप्रसिद्धस्तन्त्रवाङ्मये योगशास्त्रग्रन्थेषु च। ऋजुविमर्शिन्यां (पृ० ११९) भट्टनागनाम्नाऽयमुद्धृतः। लघुस्तवव्याख्यायां[1] त्रिपुरासारसमुच्चयः कविहस्तमल्लोक्त इति समुदटङ्कि। 'शारदापीठ रिसर्च सिरीज' (भा० १, अ० ३, सन् १९६०) इत्यत्र नागार्जुनकृतित्वेन चित्तसन्तोषत्रिंशिका परमार्चनत्रिंशिका च प्रकाशिते। नागभट्टस्येमे कृती इति वयमुत्पश्यामः। चिद्वल्ल्यां (पृ० ४) कामकलाविलासटीकायां नागानन्दः कश्चन स्मर्यते। अत्रत्यं तस्य वचनं चिद्विमर्शिनीमातृकायां बीकानेरस्थित-अनूपपुस्तकालयस्य ६६६२ संख्याकायां प्रारम्भ एव दृश्यते। "नागभट्टापरपर्यायभवभूतिविद्वद्विरचिता चिद्विमशिनी सम्पूर्णा" इति तत्रत्यपुष्पिकावाक्यान्नागभट्टो नागानन्दो वाऽस्य कर्ता। "श्रीसोमानन्दकल्याणभवभूतिपुरोगमाः। तथाहि त्रीशिकाशास्त्रविवृतौ तेऽभ्यधुर्बुधाः॥" (तन्त्रा० १३।१४९-१५०) इत्यभिनवगुप्तवचनप्रामाण्यान्नागभट्टापरपर्यायो भवभूतिरेव किमत्र वीरनागपदेनोक्तः? किं तेनैव पूर्वोक्तत्रिंशिकाद्वयमपि निर्मितम्? अथवा त्रिपुरासारसमुच्चयकारेण नागभट्टेन तद् रचितम्, उत वा चिद्विमर्शिनीकारेण पश्चाद्वर्तिना केनचिन्नागानन्देन नागभट्टापरपर्यायेण तद्रचितम्, किं वा स्वतन्त्रेणैव केनचिन्नागार्जुनेनेदं रचितमिति सर्वमेतत् समस्यानिचयं समाधानसापेक्षम्। अर्चनात्रिंशिका महेश्वरानन्देन स्मृता। तस्य च कर्ता न बौद्धः, अपि तु कश्चन शैवाचार्य इति तु निश्चप्रचम्।

३०३. **वीरयामलम्**—यामलमेतद् विज्ञानभैरवविवृतौ शिवोपाध्यायेन स्मृतम्। यामलाष्टकनामावलीषु तु कुत्रापि नामाऽस्य न दृश्यते। ता० सा० इत्यत्र वीरभद्रयामलं विवृतं वर्तते।

३०४. **वीरावलीशास्त्रम्**—वीरावलि-वीरावली-वीराली-वीरावलीकुल-वीरालीहृदय-वीरावलीपद-वीरावलीभैरव-वीरावलीशास्त्र-वीरावलीहृदयनामभिरेक एव ग्रन्थः

१. सोमतिलकसूरिणा विरचिता लघुस्तवव्याख्या सैषा साम्प्रतं राजस्थानपुरातनग्रन्थमालायां १९५२ ई० वर्षे मुद्रिता समुपलभ्यते। "कविहस्तिमल्लोक्तत्रिपुरासारसमुच्चयात्" इति वाक्यं तत्र (पृ० २) द्रष्टव्यम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्मर्यते। कुलसम्प्रदायस्य ग्रन्थोऽयम्। सिद्धान्तशैवरुद्रागमेष्वपि वीरागमस्तदुपागमश्चैतन्नाम्नैव पठ्यते। वीरावलीशास्त्रस्य भूर्जपत्रमय्याः शारदालिपिलिखिताया मातृकाया नाम हिन्दूविश्वविद्यालये डॉ० वासुदेवशरण-अग्रवालसविधे विद्यमानासु विक्रेतव्यग्रन्थसूचीष्वस्माभिर्दृष्टम्। हि० वि० इत्यत्र स्थिता वीरभद्रकृतवीरावलीमातृका शारदालिपिमयी सी ७७६ संख्याका परीक्षणीया (पृ० १८४)।

"श्रीवीरावलौ च सप्तमोद्देशे बहूक्तम्। तच्च प्रागपि संवादितमिति ग्रन्थविस्तरभयान्न पुनर्लिखितम्। तत्तत एवावधार्यम्" (१२।२४), "हार्देशो हृदयभट्टारकः, खेमतं खेचरीमतम्, अर्णवो योन्यर्णवः, तद्वर्तिषु अर्थाद् ग्रन्थैकदेशेषु। उत्फुल्लेति उत्फुल्लकमतम्। मर्यादाहीनं निर्मर्यादशास्त्रम्" (२९।१६५-१६६) इति जयरथवचनद्वयम्, तन्त्रालोकस्थानि च २९।१७७,१८६;३२।४७ इमानि वचनानि, "इदानीं श्रीवीरावल्युक्तमप्यस्या विधिमाह" (३२।३२) इति जयरथवचनं च द्रष्टव्यम्।

३०५. **वृत्तिकारः**—रौरवागमवृत्ति(२७४)विवरणमवलोकनीयम्।

३०६. **वैहायसीसंहिता**—उत्पलवैष्णवेन स्पन्दप्रदीपिकायां पाञ्चरात्रग्रन्थसन्दर्भे सैषा स्मृता। पाञ्चरात्रसंहितानामावलीषु चास्या नाम दृश्यते। ता० सा०, पृ० ६०८ इत्यत्र वैहायसीमन्त्रकोशः शारदातिलकटीकायां राघवभट्टकृतायां स्मर्यत इति विवृतम्।

**व्याख्यानिगुरुः**—मतङ्गटीका(२१३)विवरणमवलोकनीयम्।

३०७. **व्यासाक्षिणी**—परमोक्षनिरासकारिकावृत्तौ रामकण्ठः—"व्यासाक्षिण्यां तत्रभवानवधूतः" इत्युक्त्वाऽत्रत्यं परमशिवः सिद्धानिति वाक्यं समुद्धरति। तेन कश्चन व्याख्याग्रन्थोऽयमिति प्रतीयते। अवधूतसिद्धस्य भक्तिस्तोत्रं साम्प्रतं मुद्रितमुपलभ्यते। तच्च वसन्ततिलकाच्छन्दोनिबद्धं स्तोत्रम्। नारायणकण्ठकृतमृगेन्द्रागमवृत्तौ योगपादेऽनुष्टुप्छन्दोबद्धः श्लोको दृश्यतेऽवधूतसिद्धस्य। तेनानुष्टुप्छन्दोनिबद्धमपि ग्रन्थान्तरं तेन रचितमिति संभाव्यते। अपि च, नारायणकण्ठ एव विद्यापादेऽपि (पृ० ६८-६९) श्लोकमेकं तन्नाम्नैव समुद्धरति। तद्यथा—"तथाह तत्रभवानवधूताचार्यः—"त्वन्मतेश्वरविज्ञाननिष्पन्ना अपि मुक्तयः। भजन्ते नाविसंवादमाम्भसा इव [1]कृष्टयः॥" इति। न्यू० I, पृ० ४१४-४१७ इत्यत्र विवृतेषु सुभाषितावली-ललितविस्तराप्रभृतिग्रन्थेषु अवधूतसिद्धस्यान्यान्यपि वचनानि समुपलभ्येयुः। साम्प्रतमेव मुद्रितायां सार्धत्रिशतिकालोत्तरवृत्तौ (पृ० ३) तत्रभवतोऽवधूतसिद्धस्यानुष्टुप्छन्दोबद्धः श्लोको वर्तते।

३०८. **शचीमतम्**—महेश्वरानन्देन महार्थमञ्जरीपरिमले स्थलद्वये स्मृतमेतत्।

३०९. **शम्भुभट्टारकः**—शम्भुभट्टारकस्य श्लोक एको योगराजेन स्मृतः। स एव श्लोक उत्पलवैष्णवकृतायां स्पन्दप्रदीपिकायाम् (पृ० १२१), द्वादशारनयचक्राख्यस्य जैनदर्शनग्रन्थस्य टीकायां (पृ० ११९९) च समुपलभ्यते। आ० I, पृ० ६३६ इत्यत्र आनन्दस्य पिता शम्भुभट्टारकः श्रीकण्ठचरिते (२५।९७) वर्ण्यते। स च अन्योक्ति-

---

१. कृष्टयो जलोपरिकृता रेखा इत्यर्थः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मुक्तालता-राजेन्द्रकर्णपूरयोर्निर्माता। सुभाषितावलौ पद्यावलौ च तस्य श्लोकाः संगृहीताः सन्तीति विवृतम्।

३१०. **शम्भ्वैक्यदीपिका**, ३११. **शाम्भवदीपिका**—शिवानन्दकृतेः शम्भुनिर्णयदीपिकाया एवेमे उभे अपि नामनी इति वयमुत्पश्यामः। अस्या अपूर्णा मातृका मद्रपुरीराज्यपुस्तकालये विद्यते, यस्याः ८२०९३ संख्याका प्रतिलिपिः सरस्वतीभवन-पुस्तकालये संगृहीता। सहस्रार्धस्य मतेशस्य शम्भुनिर्णयाख्यस्य व्याख्यानमेतत्। अत्र सर्वाणि वचनानि परिमले, सौभाग्यवर्धन्यां च सौन्दर्यलहरीटीकायां स्मृतान्युपलब्धानि स्युः। नि० उपोद्घाते (पृ० १९) शिवानन्दपरिचयो द्रष्टव्यः।

३१२. **शिवज्ञानबोधसंग्रहः**—"शिवज्ञानबोधाख्यो द्वादशसूत्रात्मको ग्रन्थः कश्चन शैवसिद्धान्तानुगामिभिः प्रमाणत्वेनाद्रियते। तद्व्याख्यात्रा सदाशिवाचार्येण तच्छिष्यपरम्परागतेन शिवाग्रयोगिना च स्वस्वव्याख्याने सूत्राणामेतेषां रौरवागमान्तर्गतत्वं प्रतिपाद्यते। तदनुसृत्य बहुभिर्द्रविडदेशीयव्याख्यातृभिः शिवज्ञानबोधो रौरवागमादुद्धृत इति व्यवह्रियते।····रौरवागमीयज्ञानपादस्य संग्रहरूपो रौरवसूत्रसंग्रहो दशपटलात्मको रौरवागमप्रथमभागेऽस्माभिः प्रकाशितः। सम्पूर्णोऽयं भागः। तत्र शिवज्ञानबोधसूत्राणि न लब्धानि। पाशविमोचनाख्यपटलोऽपि नास्माभिरुपलब्धः। पाशविमोचनाख्ये द्वादशाध्याये—इत्येतादृशो विभागो मूलागमेषु नैव दृश्यते।···· शिवज्ञानबोधाख्योऽयं कश्चन स्वतन्त्र एव ग्रन्थ इत्येव प्रतीतिर्जायते।" (पृ० २०-२१) इत्यादिकं शिवज्ञानबोधस्य विवरणं रौरवागमद्वितीयभागसंस्कृतोपोद्घाते पाण्डिचेरीमुद्रिते द्रष्टव्यम्।

३१३. **शिवतत्त्वविलासः**—मुक्तानां पदषट्कप्रतिपादकमत्रत्यं वचनं शतरत्नसंग्रहे समुद्धृतं दृश्यते।

३१४. **शिवतनुशास्त्रम् (बृहस्पतिपादस्य)**—"उक्तं च गुरुभिरित्थं शिवतन्वाद्येषु शासनेष्वेतत्" (तन्त्रा० ८।३४५), "तथाहि शिवतनुग्रन्थे गुरुपादैर्निरूपितम्" (ई० प्र० वि० वि०, भा० ३, पृ० २७१), "श्रीबृहस्पतिपादैः शिवतनावन्वर्थव्याख्यातस्वरूपत्वाच्च" (स्व० उ०, भा० १, प० १, पृ० ४) इत्यादिभिर्वचनैर्बृहस्पतिपादः शिवतनुशास्त्रस्य कर्तेति सिद्ध्यति। अत्र बृहस्पतिपाद(१९९)-रौरववार्त्तिक(२७१)-विवरणमपि द्रष्टव्यम्। किञ्च, प्रथमोद्धरणटीकायाम्—"आदिशब्दाद् रुरुवार्त्तिकादि" (त० वि०, ८।३४५) इति जयरथवचनात् शिवतनुशास्त्रकारो बृहस्पतिपाद एव रुरु(रौरव)वार्त्तिककारोऽपीति स्पष्टं सिद्ध्यति।

३१५. **शिवधर्मः**—शतरत्नसंग्रहे, महार्थमञ्जरीपरिमले, स्वच्छन्दोद्योते च ग्रन्थ एष स्मर्यते। शिवधर्मशास्त्र-शिवधर्मसंग्रहयोर्मातृकाः आ० I, पृ० ६४९; आ० II, पृ० १५४, आ० III, पृ० १३४; ता० सा०, पृ० ६३१ इत्यत्र विवृताः। तत्रान्वेषणीयानीमानि वचनानि। अजितागमे कारणागमे चोपागमेषु वायुप्रोक्तमित्यस्य स्थाने शिवधर्मः पठ्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



३१६. **शिवधर्मोत्तरम्**—शतरत्नसंग्रहे, योगराजव्याख्याने, तत्त्वप्रकाशव्याख्याने च ग्रन्थ एष उद्धृतः। शैवागमनामावलीषु शर्वोक्तस्योपागमतया परिपठितः। मातृका अस्य आ० I, पृ० ६४९; आ० II, पृ० २२९; आ० III, पृ० १३४; ता० सा०, पृ० ६३१ इत्यत्र विवृताः। अड्यारपुस्तकालयेऽपि सन्ति मातृकाः। उपागमेष्वस्यान्तर्भावो द्रष्टव्यः। काशिराजपुराणन्याससंस्थया शिवधर्मस्य शिवधर्मोत्तरस्य च संस्करणं सज्जीक्रियत इति श्रूयते।

३१७. **शिवसूत्रम्**—शिवसूत्राणि यानि वृत्तिवार्त्तिकव्याख्यानादिपुरस्सराणि मुद्रितानि समुपलभ्यन्ते, तत्र ई० प्र० व्रि० वि० समुद्धृतं[1] सूत्रमेतन्नोपलभ्यते। वसुगुप्तगुरुः कल्लटाय स्वशिष्याय चतुःखण्डानि शिवसूत्राणि प्रादात्। तेन च स्पन्दसूत्रैरस्य खण्डत्रयम्, तत्त्वार्थचिन्तामण्याख्यटीकया चान्तिमं खण्डं व्याकृतमिति शिवसूत्रवार्त्तिकारम्भे भास्करकण्ठ आह। अन्तिमखण्डस्थमेवैतत् सूत्रं स्यात्। "शिवसूत्रवृत्त्योर्मधुवाहिनीतत्त्वार्थचिन्तामण्योर्भट्टश्रीकल्लटपादैः (ई० प्र० वि० वि०, भा० २, पृ० ३०) इत्यभिनवगुप्तवचनेन खण्डत्रयेषु मधुवाहिनी, चतुर्थे च तत्त्वार्थचिन्तामणिसमाख्या वृत्तिः कल्लटेन रचितेति प्रतीयते।

३१८. **शैवतन्त्रम्**—अत्र प्रथमे भागे योगिनीहृदयदीपिकायाममृतानन्दयोगिना स्मृतानि कस्यचन शैवतन्त्रस्य विषुवत्प्रकरणसंबद्धानि पञ्च वचनानि संगृहीतानि। शैवतन्त्रमिति सामान्या संज्ञा। नह्यनया कश्चन विशिष्टो ग्रन्थः परामृष्टः। कस्य शैवतन्त्रस्य वचनानीति तु साम्प्रतं गवेषणाया विषयः। विषुवद्विवरणं स्वच्छन्दतन्त्रेऽपि चतुर्थे पटले वर्तते। तत्रेमानि वचनानि न दृश्यन्ते।

३१९. **श्रीकण्ठपादः**—भट्टारकश्रीकण्ठपादा इमेऽभिनवगुप्तेन स्मृताः। शिवसूत्रवार्त्तिककारो भास्करो ग्रन्थारम्भे (श्लो० ८) स्वगुरुं श्रीकण्ठभट्टं स्मरति। श्रीकण्ठपाद एष ततोऽभिन्न एव स्यात्।

३२०. **श्रीकण्ठीसंहिता**—नि० उपोद्घात(पृ०४६)वर्णितश्रीकण्ठसंहितातोऽभिन्ना। अत्र हि—"स्रोतोभेदेन नानाशास्त्रप्रपञ्चोदयः प्रदर्शितः" (स्व० उ०, भा० ४, प० ८, पृ० १९) इति क्षेमराजदिशा नानाशास्त्रप्रपञ्चः समुपवर्णितः। दिङ्मात्रं च तस्य जयरथधृतवचनेषु समवलोक्यते। अद्यावधि कापि मातृकाऽस्या नोपलब्धा।

३२१. **श्रीकुलम्**—अस्य श्लोक एको योगराजेन परमार्थसारविवृतौ स्मृतः शक्तिपातप्रसङ्गे। आगमग्रन्थोऽयम्। श्रीकुलं कालीकुलमिति सम्प्रदायद्वयं समस्ति शाक्ते सम्प्रदाये। तत्र ग्रन्थ एष प्रथमसम्प्रदायस्यागमग्रन्थ इति प्रतीमः। आ० I, पृ० ६६८ इत्यपि द्रष्टव्यम्।

---

१. स्पन्दसन्दोहेऽन्यदपि सूत्रद्वयमेतादृशं वर्तत इति डॉ० रस्तोगीग्रन्थे (पृ० ११०) तत् संगृहीतम्। एतच्च सूत्रद्वयं स्पन्दसन्दोहे (पृ० २५) इत्यत्र दृश्यते। अभिनवगुप्तस्तु सूत्रद्वयमेतत् सारस्वतसंग्रहसूत्रनाम्ना समुपन्यस्यति (ई० प्र० वि० वि०, भा० ३, पृ० २३) इत्यत्र। तन्नाम्नैवास्माभिः सूत्रद्वयमेतत् संगृहीतं द्वितीये भागे।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



३२२. **श्रीपञ्चाशिका**—"समयी तु करस्तोभादिनि श्रीभोगहस्तके" (२९।१९८) इति तन्त्रालोके दृश्यते। विवेककारो जयरथस्तु "यच्छ्रीपञ्चाशिका" इत्युक्त्वा श्लोकार्धमुद्धरति। भोगहस्तकस्य श्रीपञ्चाशिकायाश्च कीदृशः संबन्ध इत्यधुना ज्ञातुं न शक्यते।

३२३. **श्रीपराक्रमः**—योगिनीहृदयदीपिकायां २४५,२५४,२६३ पृष्ठेषु श्रीपराक्रमस्थाः श्लोका दृश्यन्ते।

३२४. **श्रीमाला**—वेधदीक्षाप्रसङ्गे श्रीमाला तन्त्रालोकेऽभिनवगुप्तेन स्मृता। जयरथेनात्रैवास्याः श्लोकद्वयमुद्धृतम्। श्रीमाला चैषा कुलरत्नमाला (७०)-रत्नमाला-(२५८)शास्त्राभ्यामभिन्ना प्रतीयते, श्रीमालाश्लोकद्वयस्य तत्रोपलम्भात्।

३२५. **षट्सहस्त्रिका**—शतरत्नसंग्रहे स्थलद्वये ग्रन्थोऽयं स्मृतः। कुब्जिकामत-(६०)-विवरणमत्रावलोकनीयम्। ने० वी०, भा० २, पृ० २१६-२१७ इत्यत्र षट्साहस्रस्य कुब्जिकामतस्य मातृकाद्वयं विवृतम्। एतच्च टिप्पणीग्रन्थस्य, न तु कुब्जिकामतस्य। शिवसूत्रवार्त्तिककारेण भास्करेण त्रिकसारोऽपि षट्सहस्रश्लोकात्मको वर्णितः, "त्रिकसारे षट्सहस्रे" (२।६) इत्येवम्। शैवसिद्धान्तग्रन्थे शतरत्नसंग्रहे कथमेतौ मतत्रिकशास्त्रग्रन्थौ स्मृतौ स्यातामिति षट्सहस्त्रिकैषा तयोर्भिन्नैव। ता० सा०, पृ० ६६७ इत्यत्रापि कुलालिकाम्नायमातृकैवैतन्नाम्ना विवृता। साम्प्रतमेव प्रकाशिते सार्धत्रिशतिकालोत्तरेऽस्यागमस्य षट्सहस्रश्लोकात्मकं संस्करणं चर्च्यते। तदभिन्नैव षट्सहस्त्रिकेयम्।

३२६. **षडर्धशास्त्रम्**—त्रिकशासन(१२६)विवरणमवलोकनीयम्। षडर्धसारः स्मर्यते ई० प्र० वि०, भा० २, पृ० २३१ इत्यत्र।

३२७. **षड्धातुसमीक्षा**—धातुसमीक्षा(१४४)विवरणं द्रष्टव्यम्।

३२८. **षाड्गुण्यविवेकः**—स्पन्दप्रदीपिकायां बहुशः स्मृतोऽयं पाञ्चरात्रागमस्य ग्रन्थः स्यात्।

३२९. **संवित्प्रकरणम्**—स्पन्दप्रदीपिकायामुत्पलवैष्णवेन स्मृतमेतत्। कश्चन स्वतन्त्रो ग्रन्थोऽथवा कस्यचन ग्रन्थस्य प्रकरणमेतदिति नाधुना निश्चेतुं शक्यते।

३३०. **संवित्प्रकाशः**—अद्वयसम्पत्तिवार्त्तिक(३)वामननाथ( २८८ )विवरणमत्र द्रष्टव्यम्। तेन ज्ञायते ग्रन्थोऽयं वामनदत्ताचार्येण विरचित इति। सर्वो विकल्प इति नारदसंग्रहवचनमत्र स्मर्यते। अत्रत्यानि वचनानि बाहुल्येन स्पन्दप्रदीपिकायां समुपलभ्यन्ते। अष्टमोद्धरणानन्तरं तस्मिन्नेव पृष्ठे परिदृश्यमाना अन्ये श्लोका अपि तत्रत्या एव स्युः। विज्ञानभैरवविवृतौ, महार्थमञ्जरीपरिमले, तन्त्रालोके, तद्विवेके च ग्रन्थोऽयं स्मर्यते। "अपरोक्षे भवत्तत्त्वे" इति श्लोकः स्तवचिन्तामणिटीकायां क्षेमराजकृतायां "यदाह स्म कश्चित्" इत्युक्त्वा स्मृतः। संवित्प्रकाशोद्धरणेषु 'अच्युत, भगवन्, माधव' इति सम्बोधनपददर्शनादस्य वैष्णवसम्प्रदायानुवर्तित्वं ज्ञाप्यते। अद्वयसम्पत्तिवार्त्तिकस्य च स्पष्टं शैवशाक्तसिद्धान्तानुसारित्वम्। योगवासिष्ठ-परमार्थसार-न्यायेनास्य परिहारो

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


विधेयः । संवित्प्रकाशस्य हि० वि० मातृकाद्वयम् (सी ५१८६, सी ४००३) अत्र परीक्षणीयम् । वामनदत्तस्य संवित्प्रकाशो देवराजेन (पृ० ९३) स्मर्यत इति आ० I, पृ० ६८१ इत्यत्र विवृतम् । देवराजश्चायं निघण्टुभाष्यकार इति ज्ञेयम् ।

३३१. **संवित्स्तोत्रम्**—"अस्मद्गुरुभिः श्रीसंवित्स्तोत्रे" (पृ० ६८), "अस्मत्परमगुरुभिः श्रीसंवित्स्तोत्रे (पृ० १२४) इति महेश्वरानन्दवचनाभ्यामस्य गुरुर्महाप्रकाशः, परमगुरुः शिवानन्दो वाऽस्य स्तोत्रस्य रचयितेति ज्ञायते । अनयोः परिचयोऽस्मदीये नि० उपोद्घाते (पृ० १७-२१), म० प० उपोद्घाते (पृ० ङ-च), डॉ० रस्तोगीग्रन्थे (पृ० २००-२०९) च द्रष्टव्यः । शिवानन्दस्य, महाप्रकाशस्य, महेश्वरानन्दस्य च समयविषये यदुक्तं तत्र (पृ० २०७), तत्तु समालोचितमस्माभिरन्यत्र ।

३३२. **संविदुल्लासः**—"मयैवोक्तं संविदुल्लासे" (पृ० १२) इति महेश्वरानन्दोक्त्यनुसारं ग्रन्थोऽयं तेनैव विरचितः । अस्य ग्रन्थस्यानेकानि वचनानि तत्र संगृहीतानि । "दर्शनान्तरकान्तारकण्टकद्रुमकोटरात् । किरातः कोऽपि कूटस्थो दत्ते मन्त्रामृतं मधु ॥" इत्ययमपि श्लोकस्तत्रत्य (पृ० १६५) एव । महेश्वरानन्दस्य तद्रचितानां ग्रन्थानां च विस्तृतः परिचयो म०म० उपोद्घाततः (पृ० ङ-च), डॉ० रस्तोगीग्रन्थाच्च (पृ० २१५-२२०) समुपलब्धव्यः । अस्य शिवानन्दस्य च कालनिर्णयोऽस्मदीये "अलंकारसंग्रहकार अमृतानन्द योगी की योगिनीहृदयदीपिकाकार से अभिन्नता" इति शीर्षके निबन्धे कृतः ।

३३३. **सङ्कर्षणसूत्राणि**—अस्य ग्रन्थस्य चत्वारोऽनुष्टुप्छन्दोमयाः श्लोकाः स्पन्दप्रदीपिकायां समुपलभ्यन्ते । तेन श्लोका एव सूत्रपदेनात्रोक्ता इति प्रतीयते । यथा मतङ्गपारमेश्वरसंहिता मतङ्गसूत्रनाम्नाऽपि समुट्टङ्क्यते, तथैव संकर्षणसंहिताऽत्र संकर्षणसूत्रनाम्ना निर्दिष्टा स्यात् । सा च पाञ्चरात्रसंहितानामावलीषु दृश्यते ।

३३४. **सङ्कर्षणीयामलम्**—तन्त्रालोकविवेकेऽनामातर्पणप्रकरणे प्रमाणतया स्मृतमेतद् यामलम् । यामलनामावलीषु न दृश्यतेऽस्य नाम ।

३३५. **सङ्केतपद्धतिः**—नि० उपोद्घाते (पृ० ४६-४७) द्रष्टव्यमस्य विवरणम् । ता०सा० (पृ० ६७१), आ० I, पृ० ६८४ इत्यपि विलोक्यताम् । दीपकसन्तानस्य दीपकनाथान्तस्य सिद्धौघस्य चात्र स्मरणाद् दीपकनाथपरभावी कश्चनाचार्योऽस्य कर्ता । "दीपकेन महात्मना" इत्यस्य वाक्यस्य साकाङ्क्षत्वाच्छिष्टस्य चानुपलब्धेर्न ज्ञायते कियन्त आचार्यास्ततः परं संकेतपद्धतिकर्त्रा स्मृता इति । ६४ योगिनीनां नामावली रुद्रयामले द्रष्टव्येत्यत्रोच्यते ।

३३६. **सत्कार्यसिद्धिः**—उत्पलवैष्णवेन स्पन्दप्रदीपिकायामस्य सार्द्धैकः श्लोकः समुद्धृतः प्रमातृविचारप्रकरणे ।

३३७. **सद्योज्योतिः**—खेटनन्दन(८५)रौरवागमवृत्ति(२७४)विवरणं द्रष्टव्यम् । अस्य देशकालादिविषये डॉ० पाण्डेयकृते 'अभिनवगुप्त'-ग्रन्थे (पृ० १७०) शैवदर्शनबिन्दौ (पृ० ८) च तथा मतङ्गपारमेश्वरोपोद्घाते (पृ० ४०-४२) विशेषतो द्रष्टव्यम् । अत्र संगृहीतं द्वितीयमुद्धरणं कस्यचन व्याख्याग्रन्थस्य स्यात् ।

१०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



३३८. **समाधिपञ्चदशी**—अत्रत्यः श्लोक एकः स्मृतो महेश्वरानन्देन परिमले बन्धमोक्षविवेचनप्रकरणे (पृ० २७)।

३३९. **सम्बन्धसिद्धिः (मुद्रिता)**—भट्टोत्पलविरचिता सम्बन्धसिद्धिः सिद्धित्रयीनाम्ना काश्मीरसंस्कृतग्रन्थावल्यां ३४ ग्रन्थाङ्कत्वेन प्रकाशिता। प्रथमभागे संगृहीतमत्रत्यं वचनं तत्र तृतीयश्लोकस्योत्तरार्धत्वेन समुपलभ्यते।

३४०. **सर्वज्ञभैरवः**—उत्पलवैष्णवेन स्पन्दप्रदीपिकायां मोक्षस्वरूपनिरूपणावसरेऽस्य श्लोक एकः प्रमाणत्वेन धृतः। भैरवाष्टकनामावलीषु नैतन्नाम क्वापि दृश्यते।

३४१. **सर्वज्ञानोत्तरम्**, ३४२. **सर्वज्ञानोत्तरवृत्तिः**—ज्ञानोत्तर(१०९)विवरणं द्रष्टव्यम्। "बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वेवार्हताः स्थिताः" इत्ययं श्लोकार्धो मतङ्गपारमेश्वरवृत्तौ (पृ० ३९६) दृश्यते। मुद्रितसर्वज्ञानोत्तरे न लभ्यत इति, अन्यदप्यस्य वचनद्वयं मतङ्गपारमेश्वरानुबन्धधृतवृत्तौ स्मृतम्। तच्च सर्वज्ञानोत्तरविद्यापादे समुपलभ्यत इति च तत्रत्या टिप्पणी। तन्त्रालोके (२८।२५१) क्षेत्रमानप्रकरणेऽपि सर्वज्ञानोत्तरं स्मर्यते। सर्वज्ञानोत्तरं देवकोट्टैनगरतः १९२३ ई० वर्षे पो० मुत्तय्यापिल्लैप्रकाशितमुपलभ्यते। तत्र सर्वाण्यत्र संगृहीतानि वचनानि प्रकरणानि च द्रष्टव्यानि। सर्वज्ञानोत्तरवृत्तिश्च शतरत्नसंग्रहे स्मृता। सर्वज्ञानोत्तरस्य, शिवाग्रयोगीन्द्रशैवाचार्यविरचितायास्तट्टीकायाश्च विवरणं ता० सा०, पृ० ६८५-६८६ इत्यत्र द्रष्टव्यम्।

३४३. **सर्वमङ्गलाशास्त्रम्**— शिवसूत्रविमर्शिनी - परमार्थसारयोगराजवृत्तिस्पन्दकारिकारामकण्ठवृत्ति-नेत्रोद्योत-तन्त्रालोकविवेकप्रभृतिग्रन्थेषु शास्त्रमिदं स्मर्यते। श्रीकण्ठीपठितेषु चतुष्षष्टिभैरवागमेषु परिगणितमेतत्। "इति माङ्गलशास्त्रे तु श्रीश्रीकण्ठो न्यरूपयत्" (तन्त्रा० ५।४०) इत्यभिनवगुप्तोऽपि शास्त्रमेतत् स्मरति। श्रीकण्ठश्चात्र भगवान् शिवः। मङ्गलाशास्त्रनाम्नाऽपि प्रसिद्धमेतत्। आ० I, पृ० ४२०, ७०२; ता० सा०, पृ० ४५५, ६८७ इत्यपि द्रष्टव्यम्।

३४४. **सर्ववीरभट्टारकः**, ३४७ **सर्वाचारहृदयम्**—अत्रत्योऽज्ञानादिति श्लोको महार्थमञ्जरीपरिमले प्रत्यभिज्ञाहृदये च सर्ववीरभट्टारकनाम्ना, शिवसूत्रविमर्शिन्यां परात्रिंशिकाव्याख्यायां च सर्वाचारनाम्ना समुद्धृतः। कदाचिदिति श्लोक ई०प्र०वि०वि०, भा० ३, पृ० ३११ इत्यत्र सर्ववीरमतनाम्ना, शिवस्तोत्रविवृतौ (पृ० १४०) तन्त्रालोकविवेके च श्रीवीरनाम्ना स्मृतः। एवमेव [1]पेयापेयमित्यादिकं श्लोकजातमेकत्र सर्ववीरनाम्नाऽन्यत्र च सर्वाचारनाम्ना स्मर्यते। नेत्रतन्त्रोद्योते (I. १३) सर्वाचारभट्टारक-

१. पेयापेयं स्मृता आप इत्यादीनि वचनानि विज्ञानभैरवोद्योते (पृ० १०५) स्मर्यन्ते। तानि च मालिनीविजयोत्तराष्टादशपटलस्थानीति तत्रैव वर्ण्यते। उपलभ्यन्ते च तानि तत्र। तन्त्रालोके ४।५४ इत्यत्र वीरशब्देन, १२।२३-२४ इत्यत्र सर्वाचारपदेन, १३।१४५ इत्यत्र च सर्ववीरपदेन, स्व० उ० (१।३१), शि० वि० (१।४) इत्यत्र च मातृकाप्रस्तारप्रसङ्गेन सर्ववीरनाम्नैव तन्त्रमेतत् स्मर्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


नाम्ना ग्रन्थोऽयं स्मर्यते। एवं च श्रीवीर-सर्वाचार-सर्वाचारहृदयादिनामभिरेक एव ग्रन्थः स्मृत इति मन्तव्यम्। सर्ववीरमतं नित्याषोडशिकार्णवे कुलचूडामणौ च ६४ तन्त्रेषु परिगण्यते।

३४५. **सर्वस्रोतःसंग्रहसारः**—ग्रन्थोऽयं न केवलं शतरत्नसंग्रहे, अपि तु नारायणकण्ठकृतायां मृगेन्द्रागमवृत्तौ (क्रिया० ३।४१-४२) च स्मृतो वर्तते। ता० सा०, पृ० ६८८ इत्यत्र चायं सर्वस्रोतःसिद्धान्तसारनाम्ना विवृतः।

३४६. **सर्वागमप्रामाण्यम्**—"एतच्चोक्तमस्माभिः सर्वागमप्रामाण्ये" (पृ० ५७) इति मोक्षकारिकाव्याख्यायां रामकण्ठवचनदर्शनात् स एवाऽस्य ग्रन्थस्य कर्तेति ज्ञायते। मतङ्गपारमेश्वरोपोद्घाते (पृ० ४०-४१) धृतेष्वस्य ग्रन्थेषु नास्य नामोपलभ्यते। अथवा परमोक्षनिरासकारिकावृत्तौ (पृ० ४९) स्मृतस्य आगमविवेकस्यैवायं ग्रन्थो भागविशेषः स्यात्। अथवा—"दर्शितमस्माभिः सर्वागमप्रामाण्योपन्यासे रौरववृत्ति-विवेके" (३।२०) इति मतङ्गविद्यापादवृत्तिधृतरामकण्ठवचनादुभयमप्येतद् रौरववृत्ति-विवेकान्तर्गतं मन्तव्यम्।

३४७. **सर्वाचारहृदयम्**—सर्ववीरभट्टारक(३४४)विवरणमवलोक्यताम्।

३४८. **सात्वतसंहिता**—पाञ्चरात्रागमीया सात्वतसंहिता पूर्वं श्रीकाञ्चीनगरस्थ-सुदर्शनमुद्रणालयतः १९०३ ई० वर्षे प्रकाशिता। साम्प्रतमलशिङ्गभट्टविरचितभाष्येण सहास्या नूतनं परिष्कृतं संस्करणमस्माभिः सम्पादितमुपलभ्यते। उभयोरपि संस्करणयोः शतरत्नसंग्रहस्थमत्र प्रथमे भागे संगृहीतं वचनं नोपलभ्यते। शतरत्नसंग्रहे सान्तन इति पाठान्तरं दृश्यते। सिद्धान्तशैवागमान्तर्गतायाः सन्तानसंहिताया एतद्वचनं स्यान्न तु सात्वतसंहिताया इति वयमुत्पश्यामः। पाञ्चरात्रागमीया हि सात्वतसंहिता किमर्थं शतरत्नसंग्रहे शैवागमग्रन्थे समुद्धृता स्यात्। न च दृश्यते काचन सात्वत-संहिता शिवागमीया। वचनं चात्रत्यं शिवागमस्यैव प्रतिपादकम्, न तु पाञ्चरात्र-सिद्धान्तस्य कस्यचन।

३४९. **सारशास्त्रम्**—त्रिकसार(१२७)विवरणं द्रष्टव्यम्। प्रथमभागे संगृहीतानि वचनानि तन्त्रालोके (१३।१२२-१२५) द्रष्टव्यानि। तन्त्रा० (१५।२५३; ३१।६१) इत्यत्रापि सारशास्त्रं स्मर्यते।

३५०. **सारसंग्रहः**—स्वच्छन्दोद्योतधृतेऽत्रत्ये वचने शिवागमस्य स्मरणात् सिद्धान्तशैवानां मतस्य संग्राहकोऽयं ग्रन्थ इति प्रतीयते। अस्य काचन मातृका ता०सा०, पृ० ६९३ इत्यत्र विवृता। परीक्षणीया सा। हिन्दूविश्वविद्यालयस्था मातृका अपि परीक्षणीयाः। आ० I. ७१३-७१४; आ० II. १७० इत्यत्रत्यं विवरणं च द्रष्टव्यम्।

३५१. **सारस्वतसंग्रहसूत्रम्** — ग्रन्थोऽयमीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यामभि-नवगुप्तेन स्मर्यते। नास्य विषयेऽन्यत् किमपि ज्ञायते। क्षेमराजेन स्पन्दसन्दोहे (पृ० २५) शिवसूत्रनाम्ना समुद्धृतमत्रत्यं सूत्रद्वयमपि।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



३५२. **सार्धशतिकम्**—तन्त्रालोकविवेकेऽस्य चत्वारः श्लोकाः संगृहीताः। तेन ज्ञायते क्रमदर्शनस्यागमग्रन्थोऽयमिति। डॉ० रस्तोगी (पृ०१४३,२३२) ग्रन्थोऽपि द्रष्टव्यः।

३५३. **सिद्धगुरुः**—अत्रत्यः प्रथमः श्लोको मोक्षकारिकायामपरश्च परमोक्षनिरासकारिकायामुपलभ्यते। तेन सिद्धगुरुरेष सद्योज्योतिरेव। अस्यैकः श्लोकः सर्वदर्शनसंग्रहे (पृ० ६६) दृश्यते। तद्यथा—"स्वतन्त्रस्याप्रयोज्यत्वं करणादिप्रयोक्तृता। कर्तुः स्वातन्त्र्यमेतद्धि न कर्माद्यनपेक्षता॥" इति। खेटकनन्दनापराभिधस्य सद्योज्योतिःशिवाचार्यस्य ग्रन्थेष्वेवान्वेषणीय एष श्लोकोऽपि। खेटकनन्दन(८५)सद्योज्योति(३३७)विवरणमपि द्रष्टव्यम्।

३५४. **सिद्धनाथपादः**, ३५५. **सिद्धपादः**—सिद्धनाथपादः कुलरत्नशास्त्रस्य प्रवक्तेत्यर्थरत्नवलीस्थित(पृ० २०५)वाक्याभ्यां ज्ञायते। कुलरत्नशास्त्रमेतत् कुलरत्नमाला(७०)तो रत्नमालातश्च (२५८) अभिन्नमेव स्यात्। द्वाभ्यामपि नामभ्यां ग्रन्थ एष तन्त्रालोके तद्विवेके च स्मर्यते। ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां चाभिनवगुप्तेन सिद्धपादस्य श्लोकार्धः समुद्धृतः। क्रमस्तोत्रस्य कर्ता सिद्धनाथः सिद्धिनाथो वा डॉ० रस्तोगीग्रन्थे विस्तरेण वर्णितः। तन्त्रालोकविवेके (भा० ३, आ० ४, पृ० १९९) स एव सिद्धपादनाम्नाऽपि स्मृत इव दृश्यते। अभेदकारिकाकृत् सिद्धनाथः स्पन्दप्रदीपिकायां स्मर्यते। सर्वे एते भिन्ना अभिन्ना वा आचार्या इति नाधुना किमपि वक्तुं शक्यते। नि० उपाद्घातोऽपि (पृ० ४७) द्रष्टव्यः। उदेत्येकः समालोक इति श्लोकः सम्पूर्णः त० वि० (II. ७९) इत्यत्र द्रष्टव्यः।

३५६. **सिद्धयोगीश्वरीमतम्**, ३५८. **सिद्धातन्त्रम्**, ३६७. **सिद्धामतम्**—नामभिरेतैरत्र संगृहीतानि सर्वाणि वचनान्येकस्यैव ग्रन्थस्य स्युरिति संभावयामः। नि० उपोद्घाते (पृ० ४७-४८) विवरणमस्य द्रष्टव्यम्। सिद्धयोगीश्वर-सिद्धयोगेश्वर-सिद्धवीरावलीसार-सिद्धा-सिद्धागम-सिद्धातन्त्रशासन-सिद्धामृत-सिद्धावीरनामभिरपि तदेतत् तन्त्रं स्मर्यते। आ० I, पृ० ७१७; आ० II, पृ० १७१ इत्यत्र, ता० सा०, पृ० ६९७, ६९९-७०१ इत्यत्रापि च मातृका विवृताः। अत्रत्यानि कानिचन वचनानि मालिनीविजयोत्तरेऽपि दृश्यन्ते। "तस्यापि परमं सारं मालिनीविजयोत्तरम्" (तन्त्रा० ३७।२५) इत्यभिनवगुप्तोक्तेर्मालिनीविजयस्य सिद्धयोगीश्वरीमतसाररूपत्वात्तत् संभवत्येव। विद्यापीठप्रधानमेतत् तन्त्रमिति च—"विद्यापीठप्रधानं च सिद्धयोगीश्वरीमतम्" (३७।२४) इति तन्त्रालोकवचनादेव प्रतीयते। प्र० सा० (२।११८) इत्यत्र दक्षतन्त्रेषु सिद्धयोगेश्वरीमतं पठ्यते। सिद्धातन्त्रमश्वक्रान्ताविभागेऽपि दृश्यते। "श्रीसिद्धाटनसद्भाव०" (तन्त्रा० २८।११३) इत्यत्र च सिद्धातन्त्रम्, निशाटनम्, तन्त्रसद्भावश्चेति ग्रन्थत्रयं स्मर्यते।

३५७. **सिद्धसन्तानम्**—परात्रिंशिकाव्याख्यायामभिनवगुप्तेन ग्रन्थोऽयं स्मर्यते। सिद्धान्तशैवरुद्रागमेषु सिद्धं सन्तानमिति पृथगागमद्वयं पठ्यते। मातृकाऽप्यनयोः समुपलभ्यते। प्र० सा० (२।११०) इत्यत्रापि तथैव दृश्यते। "सद्यः कौलिकसिद्धिदम्" (श्लो० ४) इत्यत्रत्यस्य सद्यःपदस्य व्याख्यानावसरे स्मृतमेतद्वचनमुक्तस्य रुद्रागमद्वयस्य नैव भवेत्। ऊर्मिकौलसिद्धसन्तानशास्त्रम् (४०) अत्रैव विवृतम्। अस्य नाम्नो मध्ये

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पठितस्य सिद्धसन्तानस्य तद्वचनं स्यात्। एवं च सिद्धसन्तानमेतदूर्मिकौलशास्त्रतोऽभिन्नं स्यात्। अत्र कौलिकसिद्धिप्रसङ्गे च तस्यैव वचनं प्रमाणत्वेन संगृहीतं स्यात्। अत ऊर्मिकौलसिद्धसन्तानशास्त्र(४०)विवरणमप्यत्रावलोकनीयम्।

३५८. **सिद्धातन्त्रम्**—सिद्धयोगीश्वरीमत(३५६)विवरणं द्रष्टव्यम्।

३५९. **सिद्धान्तम्**, ३६२. **सिद्धान्तवचनम्**, ३६३. **सिद्धान्तशास्त्रम्**, ३६६. **सिद्धान्तागमः**—सिद्धान्त-सिद्धान्तशास्त्र-सिद्धान्तागमवचनानि द्वितीये भागे, सिद्धान्तवचनं चैकं प्रथमे भागे संगृहीतानि विद्यन्ते। चत्वारोऽपीमे शब्दा न कस्यचन ग्रन्थविशेषस्य, अपि तु सामान्यतः शैवसिद्धान्तागमानां बोधकाः सन्ति। शैवसिद्धान्तागमेषु कामिकादिवातुलान्तेष्वन्येषु वा तत्सम्प्रदायस्योपागमादिग्रन्थेषु कस्य ग्रन्थस्येमानि वचनानीति तु साम्प्रतं गवेषणामपेक्षन्ते।

३६०. **सिद्धान्तदीपिका**—अत्रत्यं श्लोकद्वयं शतरत्नसंग्रहे समुद्धृतं दृश्यते। तत्रैव—"एतल्लौकिकादिस्वरूपं सर्वात्मशम्भुकृतसिद्धान्तदीपिकायां प्रपञ्चितम्"(पृ० ९), "सर्वात्मशम्भुकृतसिद्धान्तदीपिकायामयमर्थः" (पृ० ४४) इति वाक्यद्वयदर्शनादस्य कर्ता कश्चन सर्वात्मशम्भुरिति ज्ञायते। अघोरशिवः सर्वात्मशिवनामानं स्वगुरुं स्मरति[1]। किमेष सर्वात्मशिवः सर्वात्मशम्भुतोऽभिन्नः? ता० सा०, पृ० ७००; आ० I, पृ० ७१७ इत्यत्र च विवरणमस्य दृश्यते। नह्ययं शाक्तग्रन्थ इति विभावनीयम्। आ० III, पृ० १४९ इत्यत्र हृदयशिवस्य सिद्धान्तदीपः स्मर्यते। हृदयशिवस्य च नामाष्टादशपद्धतिकारेष्वपि वर्तते।

३६१. **सिद्धान्तरहस्यसारः**—काण्डत्रयविवेचनावसरे वाक्चतुष्टयस्वरूपनिरूपकाणि वचनान्यस्य शतरत्नसंग्रहकारेण उमापतिशिवाचार्येण संगृहीतानि।

३६२–३६३. **सिद्धान्तवचनम्**, **सिद्धान्तशास्त्रम्**—सिद्धान्त(३५९)विवरणं पश्यतु।

३६४. **सिद्धान्तसारावलिः**—(मुद्रिता) शतरत्नसंग्रहे स्थलद्वये वचनद्वयमस्य ग्रन्थस्य संगृहीतम्। तत्रैव अभियुक्तवचनत्वेन (पृ० ८५), आचार्यवचनत्वेन (पृ० ५०) चोद्धतौ श्लोकावप्यस्यैव ग्रन्थस्य स्याताम्। ता० सा०, पृ० ७०१; आ० I, पृ० ७२२, III, पृ० १४९ इत्यत्रास्य ग्रन्थस्य मातृकाणां विवरणं दृश्यते। ग्रन्थोऽयं त्रिलोचनशिवाचार्यस्य कृतिरिति च तत एव ज्ञायते। त्रिलोचनशिवाचार्यस्य नाम अष्टादशपद्धतिकारेषु

---

१. तथा चायं तस्य तत्त्वत्रयनिर्णयवृत्तिसमाप्तिस्थः श्लोकः—"श्रीमदघोरशिवाह्वयेन गुरुणा श्रीजन्यया व्याख्यया लोकेऽपि प्रथितेन कुण्डिनकुलं चोलेऽवलङ्कुर्वता। श्रीसर्वात्मशिवाङ्घ्रिपद्मरजसामाराधकेनामला श्रीतत्त्वत्रयनिर्णयस्य विवृतिर्लेशादियं निर्मिता॥" (पृ० २२) इति। अघोरशिवेन यथा तत्त्वसंग्रहलघुटीकासमाप्तौ "घोरादिना शम्भुना" (पृ० ५३) इत्येवं शम्भुपदान्तं स्वनाम स्थाप्यते, तथैव तस्य गुरुः सर्वात्मशिवः सर्वात्मशम्भुनाम्नाऽपि प्रथितः स्यादिति संभावना नैवाऽनुचिता प्रतिभाति।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पठ्यते। अनेन सोमशम्भुकृतायाः कर्मकाण्डक्रमावल्या व्याख्यानं कृतम्। तस्य मातृकाऽपि समुपलभ्यते। सोमशम्भुना च ११३० वैक्रमे वत्सरे (१०७३ ई०) स्वग्रन्थो विरचित इति तत्परभावित्वमस्य निश्चप्रचम्। सिद्धान्तसारावलिरस्य ग्रन्थलिप्यां मुद्रिता वर्तते। 'शैव कल्ट०' इत्याख्ये ग्रन्थे तत्रत्यम्—"राजेन्द्रचोल इत्याख्यश्चोलभूपो महीं वसन्। गङ्गास्नानार्थमागत्य दृष्ट्वा शैवान् वरांस्तदा॥ स्नात्वा प्रतिनिवृत्तः सन् तान् समादाय शैवकान्। स्वराज्ये स्थापयामास शैवाचार्यवरांस्तदा॥ काञ्चीमध्ये चौलभूमौ सर्वत्रैव प्रविस्तराः॥" (पृ० ३८) इतीदं वचनमुद्धृतं वर्तते। एवं च काशिकेयानां शैवाचार्याणां परम्परायां जनिमलभतायमाचार्यः। न्यू० VIII, पृ० २६२ इत्यत्र प्रायश्चित्तसमुच्चय-रत्नत्रयोद्योत-सर्वमतसिद्धान्तरहस्य(सिद्धान्तसमुच्चय)मातृकास्तद्ग्रन्थानां विवृताः।

३६५. **सिद्धान्तहृदयम्**—अत्रत्या बहवः श्लोकाः कुमारदेवविरचितायां तत्त्वप्रकाशटीकायां प्रमाणत्वेनोद्धृता दृश्यन्ते। ग्रन्थकारादिविषये तु न किमपि ज्ञायते।

३६६. **सिद्धान्तागमः**—सिद्धान्त(३५९)विवरणं द्रष्टव्यम्।

३६७. **सिद्धामतम्**—सिद्धयोगीश्वरीमत(३५६)विवरणं पश्यतु।

३६८. **सिद्धोक्तम्**—सिद्धोक्तानि त्रीणि वचनान्यत्र प्रथमे भागे स्पन्दप्रदीपिकातः संगृहीतानि। सिद्धगुरुः, सिद्धनाथपादः, सिद्धपाद इति त्रयो ग्रन्थकर्तारोऽत्र चर्च्यन्ते। भक्तिस्तोत्रकारोऽवधूतसिद्धः, सद्योज्योतिःशिवाचार्यश्च सिद्धपदेन परिचीयेते। वर्तते चाभेदार्थकारिकाकृत् सिद्धनाथः। अत्र संगृहीता इमाः सिद्धोक्तय एतेषामेव सिद्धाचार्याणाम्, तद्भिन्नस्य वा कस्यचन सिद्धाचार्यस्येति साम्प्रतं निश्चयेन किमपि वक्तुं न शक्यते।

३६९. **सुप्रभेदागमः(मुद्रितः)**—सिद्धान्तशैवागमनामावलीषु दश शैवागमेष्वयं पठ्यते। प्र० सा० (२।१०८) इत्यत्रापि तथैव। सुप्रभेदतन्त्र-सुप्रभेदप्रतिष्ठातन्त्रमातृकाविवरणं ता० सा०, पृ० ७०७; आ० I, पृ० ७२६; II, पृ० १७४ इत्यत्र द्रष्टव्यम्। मद्रासनगरतः १९०७ ई०, १९२८ ई० वर्षे च ग्रन्थलिप्यां मुद्रितः।

३७०. **सुबोधमञ्जरी**—प्रतिबिम्बवादनिरूपणप्रसङ्गे जयरथेन ग्रन्थोऽयं स्मृतः। स्वतन्त्रः कश्चन दार्शनिकग्रन्थः, व्याख्याग्रन्थः, अथवा तन्त्रागमशास्त्रस्यैवायं ग्रन्थ इति नाधुना किमपि निश्चेतुं शक्यते। वामनदत्तविरचितसुबोधमञ्जरीग्रन्थस्य मातृका सी ४२५५ संख्याका हिन्दूविश्वविद्यालयसंग्रहे दृश्यते। परीक्षणीया सा।

३७१. **सुभगादयः (मुद्रितः)**—कैवल्याश्रमेण, महेश्वरानन्देन, अमृतानन्देन च स्मृतौ सुभगोदयः सुभगोदयवासना चेति द्वौ ग्रन्थौ शिवानन्दविरचितौ साम्प्रतं नित्याषोडशिकार्णवपरिशिष्टेषु प्रकाशितौ समुपलभ्येते। अनयोर्ग्रन्थयोः प्रथमभागे प्रथमसुभगोदयनाम्ना संगृहीतानि सर्वाणि वचनानि तृतीयं विहाय समुपलभ्यन्ते। तृतीयमुद्धरणमरुणामोदिन्यां लक्ष्मीधरायां च सौन्दर्यलहरीव्याख्यायां समुद्धृतं द्वितीयस्य सुभगोदयस्य प्रतीयते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



**३७२. सुभगोदयः,** **३७३. सुभगोदयव्याख्या**—प्रथमभागे संगृहीतः प्रथमः सुभगोदयः शिवानन्दविरचितः साम्प्रतं मुद्रित उपलभ्यत इति निवेदितमत्रैव। द्वितीयः सुभगोदयस्तु शङ्कराचार्यकृत इति—"श्रीशङ्कराचार्यकृतौ सौभाग्यविद्यासुभगोदयाख्यौ" [1]इत्यम्बास्तववचनतोऽनुमीयते। अत्र भगवत्पादकृतायाः (पृ० १७५) लक्ष्मीधरकृतायाश्च (पृ० ८१, ११०, १८०) व्याख्याया उल्लेखो लक्ष्मीधरायां सौन्दर्यलहरीटीकायां वर्तते। तत्रैव (पृ० १४९) सुभगोदयमतं पूर्णोदयमतं च चर्चितम्। द्वितीयसुभगोदयस्य द्वितीयमुद्धरणं गद्यात्मकं वर्तते। तेन गद्यपद्यात्मक एष ग्रन्थ इति संभावयितुं शक्यते, अथवा सुभगोदयव्याख्यानस्यैतद्वचनं स्यात्।

गौडपादकृता सुभगोदयस्तुतिस्तु द्वाभ्यामपि सुभगोदयाभ्यां सुभगोदयव्याख्यानतश्च भिन्ना, तत्र वचनानामेषामनुपलम्भात्। ता० सा०, पृ० ७०८ इत्यत्र सुभगोदयस्तुतिविवरणे कानिचन संशोधनान्यपेक्षितानि। सुभगोदयस्तुतिर्हि ५२ श्लोकात्मिका मुद्रिता वर्तते। योगिनीहृदयदीपिकायां महार्थमञ्जरीपरिमले च शिवानन्दस्य सुभगोदयसुभगोदयवासनाख्यौ ग्रन्थौ स्मर्येते, न तु सुभगोदयस्तुतिरेवेति।

**सुमतिः**—"सुमत्यन्तेनिवासिनः" (१।२१३) इत्यत्र तन्त्रालोकविवेके—"सुमत्यन्तेनिवासिन इति श्रीसोमदेवादयः। श्रीसुमतिनाथस्य श्रीसोमदेवः शिष्यः, तस्य श्रीशम्भुनाथ इति हि आयातिक्रमविदः। यद्वक्ष्यति—"श्रीसोमतः सकलवित् किल शम्भुनाथः" (तन्त्रा० २७।६१) इति। यत्तु—"कश्चिद् दक्षिणभूमिपीठवसतिः श्रीमान् विभुर्भैरवः पञ्चस्रोतसि सातिमार्गविभवे शास्त्रे विधाता च यः। लोकेऽभूत् सुमतिस्ततः समुदभूत् तस्यैव शिष्याग्रणीः श्रीमान् शम्भुरिति प्रसिद्धिमगमज्जालन्धरात् पीठतः॥" इत्यन्यत्रोक्तम्, तत्परमगुर्वभिप्रायेणैव योज्यम्। यद्वा—"यावानस्य हि सन्तानस्तावानेको गुरुर्मतः" इत्यादिवक्ष्यमाणनीत्यवलम्बनेन एतद् व्याख्येयम्। एवम्—"इति श्रीसुमतिप्रज्ञाचन्द्रिकापास्ततामसः। श्रीशम्भुनाथः सद्भावं जाग्रदादौ न्यरूपयत्॥" (१०।२८७) इत्यादावपि ज्ञेयम्" (१।२१३) इत्येवं विस्तरेण व्याख्यायते। तेन दक्षिणभूमिपीठवसतिः सुमतिरेष कुलसम्प्रदायस्य प्रथित आचार्य इति प्रतीयते। सुमतिनाथस्य सोमदेवः शिष्यः, तस्य शम्भुनाथः, शम्भुनाथस्य च शिष्योऽभिनवगुप्त इति तेन सिद्ध्यति। एवं च—"इत्येतत् प्रथमोपायरूपं ध्यानं न्यरूपयत्। श्रीशम्भुनाथो मे तुष्टस्तस्मै श्रीसुमतिप्रभुः॥" (तन्त्रा० ५।४१) इत्यत्रापि जयरथोक्त एव न्यायोऽनुसर्तव्यः। सुमतिः शम्भुनाथश्चाभिनवगुप्तेन मालिनीविजयवार्त्तिकारम्भेऽपि चतुर्थे श्लोके स्मृतौ स्तः। तन्त्रसद्भाव(११९)विवरणमपि द्रष्टव्यम्।

**३७४. सूक्ष्मस्वायम्भुवम्**—अस्य ग्रन्थस्यात्र संगृहीतमेव वचनं रामकण्ठेनापि मतङ्गपारमेश्वरवृत्तौ वारद्वयमेतन्नाम्नैव पठ्यते। वचनमेतत् स्वायम्भुवागमेऽपि समुपलभ्यत इति सम्पादकीयटिप्पणीतोऽवगम्यते। शैवसिद्धान्तागमनामावलीषु न दृश्यतेऽस्य नाम। स्वायम्भुव(३९५)विवरणं पश्यत।

---

१. काशिकसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनाख्ये पुस्तकालये स्थितायाः २१९२२ संख्याकाया मातृकाया द्वितीयं पत्रमवलोकनीयम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



३७५. **सोमराजः**—जयरथेन तन्त्रालोकविवेके सोमराजस्य श्लोकद्वयं संगृहीतम्, यत्र स क्रमकमलविकासने चतुरं वामनभानुं स्वसाक्षाद्गुरुं भोजराजं च स्मरति। अस्याचार्यस्य परिचयो डॉ० रस्तोगो(पृ० ११८)ग्रन्थे द्रष्टव्यः।

३७६. **सोमसिद्धान्तः**—अस्य सार्धैकः श्लोकः शतरत्नसंग्रहे संगृहीतः। तत्रत्येन विवरणेन कश्चिद् ग्रन्थ एतन्नामकः स्यादिति प्रतीयते। शैवसम्प्रदायेषु वर्तते कश्चन सोमसिद्धान्तः। श्रीकृष्णमिश्रेण प्रबोधचन्द्रोदये नाटके सोमसिद्धान्तो मतविशेषत्वेन वर्ण्यते। "कापालिक्स एण्ड कालमुख्स" इत्याख्ये ग्रन्थे मतस्यास्य विवरणं द्रष्टव्यम्।

३७७. **सौभाग्यकाण्डम् (मुद्रितम्)**—सौभाग्यकाण्डनाम्ना उद्धृताः सर्वेऽपि मन्त्रा अत्र प्रथमे भागे संगृहीता मुद्रितायां त्रिपुरामहोपनिषदि समुपलभ्यन्ते। एषा चोपनिषदथर्ववेदीया मूलमात्रा भास्कररायविरचितभाष्योपेता च मुद्रिता वर्तते। अत एव आ० I, पृ० ७३८ इत्यत्र कैवल्याश्रमस्तथैव वर्णयन्नुद्धृतः।

३७८. **सौभाग्यसुभगोदयः (मुद्रितः)**—वस्तुतः सौभाग्यसुधोदयनामको ग्रन्थ एष अमृतानन्दविरचितः साम्प्रतं नित्याषोडशिकार्णवपरिशिष्टेषु मुद्रितः समुपलभ्यते। तत्र प्रथमभागे संगृहीतानि सर्वाणि सौभाग्यसुभगोदयवचनानि समुपलभ्यन्त इत्येकस्यैव ग्रन्थस्य द्वे नामनी इति विभावनीयम्। वस्तुतस्तु भास्कररायप्रभृतिभिरपि सौभाग्यसुधोदयनाम्नैवास्य ग्रन्थस्य स्मरणात् सुभगोदय इति नाम पाठभेदप्रयुक्तम्, अशुद्धं वा मन्तव्यम्। अत्रत्याः केचन श्लोकाः काश्मीरसंस्कृतग्रन्थावल्यां षट्त्रिंशत्तत्त्वसन्दोहनाम्ना प्रकाशिता इत्यप्यवधेयमत्र।

३७९. **सौभाग्यहृदयस्तोत्रम् (मुद्रितम्)**—महार्थमञ्जरीकारस्य महेश्वरानन्दस्य परमगुरुणा शिवानन्देन विरचितमेतत् स्तोत्रं कामकलाविलासटीकायां चिद्वल्ल्याम्, योगिनीहृदयदीपिकायाम्, महार्थमञ्जरीपरिमले च समुद्धृतमधुना नित्याषोडशिकार्णवपरिशिष्टेषु मुद्रितमुपलभ्यते। आ० II, पृ० १७७ इत्यत्र मातृकाऽस्य सूचिता।

३८०. **सौरभेयागमः**—नारायणकण्ठेन मृगेन्द्रागमवृत्तौ, क्षेमराजेन च नेत्रोद्योते वचनमस्य स्मर्यते। नारायणकण्ठस्मृतं वचनं सर्वदर्शनसंग्रहेऽपि (पृ० ७२) संगृहीतम्। "सा कार्येण कलादिना" इति च तत्र चतुर्थः पादः, यो हि नारायणकण्ठेन परित्यक्तः। तन्त्रालोकविवेक(भा० १, आ० १, पृ० ४०)धृतश्रीकण्ठीवचने सौरभेयं तन्त्रं रुद्रागमेषु पठ्यते। शैवसिद्धान्तागमनामावलीषु, प्र० सा०(२।१०९-१११)वर्णितेषु रुद्रागमेषु च नास्य नाम दृश्यते। ता० सा०, पृ० ७१७; आ० I, पृ० ७३८ इत्यत्र चैतदेव विवृतम्।

३८१. **सौरसंहिता**—"पुराणे सौरसंहितायाम्" (पृ० ६९) इत्युक्त्वाऽत्रत्यः श्लोक एकः शतरत्नसंग्रहे प्रमाणत्वेन धृतः। स्कन्दपुराणस्य संस्करणद्वयं दृश्यते—उत्तरभारते खण्डात्मकम्, दक्षिणे च भारते संहितात्मकमिति। तत्र संहिताविभागे सहस्रश्लोकात्मिका सौरसंहिता षष्ठी अन्तिमा च। तत्रत्यमेवैतद् वचनं स्यात्। नेत्रोद्योतप्रामाण्येन

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


(भा० १, पृ० २६५) नेत्रतन्त्रे (१३।१७-२७) सौरसंहितानुसारं परतत्त्वाराधनमुक्तम्। एवं च प्राचीनेयं संहितेति विभावनीयम्। ता०सा०, पृ० ७१७; आ० I, पृ० ७३८; III, पृ० १५२ इत्यत्रत्यं विवरणं परीक्षणीयम्।

३८२. **स्कन्दयामलम्**—तन्त्रालोके (२८।४३०) गुरुपूजाप्रसङ्गे यामलमेतत् स्मर्यतेऽभिनवगुप्तेन। त्रिकसारवचनेषु (त० वि०, २३।९७) च तत् स्मर्यते। यामलाष्टकेषु तदेतत् परिपठ्यते। ता० सा०, पृ० ७१७; आ० I, पृ० ७४३ इत्यत्रत्यं विवरणमपि द्रष्टव्यम्।

३८३. **स्तोत्रभट्टारकः**—क्रमस्तोत्र(८१)विवरणं प्रथममत्र द्रष्टव्यम्। स्तोत्रभट्टारकस्य द्विविधान्युद्धरणान्यत्र द्वितीये भागे संगृहीतानि दृश्यन्ते—अनुष्टुप्छन्दोमयानि, उपजातिवृत्तग्रथितानि च। सिद्धनाथविरचितस्य क्रमस्तोत्रस्य द्वादशकालीस्वरूपबोधकाः श्लोका उपजातिवृत्तनिबद्धा जयरथेन तन्त्रालोकविवेके समुद्धृता अत्र प्रथमे भागे संगृहीताः। अत्राभिनवगुप्तः क्रमकेलिनाम्नीं व्याख्यां जग्रन्थेति तत एव ज्ञायते। परिमले चानुष्टुप्छन्दोमयानां स्तोत्रभट्टारकश्लोकानामपि क्रमकेलिसाहचर्यं स्तोत्रभट्टारक इति क्रमस्तोत्रस्यैव संमानसूचकं नामान्तरमिति ज्ञापयति। एताश्च सृष्टिकाल्यादिव्यपदेशेन स्तोत्रभट्टारकादावुद्घास्यन्ते"(पृ०१०१) इति परिमलोक्त्याऽनयाऽपि तदेव सूच्यते। किञ्च, परिमलस्थः—"कौलार्णवानन्दमयोर्मिरूपाम्" (पृ० १२६) इति स्तोत्रभट्टारकश्लोकांशस्तन्त्रालोकविवेके क्रमस्तोत्रश्लोकत्वेनोद्धृत इति क्रमस्तोत्रमेवैतत् स्तोत्रभट्टारकनाम्नाऽपि प्रथत इति निश्चप्रचम्। अत एवास्माभिरत्र तद्विवर्त इत्यादिकः श्लोकार्धः स्तोत्रभट्टारकश्लोकत्वेन संगृहीतः। एवं च सम्पूर्णं क्रमस्तोत्रं तन्त्रालोकविवेके जयरथेन संगृहीतमिति डॉ० रस्तोगीप्रतिपादनं (पृ० १४३) स्तोत्रभट्टारकविषयकं तन्मतं (पृ० २०३-२०७) च पुनः परीक्षणमपेक्षते। स्तोत्रभट्टारकापराभिधानं क्रमस्तोत्रमेतत् सुमतिशिष्यपरम्परासंभूतेन शम्भुनाथेन सिद्धनाथापराभिधानेन रचितं स्यात्, अत्र च क्रमकुलयोरुभयोरपि मतयोः प्रतिपादनं स्यात्। अत्र साधकबाधकानि बहूनि प्रमाणानि प्रवर्तेरन्निति निश्चयेन किमपि ग्रन्थप्राप्त्यनन्तरमेव वक्तुं शक्येत।

३८४. **स्तोत्रावली (भट्टोत्पलस्य मुद्रिता)**—प्रथमभागे संगृहीतः स्तोत्रावल्याः श्लोकार्धो योगिनीहृदयदीपिकायां स्थलत्रये (पृ० १८५, २९३, ३४०) स्मृतः। तत्र १८५ पृष्ठे प्रामाणिकवचनत्वेनोट्टङ्कितः सम्पूर्णः श्लोक एवं पठ्यते—"यत्र यत्र मिलिता मरीचयस्तत्र तत्र विभुरेव जृम्भते। तत्सतां हि विषयावलम्बिनां ध्यानपूजनकथा विडम्बना॥" इति। २९३ पृष्ठे कस्याञ्चन मातृकायां स्तोत्रावल्यामित्यतः पूर्वमुत्पलदेवपादैरिति पाठो लभ्यते। उत्पलरचितायां शिवस्तोत्रावल्यां च न दृश्यते श्लोकोऽयम्। तन्त्रालोके (१५।१५२) भट्टोत्पलस्य पूजनस्तोत्रस्य "अहो स्वादुरसः" इत्यादिकः श्लोकोऽपि मुद्रितायां स्तोत्रावल्यां नास्ति। अतोऽपूर्णेयं स्तोत्रावलीति प्रतीयते। "ईश्वरप्रत्यभिज्ञाकारः .... श्रीमदुत्पलदेवाचार्योऽस्मत्परमेष्ठी .... संग्रहस्तोत्र-जयस्तोत्र-भक्तिस्तोत्राण्याह्निकस्तुतिसूक्तानि च कानिचिन्मुक्तकान्येव बबन्ध। .... श्रीराम आदित्यराजश्च पृथक् पृथक् स्तोत्रशय्यायां न्यवेशयत्। श्रीविश्वावर्तस्तु विंशत्या स्तोत्रैः स्वात्मोत्प्रेक्षित-



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



नामभिर्व्यवस्थापितवानिति किल श्रूयते" (पृ० १-२) इति शिवस्तोत्रावलीविवृतौ क्षेमराजोक्त्या विश्वावर्तकृते संग्रहेऽस्मिन् कानिचन पद्यानि स्तोत्राणि वा न प्रवेशमलभन्त इति संभावयितुं शक्यते। पूजनस्तोत्र(१८७)विवरणमपि द्रष्टव्यम्। उत्पलदेवस्य भावोपहारस्तवो रत्नकण्ठेन स्तुतिकुसुमाञ्जलौ (१९।१६) स्मृत इति आ० I, पृ० ७९३ इत्यत्र सूच्यते।

३८५. **स्तोत्रावली (नारायणकण्ठस्य)**—भट्टोत्पलस्य शिवस्तोत्रावली क्षेमराजकृतटीकया सह काश्मीरग्रन्थावल्यां मुद्रिता समुपलभ्यते। अपरा नारायणकण्ठस्य स्तोत्रावली स्वयं तेनैव मृगेन्द्रागमक्रियापादवृत्तौ स्मृता। सा साम्प्रतं नोपलभ्यते। द्वितीयभागे संगृहीतः श्लोकोऽस्या एव। मृगेन्द्रागमव्याख्याता नारायणकण्ठो मतङ्गपारमेश्वरादिनानाग्रन्थव्याख्यातुः रामकण्ठस्य पितेति, स्वच्छन्दोद्योते (४।२०८) क्षेमराजेन स्मृतस्ततः प्राचीन इति च ध्येयम्। अनेन सद्योज्योतिश्शिवाचार्यरचितस्य तत्त्वसंग्रहस्य शतरन्निशाख्या बृहट्टीका विरचितेत्यघोरशिवव्याख्यानतो (पृ०१) ज्ञायते। बृहट्टीकेयं शतरत्नसंग्रहेऽपि (पृ० ५८) स्मर्यते। नारायणकण्ठेन विरचितं स्वायम्भुववृत्तिटिप्पकं रामकण्ठेन नरेश्वरपरीक्षाटीकायाम् (पृ०२१६) उद्धृतम्। सोऽयं नारायणकण्ठः कर्णिकाकारपदेन स्तवचिन्तामणिकारं भट्टनारायणं स्मरतीति तत्परवर्ती सिद्धयति। स च विद्याकण्ठपुत्रत्वेन, शङ्करकण्ठपौत्रत्वेन, न तु प्रपौत्रत्वेन, आत्मानं ख्यापयति, स्वपितरं विद्याकण्ठं च रामकण्ठशिष्यत्वेन निर्दिशति मृगेन्द्रागमवृत्तिप्रारम्भे तुरीये श्लोके विद्यापादान्तिमश्लोके च। सोऽयं विद्याकण्ठगुरुः प्रथमो रामकण्ठः श्रीकण्ठनाथ इव महान् शैवाचार्य आसीदिति नारायणकण्ठस्तस्मिन्नेव श्लोके प्रतिपादयति।

३८६. **स्वच्छन्दः**, ३८७. **स्वच्छन्दभैरवः** ३८८. **स्वच्छन्दसंग्रहः**—योगिनीहृदयदीपिकायां महास्वच्छन्दम्, महास्वच्छन्दसंग्रहः, स्वच्छन्दभैरवम्, स्वच्छन्दसंग्रह इति चत्वारो ग्रन्थाः पृथक् पृथगुद्धृताः। एतेषां विवरणं नि० उपोद्घाते (पृ० ४८), अत्रैव महास्वच्छन्द(२२९)महास्वच्छन्दसंग्रह(२३०)परिचये द्रष्टव्यम्। ता० सा०, पृ० ७२०-७२१; आ० I, पृ० ७४९; II, पृ० १८० इत्यत्र च विविधानां मातृकाणां परिचयः संगृहीतो द्रष्टव्यः। स्वच्छन्दतन्त्रं क्षेमराजकृतटीकया सहितं मुद्रितमुपलभ्यते। तदेव अघोरेशतन्त्रनाम्नाऽपि प्रसिद्धमित्यत्रैवावलोकनीयम्। दक्षिणतन्त्रेषु स्वच्छन्दभैरवः प्र० सा० (२।११६) इत्यत्र पठ्यते। स्वच्छन्दभैरवनाम्ना एकस्मिन्नेव स्थले (पृ० १५३) संगृहीताः श्लोकाः प्रथमे भागे सर्वे न सन्तीत्यवशिष्टा द्वितीये भागे समावेशिताः। स्वच्छन्दः शतरत्नसंग्रहे (पृ० ८०) स्मृतः। सर्वाण्येतानि वचनानि मुद्रिते स्वच्छन्दतन्त्रे विवृतासु मातृकासु च द्रष्टव्यानि। स्वच्छन्दसंग्रहश्च स्वतन्त्र एव ग्रन्थः स्यात्।

३८९. **स्वतन्त्रतन्त्रम्**—तन्त्रमेतत् शतरत्नसंग्रहे सौन्दर्यलहरीटीकायां सौभाग्यवर्धन्यां च स्मर्यते। तत्र शतरत्नसंग्रहगृहीते वचने काश्मीरमुद्रिते स्वच्छन्दतन्त्रेऽन्वेषणीये। "कादिमते स्वतन्त्रतन्त्रे" (पृ० ४५) इति कैवल्याश्रमोक्त्या च सौभाग्यवर्धिनीधृतं वचनं कादिमताख्ये तन्त्रराजे मुद्रिते गवेषणीयम्। कादिमताख्यं तन्त्रराजतन्त्रमेतत् स्वतन्त्रतन्त्रनाम्ना प्रसिद्धम्, तदेव च "स्वतन्त्रं ते तन्त्रम्" (श्लो० ३१) इति सौन्दर्यलहरी-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पद्ये स्मर्यंत इत्यादिमतं नि० उपोद्घाते (पृ० १२-१३) समालोचितमवलोकनीयम् । ता० सा०, पृ० ७२१; आ० I, पृ० ७४९; II, पृ० १८० इत्यत्रत्यं विवरणमपि द्रष्टव्यम् । सर्वोल्लासनामावल्यां विष्णुक्रान्ताविभागे च दृश्यते तदेतन्नाम, न प्राचीनासु सूचीषु ।

३९०. **स्वबोधोदयमञ्जरी**—स्पन्दप्रदीपिकायां बन्धोच्छेदोपायनिरूपणावसरेऽत्रत्यः श्लोक एकः स्मृतः । विज्ञानभैरवप्रोक्तधारणाभिस्तस्य सादृश्यमवधेयम् । हिन्दूविश्वविद्यालयस्था सी १०० संख्याका वामनदत्तविरचितस्वबोधमञ्जरीमातृका च परीक्षणीया । तत्कृता सुबोधमञ्जरी (हि० वि० सी० ४२५५ संख्याका मातृका द्रष्टव्या) चेतोऽभिन्न एव ग्रन्थः स्यात् । हर्षदत्तपुत्ररचितस्य बोधविलासाख्यग्रन्थस्य तिस्रो मातृका हि० वि०, पृ० २९८ इत्यत्र विवृताः सन्ति । डॉ० रस्तोगीग्रन्थे (पृ० १८२) कृता टिप्पणी च द्रष्टव्या । हिन्दूविश्वविद्यालयसंगृहीता बोधविलास-संवित्प्रकाश-सुबोधमञ्जरी-स्वबोधमञ्जरीमातृका अवश्यं परीक्षणार्हाः प्रतीयन्ते ।

३९१. **स्वस्वभावसम्बोधनम्**—"ग्रन्थकर्तुश्च स्वस्वभावसम्बोधने" (पृ० ८८) इति स्पन्दप्रदीपिकावचनादयं ग्रन्थः कल्लटस्य कृतिरिति ज्ञायते । स्पन्दप्रदीपिकाकारो हि उत्पलवैष्णवः कल्लटमेव स्पन्दकारिकाप्रणेतारमङ्गीकरोति । कल्लट(४७)विवरणमप्यत्र द्रष्टव्यम् । स्वरूपसम्बोधनाख्यः कश्चन जैनग्रन्थः सर्वदर्शनसंग्रहे (पृ० २७) स्मृतो दृश्यते । अत्र नामसाम्यमवधेयतापदवीमानेतव्यम् ।

३९२. **स्वात्मसम्बोधः**—आत्मसम्बोध(२४)विवरणमत्र द्रष्टव्यम् ।

३९३. **स्वायम्भुववृत्तिः**, ३९४. **स्वायम्भुवशास्त्रटीका**, ३९५. **स्वायम्भुवागम**.—स्वायम्भुवागमः सर्वासु शैवसिद्धान्तागमनामावलीषु रुद्रागमान्तर्गतः परिगण्यते । पाण्डिचेरीशोधसंस्थानपुस्तकालयेऽस्य मातृका समुपलभ्यते । कामिकादिषु स्वयंभूतशब्देनायमागमः स्मर्यते (श० र०, पृ० ३) । मतङ्गपारमेश्वरोपोद्घाते (पृ० ४५) स्वायम्भुवस्य, सूक्ष्मस्वायम्भुवस्य च परिचयो द्रष्टव्यः । "उवाच सद्योज्योतिश्च वृत्तौ स्वायम्भुवस्य तत् । बाढमेको हि पाशात्मा शब्दोऽन्यश्च शिवात्मकः ॥" (१६।२१०) इति तन्त्रालोकप्रामाण्येन च स्वायम्भुववृत्तिकारः सद्योज्योतिरेव । "खेटपालगुरुः श्रीस्वायम्भुवशास्त्रटीकायां "किं शब्दराशेर्विशेषोऽस्ति" इत्याक्षिप्य "बाढम्, एकः शिवात्मकोऽन्यश्च पाशात्मकः" (पृ० १०३) इति भट्टोत्पलवचनाच्च स एवार्थः सिद्धयति । अस्या वृत्तेरपूर्णा काचन मातृका पाण्डिचेरीपुस्तकालये विद्यते, तत्र च भट्टोत्पलस्मृतमेतद्वचनमुपलभ्यत इति स्वायम्भुववृत्तिः, स्वायम्भुवसूत्रसंग्रहटीका, स्वायम्भुवशास्त्रटीका इत्याद्येकाया एव कृतेर्नामित्यत्र नास्ति संशय इति तत्रैव (पृ० ४५) मतङ्गपारमेश्वरोपोद्घाते द्रष्टव्यम् । स्वायम्भुववृत्तिराचार्येण सद्योज्योतिषा विरचितेति भट्टरामकण्ठकृतनरेश्वरपरीक्षाटीकातोऽप्यवगम्यते (पृ० १०६, २१६) । "व्याख्यातं च तट्टिप्पकेऽस्मत्पित्रा तत्रभवता भट्टनारायणकण्ठेन" (पृ० २१६), "प्रदर्शितं स्वायम्भुवोद्योते एव" (पृ० ३९), "विपञ्चितमस्माभिः स्वायम्भुवोद्योते" (पृ० ८८-८९) इत्यादिभिस्तत्रत्यैर्भट्टरामकण्ठवचनैरेव नारायणकण्ठेनात्र टिप्पकम्, स्वयं रामकण्ठेन च स्वायम्भुवोद्योताख्यं व्याख्यानं विरचितमिति च ज्ञायते । शतरत्नसंग्रहे (पृ० ८६) वृत्तिग्रन्थोऽयं सद्योज्योतिष्टीका-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



इत्यत्रान्यदपि मातृकादीनां रूपेण स्मृतः। ता० सा०, पृ० ७२३; आ० I, पृ० ७५२ विवरणं द्रष्टव्यम्।

३९६. **हंसतन्त्रम्**—चण्डमन्त्रस्वरूपनिरूपकमस्य तन्त्रस्य वचनं भट्टनारायणकण्ठेन मृगेन्द्रागमक्रियापादवृत्तौ स्मृतम्। शैवागमनामावलीषु पारमेश्वरस्योपागमतया हंसं परिगण्यते। श्रीकण्ठ्यां सर्वोल्लासे च परिपठितेषु चतुष्षष्टितन्त्रेष्वपि नामैतस्य विद्यते। पारमेश्वरस्योपागमतयाऽस्यैव हंसपारमेश्वरमित्यपि नामान्तरं स्यात्।

३९७. **हंसनिर्णयः**, ३९९. **हंसभेदः**—नित्याषोडशिकार्णवटीकायामर्थरत्नावल्यां हंसनिर्णयस्य श्लोक एको दृश्यते। तत्र क० ख० पुस्तकयोर्ग्रन्थस्य हंसनिर्भेद इति संज्ञा, छपुस्तके च हंसभेद इति। हंसभेदस्थाश्च केचन श्लोका महार्थमञ्जरीपरिमले (पृ० ६,५५,११५) संगृहीताः। हंसभेद एव हंसनिर्णयः, भिन्नो वा एष ग्रन्थ इति साम्प्रतं नैव वक्तुं पार्येत।

३९८. **हंसपारमेश्वरम्**—योगिनीहृदयदीपिकायाम्, स्पन्दप्रदीपिकायाम्, नेत्रतन्त्रोद्योते, स्वच्छन्दतन्त्रोद्योते, मृगेन्द्रागमक्रियापादवृत्तौ च समुपलब्धानि वचनान्यस्यात्र संगृहीतानि। नि० उपोद्घाते (पृ० ४८-४९) विवरणमस्य द्रष्टव्यम्। तन्त्रसारादिष्वप्येतद्वचनानि स्मृतानीति ता० सा०, पृ० ७२४ इत्यतोऽवगम्यते। आ० I, पृ० ७५२; II, पृ० १८१; III, पृ० १५५ इत्यत्रापि तथैव। हंसतन्त्रतोऽस्याभिन्नत्वं परीक्षणीयम्।

३९९. **हंसभेदः**—हंसनिर्णय(३९७)विवरणमवलोकनीयम्।

४००. **हस्तनयः**—द्वादशकालीनिरूपके क्रमदर्शनप्रकरणे जयरथेन (भा० ३, आ० ४, पृ० २००) आर्याच्छन्दोनिबद्धः श्लोक एकः स्मृतोऽस्य।

**हार्देशः (हृदयभट्टारकः)**—"श्रीवीरावलिहार्देशखेमतार्णववर्तिषु। श्रीसिद्धोत्फुल्लमर्यादाहीनचर्याकुलादिषु॥" (२९।१६५) इति तन्त्रालोकवचनव्याख्यायाम्—"हार्देशो हृदयभट्टारकः, खेमतं खेचरीमतम्, अर्णवो योन्यर्णवः, तद्वर्तिषु, अर्थाद् ग्रन्थैकदेशेषु। उत्फुल्लेति उत्फुल्लकमतम्। मर्यादाहीनं निर्मर्यादशास्त्रम्" (२९।१६५-१६६) इत्येवं जयरथः श्लोकस्थान् हार्देशादिशब्दान् स्पष्टयति। अत्र हृदयभट्टारकः कश्चन स्वतन्त्रो ग्रन्थ उत—"षडर्धे हृदये इति सामानाधिकरण्येन योज्यम्" (त० वि० १३।३०१) इति जयरथपद्धत्या त्रिकहृदयस्यैव नामान्तरमेतदिति विचारणीयम्। अत्र खेचरीमतम्, योन्यर्णव इति तन्त्रद्वयाभिधानमपि कौलिकागमप्रतिपादकं न क्वाप्यन्यत्र दृष्टिपथमायाति।

**हैडरः**—तन्त्रमेतत् तन्त्रालोके कुलपर्वप्रकरणे स्थलद्वये (२८।१५,१८) स्मर्यते। अकारान्तोऽपि पर्वशब्दो हैडरे भैरवकुले च व्युत्पाद्यत इति तत्र जयरथेन स्पष्टमुच्यते। "उक्तं च तत्र" (२८।२५) इत्यत्रत्येन तत्रशब्देनापि हैडरतन्त्रं परामृश्यत इत्यपि जयरथ एवाह। "तेनेह कुले सामान्यतेत्यलम्" (२८।२५) इत्यादयः श्लोका अपि हैडरतन्त्रस्यैव तन्त्रालोके संगृहीता इति प्रतीयते। तन्त्रं चैतत् कुलाम्नायस्येति प्रकरणानुरोधाद् वक्तुं शक्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



एवमत्र लुप्तागमसंग्रहप्रथमद्वितीयभागयोः संगृहीतवचनानां चतुश्शताधिकानां ग्रन्थग्रन्थकाराणां कियान् परिचयः समुपस्थापितः। इतो भिन्नानामपि केषाञ्चन ग्रन्थग्रन्थकाराणां मतमतान्तराणां च विवरणमस्मदीययोर्नित्याषोडशिकार्णवस्य शक्तिसंगमतन्त्रस्य च उपोद्घातयोरवलोकनीयम्।

## विविधनामावलीपरीक्षणम्

विभिन्नेषु वैष्णवशैवशाक्तग्रन्थेषु संहितागमतन्त्रग्रन्थानां नामावल्यः समुपलभ्यन्ते। तासु वैष्णवसंहितागमतन्त्रग्रन्थानां नामावल्यः संगृहीताः सन्ति सुव्यवस्थिततया पद्धत्याऽहिर्बुध्न्यसंहितालक्ष्मीतन्त्रोपोद्घातयोः, "पेनारोमा आफ पाञ्चरात्र लिटरेचर" इत्याख्ये ग्रन्थे चेति न ता अत्र प्रदर्श्यन्ते।

एवमेव वर्तन्ते शैवानां शाक्तानां च तन्त्राणां नामावल्यः। तासु [1]शैवसिद्धान्तागमानां तदुपागमानां च नामावली पाठभेदपुरस्सरं रौरवागमप्रथमभागे संगृहीताऽऽगमक्रमेण। अत्र १० शिवागमानाम्, १८ रुद्रागमानाम्, २०७ उपागमानां च नामानि सन्ति। साऽत्र अक्षरक्रमेण संयोज्यते प्रथमम्। अत्र २८ शैवसिद्धान्तागमानाम्, २०४ उपागमानां च नामानि संनिविष्टानि। सूक्ष्मस्य, सुप्रभेदस्य, अनलस्य चोपागमा न सन्तीति नामन्यूनतैषा संजाता। अनलस्य आग्नेयमिति व्योमतन्त्रमिति वा नामान्तरमिति न तेन संख्यावृद्धिर्भवति। आहत्याऽस्यां नामावल्यां २३२ शैवसिद्धान्तागमाः सन्ति।

अपरा च नामावली वर्तते शिवस्य पञ्चवक्त्रेभ्यो निर्गतानां तन्त्राणाम्। अत्र दश शिवागमाः, अष्टादश रुद्रागमाश्चेत्याहत्य २८ सिद्धान्तशैवागमाः शिवस्योर्ध्ववक्त्राद् विनिर्गताः। पूर्ववक्त्राद् गारुडागमाः २८ संख्याकाः, दक्षिणास्यादुद्भूताः ६४ भैरवागमाः, पश्चिमास्याद्विनिर्गतानि भूततन्त्राणि, वामवक्त्राच्च २४ वामतन्त्राणि विनिर्गतानीत्याहत्य १६४ तन्त्राणि भवन्ति। किन्तु प्रतिष्ठालक्षणसारसमुच्चये वैरोचनीये दक्षिणास्यविनिर्गतानि भैरवतन्त्राणि ३२ एव परिगणितानीति कृत्वा तत्र १३२ तन्त्रनामानि वर्तन्ते।

तृतीया च नामावली वर्तते चतुष्षष्टितन्त्राणाम्। नित्याषोडशिकार्णवपठिता नामावली वामकेश्वरीमते, लक्ष्मीधरायां सौन्दर्यलहरीटीकायाम्, भास्कररायकृते सेतुबन्धे, कुलचूडामणिनिगमे च पाठभेदपुरस्सरं परिगणिता। तन्त्रालोकविवेककारजयरथधृतायां श्रीकण्ठ्यां ६४ भैरवागमाः पठ्यन्ते। सर्वोल्लासधृततोडलतन्त्रेऽपराणि ६४ तन्त्राणि दृश्यन्ते। तन्त्राभिधानभूमिकायां च सिद्धसारतन्त्रानुसारमश्वक्रान्ता-रथक्रान्ता-विष्णुक्रान्ताविभागेषु प्रत्येकं ६४ तन्त्राणां नामावली वर्तते। सर्वा एता एकस्यामेव सारण्यामक्षरानुक्रमणीमुखेन संयोज्य स्थापिताः। तदासां नवनामावलीना-

---

१. "सिद्धान्तशब्दः पङ्कजादिशब्दवद्योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु तन्त्रेषु प्रसिद्धः" (श्लो० १०) इति रत्नत्रयोल्लेखिन्यामघोरशिवाचार्यः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मेकत्र संयोजनेनात्र तन्त्राणां संख्या ३१९ भवति। [१]नामावलीनामासां पर्यालोचनेन शास्त्रस्यास्य विशालता स्फुटीभवति, प्राचीनानामर्वाचीनानां च तन्त्राणां स्वरूपमप्युन्मिषति।

तदधुना क्रमेणात्र नामावलीत्रयमेतत् समुपस्थाप्यते। प्रथमद्वितीययोर्यावदुपलब्धाः पाठभेदा अपि संगृहीताः। अन्यत्रापि सन्ति विविधाः पाठभेदाः, उद्धृताश्च सन्ति नामनिर्देशपुरस्सरं भूयांसो ग्रन्था मुद्रितेषु ग्रन्थेषु मातृकासु च। नामावलीनामासामुद्धृतग्रन्थसाहाय्येन परिष्कारः कर्तुं शक्यत इति तदर्थं प्रयतेरन् सुधिय इत्येवासां संकलने प्रयोजनम्।

## शैवसिद्धान्तागमा उपागमाश्च

[अं० = अंशुमत्, अजि० = अजितम्, कामि० = कामिकम्, कार० = कारणम्, कि० = किरणम्, च० = चन्द्रज्ञानम्, चि० = चिन्त्यम्, दी० = दीप्तम्, नि० = निश्वासम्, पा० = पारमेश्वरम्, प्रो० = प्रोद्गीतम्, म० = मकुटम्, मु० = मुखविम्बम्, यो० = योगजम्, रु० = रुद्रागमाः, रौ० = रौरवम्, ल० = ललितम्, वा० = वातुलम्, विज० = विजयम्, विम० = विमलम्, वी० = वीरम्, श० = शर्वोक्तम्, शि० = शिवागमाः, सन्ता० = सन्तानम्, सह० = सहस्रम्, सि० = सिद्धम्, स्वा० = स्वायम्भुवम्।]

| | | | |
|---|---|---|---|
| १. अंशुमद् | (शि० ९) | १२. अनिलम्[५] | (सन्ता० ६) |
| २. अक्षयम्[१] | (दी० ९) | १३. अप्रमेयम् | (सह० ४) |
| ३. अघोरम् | (विज० ३) | १४. अब्दम्[६] | (दी० २) |
| ४. अङ्कुशम्[२] | (प्रो० ५) | १५. अमरेश्वरम्[७] | (सन्ता० ३) |
| ५. अजितम् | (शि० ५) | १६. अमलम् | (वी० ३) |
| ६. अट्टहासम् | (विम० १२) | १७. अमितौजसम् | (दी० ५) |
| ७. अतिक्रान्तम् | (विम० ११) | १८. अमृतम्[८] | (चि० ६) |
| ८. अतीतम्[३] | (सह० १) | १९. अमेयम् | (दी० १) |
| ९. अद्भुतम्[४] | (दी० ८) | २०. अमोहम्[९] | (वी० ५) |
| १०. अनन्तम् | (विम० १) | २१. अयोगजम्[१०] | (मु० ४) |
| ११. अनलम् | (रु० ४) | २२. अर्चितम्[११] | (विम० १४) |

१. अड्यार लाइब्रेरी बुलेटिन, VI ३, पृ० १९८-२१२ इत्यत्र संगृहीता वैष्णव-शैव-शाक्तादि-सम्प्रदायग्रन्थानां नामावली, कवीन्द्राचार्यसूचीनिबद्धा तन्त्रागमसंहितामन्त्र-शास्त्रमतादिग्रन्थानां नामावली, म० म० गोपीनाथकविराजसंगृहीतः "तान्त्रिक साहित्य" इत्याख्यो ग्रन्थश्च ७४० पृष्ठात्मकस्तदेतस्य वाङ्मयस्य विशालतां पोषयन्ति।

१. अक्षतम्—का०, अमृतम्—अ०, क्षतम्—म०, मृतम्—सु०। २. कुशम्—अ० सु०। ३. अजितम्—उ० अ० म०। ४. मरुतम्—उ०। ५. अनलम्—अ०। ६. शब्दम्—का०, अब्जम्—म०। ७. अमलेश्वरम्—का० सु०, महेश्वरम्—अ०, अमरेशम्—उ०। ८. सुधाबिम्बम्—अ०। ९. प्रमोहम्—उ०। १०. अयोगम्—का०, महायोगम्—सु०। ११. अच्छिद्रम्—अ०, अजितम्—सु०, अच्युतम्—चि०।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


२३. अलङ्कारम् (सह० ९)
२४. अलङ्कृतम् (विम० १५)
२५. असंख्यम् (दी० ४)
२६. असंख्यम् (सन्ता० ५)
२७. आक्रान्तम् (विम० ३)
२८. आच्छाद्यम् (दी० ३)
२९. आतोद्यम् (प्रो० १६)
३०. आत्मयोगम् (यो० ३)
३१. आत्मालङ्कारम् (अं० ६)
३२. आत्मालङ्कारकम्[1] (मु० ५)
३३. आनन्दम् (दी० ६)
३४. आयुर्वेदम् (प्रो० ११)
३५. आरेवतम् (विम० १०)
३६. ईशानम् (श० ४)
३७. ईशानोत्तरम्[2] (अं० १२)
३८. उद्भवम् (विज० १)
३९. एकपादपुराणम् (च० ६)
४०. ऐन्द्रम् (अं० ९)
४१. ऐन्द्रम्[3] (रौ० ६)
४२. औशनसम्[4] (सि० २)
४३. कलात्ययम्[5] (मु० ११)
४४. कल्पभेदम् (च० १०)
४५. कवचम् (प्रो० २)
४६. कामिकम् (शि० १)
४७. कारणम् (शि० ४)
४८. कारणम् (कार० ६)
४९. कालज्ञानम्[6] (वा० ३)
५०. कालदहनम्[7] (रौ० २)
५१. कालाख्यम्[8] (रौ० १)
५२. कालाख्यम्[9] (कि० ७)
५३. काश्यपम्[10] (अं० ७)
५४. किरणम् (रु० १७)
५५. कुट्टिमम् (मु० ९)
५६. कौबेरम्[11] (विज० ५)
५७ कौमारम् (ल० ३)
५८. गारुडम् (कि० १)
५९. गीतकम् (प्रो० १४)
६०. गौतमम् (अं० ८)
६१. चतुर्मुखम्[12] (मु० १)
६२. चन्द्रज्ञानम् (रु० ९)
६३. चिन्त्यम् (शि० ३)
६४. जातिभाक् (सह० ५)
६५. तारम् (यो० १)
६६. तुटिनीरकम् (मु० ८)
६७. तुलायोगम् (मु० १०)
६८. तौटिकम्[13] (मु० ७)
६९. दण्डधरम्[14] (प्रो० ६)
७०. दिव्यप्रोक्तम् (श० ३)
७१. दीप्तम (शि० ६)
७२. देवीमतम् (च० १४)
७३. दौर्गम् (कार० ३)
७४. द्वन्द्वम् (सन्ता० ७)
७५. धनुर्धरम् (प्रो० ७)
७६. धनुर्वेदम् (प्रो० १२)
७७. धर्मात्मकम्[15] (वा० ६)
७८. धारणम्[16] (विम० ९)
७९. धेनुकम् (कि० ६)
८०. नन्दिकेश्वरम् (च० ५)

---

१. अर्थालङ्कारम्—अ०। २. ऐशानम्—का०। ३. चान्द्रम्—म०।
४. औशनोत्तरम्—म०, उशनोत्तरम्—चि०, ऐशानोत्तरम्—सु०, ईशानम्—पू०।
५. कुलप्रत्ययम्—पू०। ६. कलाज्ञानम्—चि०। ७. कालघ्नम्—का०।
८. कलातीतम्—का० म० सु०। ९. कला—अं०। १०. अंशुमत्काश्यपम्—चि०।
११. पूर्वकारणे भवस्थाने पारमेश्वरम्, कौबेरस्थाने च विमलं विद्यते।
१२. चतुर्वक्त्रम्—पू० सु०। १३. तोटकम्—सु०। १४. दण्डाधारम्—पू०।
१५. सर्वात्मकम्—अ० उ०। १६. तारणम्—पू०, मारणम्—म० सु०, भेदकम्—अ०।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



८१. नलिनोद्भवम्[1] (स्वा० ३)
८२. नारसिंहम् (कामि० ३)
८३. नित्यम् (वा० ७)
८४. **निश्वासम्** (रु० ३)
८५. निश्वासम् (नि० १)
८६. निश्वासकारिका (नि० ५)
८७. निश्वासगुह्यम्[2] (नि० ७)
८८. निश्वासघोरम्[3] (नि० ६)
८९. निश्वासनयनम् (नि० ४)
९०. निश्वासमुखोदयम्[4] (नि० ३)
९१. निश्वासोत्तरम्[5] (नि० २)
९२. नोलम् (कि० ३)
९३. नीलरुद्रकम्[6] (च० ८)
९४. नीललोहितम् (अं० ३)
९५. नैर्ऋतम्[7] (मु० १४)
९६. नैर्ऋतम् (कि० २)
९७. पट्टशेखरम् (मु० १३)
९८. पद्मम् (स्वा० २)
९९. पद्मसंहिता (अजि० ४)
१००. परोद्भवम्[8] (चि० ५)
१०१. परोद्भूतम् (अजि० २)
१०२. पापनाशम् (चि० ४)
१०३. **पारमेश्वरम्** (रु० १६)
१०४. पारमेश्वरम्[9] (पा० ३)
१०५. पार्वतीसंहिता[10] (अजि० ३)
१०६. पावनम् (कार० १)
१०७. पाशबन्धम् (प्रो० ३)
१०८. पिङ्गलामतम्[11] (प्रो० ४)
१०९. पुष्करम्[12] (पा० ४)
११०. प्रकरणम्[13] (अं० ४)
१११. प्रजापतिमतम् (स्वा० १)
११२. प्रतिबिम्बम् (मु० ३)
११३. प्रबुद्धम् (सह० ६)
११४. प्रबुद्धम् (कि० ८)
११५. प्रबोधकम् (वी० ४)
११६. प्रभूतम् (अजि० १)
११७. प्ररोहितम्[14] (वा० ४)
११८. प्रस्तरम्[15] (वी० १)
११९. **प्रोद्गीतम्** (रु० ११)
१२०. फुल्लम्[16] (वी० २)
१२१. बुद्धम्[17] (कि० ९)
१२२. बोधबोधकम्[18] (वी० १३)
१२३. ब्राह्मम् (अं० १०)
१२४. भद्रम् (वी० ९)
१२५. भद्रविधम्[19] (विम० १३)
१२६. भरतम् (प्रो० १५)
१२७. भानुकम्[20] (कि० ५)
१२८. भीमसंहिता (कार० ५)
१२९. भूततन्त्रम् (अं० ५)
१३०. भैरवोत्तरम् (कामि० २)
१३१. भोगम् (वि० २)
१३२. **मकुटम्** (रु० ७)
१३३. मकुटम् (म० १)
१३४. मकुटोत्तरम् (म० २)

---

१. स्वायम्भुवम्—उ० चि० सु०, अ० म० नास्ति। २. गुह्यम्—का० सु०। ३. घोरम्—का०, अघोरनिश्वासम्—अ०। ४. निश्वासोर्ध्वमुखोदयम्—चि० पू०। ५. उत्तरनिश्वासम्—का०। ६. अभिव्यासम्—म०। ७. मलम्—का०, मलयम्—चि०। ८. सुरोद्भवम्—सु०। ९. अ० उ० नास्ति। १०. पार्वतीशम्—चि०। ११. पिङ्गलम्—अ०। १२. पौष्करम्—सु०। १३. प्रकारणम्—उ० का०। १४. पुरोहितम्—अ० उ० का०। १५. प्रस्तारम्—का०। १६. फुल्लमल्लम्—का०। १७. धर्माख्यम्—अ०। १८. बोधं बोधकम्—अ०। १९. भद्रम्—अ०, सुभद्रम्—पू०। २०. यवम्—अ०।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



| | |
|---|---|
| १३५. मङ्गलम्[1] | (सह० २) |
| १३६. मन्त्रनिश्वासम्[2] | (नि० ८) |
| १३७. महाकालमतम् | (रौ० ५) |
| १३८. महाघोरम् | (विज० ६) |
| १३९. महाननम्[3] | (वा० १०) |
| १४०. महान्तम्[4] | (च० ३) |
| १४१. महाविद्या | (मु० १५) |
| १४२. महासौरम् | (मु० १२) |
| १४३. मातङ्गम् | (पा० १) |
| १४४. माधवोद्भूतम्[5] | (दी० ७) |
| १४५. मारणम् | (कार० २) |
| १४६. माहेन्द्रम् | (कार० ४) |
| १४७. मुखबिम्बम् | (रु० १०) |
| १४८. मृत्युनाशनम् | (विज० ४) |
| १४९. मोहसमयम्[6] | (वी० ६) |
| १५०. यक्षिणीपद्मम्[7] | (पा० २) |
| १५१. योगजम् | (शि० २) |
| १५२. रूक्षम्[8] | (कि० ४) |
| १५३. रौद्रम् | (विम० ७) |
| १५४. रौरवम् | (रु० ६) |
| १५५. रौरवम् | (रौ० ३) |
| १५६. रौरवोत्तरम् | (रौ० ४) |
| १५७. ललितम् | (रु० १२) |
| १५८. ललितम्[9] | (ल० १) |
| १५९. ललितोत्तरम्[10] | (ल० २) |
| १६०. लिङ्गाध्यक्षम् | (सन्ता० १) |
| १६१. वक्तारम् | (कामि० १) |
| १६२. वातुलम् | (रु० १८) |
| १६३. वातुलम् | (वा० १) |
| १६४. वातुलोत्तरम् | (वा० २) |
| १६५. वामम् | (चि० ३) |
| १६६. वायव्यम्[11] | (मु० ६) |
| १६७. वायुप्रोक्तम्[12] | (श० २) |
| १६८. वाराहम्[13] | (प्रो० १) |
| १६९. वारुणम्[14] | (च० ४) |
| १७०. वासवम् | (अं० २) |
| १७१. वासिष्ठम् | (अं० ११) |
| १७२. विजयम् | (रु० १) |
| १७३. विजयम् | (विज० ८) |
| १७४. विज्ञानम्[15] | (प्रो० ९) |
| १७५. विद्यापुराणतन्त्रम् | (अं० १) |
| १७६. विद्वेषम्[16] | (कार० ७) |
| १७७. विबुधम् | (सह० ७) |
| १७८. विमलम् | (रु० ८) |
| १७९. विमलम्[17] | (विज० १६) |
| १८०. विमलम् | (विम० ७) |
| १८१. विलेखनम् | (वी० १०) |
| १८२. विश्वम् | (वा० ११) |
| १८३. विश्वात्मकम् | (वा० १२) |
| १८४. वीणाशिखोत्तरम्[18] | (यो० २) |
| १८५. वीरम् | (रु० ५) |
| १८६. वीरम् | (वी० ११) |
| १८७. वृषपिङ्गम्[19] | (विम० ४) |
| १८८. वृषोदरम्[20] | (विम० ५) |

१. अङ्गसंज्ञम्—अ० । मण्डलम्—उ०, अमलम्—सु० । २. सुधानिश्वासम्—अ०, महानिश्वासम्—चि०, अघोरनिश्वासम् । ३. महात्मकम्—अ० । ४. वायव्यम्—पू० म० । ५. मानवोद्भूतम्—उ० । ६. मोहसंभवम्—म० । ७. यक्षकं पद्मम्—अ० उ० । ८. रूक्षं भानुकमित्यनयोः स्थाने रूक्षभानुः—अ० । ९. विघ्नेशम्—सु० । १०. ललितोदरम्—सु० । ११. ऐशान्यम्—अ० म० । १२. शिवधर्मम्—अ० का० । १३. वारुणम्—अ० । १४. नन्दीशम्—अ० सु०, महावारुणम्—म० । १५. कोशम्—अ० । १६. विद्येशम्—अ० द्वेष्ठम्—का० । १७. वृषभम्—अ० । १८. वीणाख्यशिवोत्तरम्—अ० । १९. वृषगुह्यम्—अ० उ० का०, वृषलिङ्गम्—सु० । २०. वृषभोत्तरम्—पू०, वृषोत्तरम्—चि० म० ।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



| | |
|---|---|
| १८९. वृषोद्भूतम्[1] | (विम० ६) |
| १९०. शकटम्[2] | (वी० ७) |
| १९१. शकटाधिकम्[3] | (वी० ८) |
| १९२. शङ्करम् | (सन्ता० ४) |
| १९३. शर्वोक्तम्[4] | (रु० १५) |
| १९४. शर्वोद्गीतम्[5] | (श० ५) |
| १९५. शशिमण्डलम्[6] | (सि० ४) |
| १९६. शाङ्करम् | (च० ७) |
| १९७. शालाभेदम्[7] | (सि० ३) |
| १९८. शिवज्ञानम् | (प्रो० ८) |
| १९९. शिवधर्मोत्तरम् | (श० १) |
| २००. शिवभद्रम्[8] | (च० ९) |
| २०१. शिवशासनम् | (च० १२) |
| २०२. शिवशेखरम् | (च० १३) |
| २०३. शुद्धम्[9] | (सह० ३) |
| २०४. शुद्धम् | (वा० ९) |
| २०५. श्रीकालज्ञानम्[10] | (प्रो० १०) |
| २०६. श्रीमुखम्[11] | (च० १०) |
| २०७. श्रेष्ठम् | (वा० ८) |
| २०८. संस्तोभम् | (मु० २) |
| २०९. सन्तम् | (यो० ४) |
| २१०. सन्ततिः[12] | (यो० ५) |
| २११. सन्तानम् | (रु० १४) |
| २१२. सर्पदंष्ट्रविभेदनम्[13] | (प्रो० १३) |
| २१३. सर्वम् | (वा० ५) |
| २१४. सहस्रम् | (शि० ८) |
| २१५. सामान्यम् | (पा० ७) |
| २१६. सारोत्तरम् | (सि० १) |
| २१७. सिद्धम् | (रु० १३) |
| २१८. सुचिन्त्यम् | (चि० १) |
| २१९. सुदन्तम् | (वि० ८) |
| २२०. सुप्रभेदम् | (शि० १०) |
| २२१. सुप्रयोगम्[14] | (पा० ५) |
| २२२. सुबोधकम् | (सह० १०) |
| २२३. सुभगम् | (चि० २) |
| २२४. सुराध्यक्षम् | (सन्ता० २) |
| २२५. सूक्ष्मम् | (शि० ७) |
| २२६. सौम्यम्[15] | (विज० २) |
| २२७. स्थाणु | (च० २) |
| २२८. स्थिरम् | (च० १) |
| २२९. स्वायम्भुवम् | (रु० ३) |
| २३०. हंसम् | (पा० ६) |
| २३१. हलम् | (वी० १२) |
| २३२. हस्तम्[16] | (सह० ८) |

१. व्यतिभूतम्—अ०, भूतम्—उ० । २. हाकटम्—का०, हटकम्—उ०, हाटकम्—चि०, अजिते नास्ति । ३. शकटायितम्—अ०, शकटादिकम्—पू० । ४. सर्वोक्तम्—उ०, नारसिंहम्—अ० । ५. कुवेराख्यम्—अ० । ६. शशिखण्डम्—उ० का० । ७. शालाख्यम्—अ० पू० । ८. शिवं चन्द्रं च—अ०, श्रीभद्रम्—सु० । ९. विशुद्धम्—अ० । १०. कालज्ञानम्—अ० उ० । ११. अजिते नास्ति । १२. अजिते नास्ति । १३. सर्पभृष्टम्—अ०, सर्पदंष्ट्रकम्—पू० । १४. सुप्रियायोगम्—अ० उ० । १५. भवम्—म० । १६. हस्तशुद्धम्—उ० ।

[अ० = अजितम्, उ० = उत्तरकारणम्, ३. का० = कामिकम्, चि० = चिन्त्यम्, पू० = पूर्वकारणम्, म० = मकुटम्, सु० = सुप्रभेदम् । ]

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## शिवस्य पञ्चवक्त्रेभ्यो निर्गतानि तन्त्राणि प्रतिष्ठालक्षणसारसमुच्चय(३।१०८-१२७)वर्णितानि

[गा० = गारुडतन्त्राणि, द० = दक्षिणतन्त्राणि, भू० = भूततन्त्राणि, रु० = रुद्रागमाः, वा० = वामतन्त्राणि, शि० = शिवागमाः ।]

| | | | |
|---|---|---|---|
| १. अंशुमत्[1] | (शि० ९) | २५. कलामृतम्[4] | (गा० ४) |
| २. अघोरम् | (रु० ९) | २६. कापालम् | (द० २०) |
| ३. अजितम् | (शि० ५) | २७. कामधेनुकदम्बकम् | (वा० १६) |
| ४. अजितम् | (वा० १०) | २८. कामिकम् | (शि० १) |
| ५. अद्वयम् | (द० २३) | २९. कारणम् | (शि० ४) |
| ६. अनन्तविजयम् | (वा० २१) | ३०. कालकण्ठम्[5] | (गा० १६) |
| ७. अपराजितम् | (वा० ११) | ३१. कालकुण्डम् | (गा० २३) |
| ८ असिताङ्गभैरवम् | (द० ५) | ३२. कालकूटम् | (गा० १८) |
| ९ आनन्दम् | (वा० १७) | ३३. कालसाबरम् | (गा० ८) |
| १०. उच्छिष्टम् | (भू० १४) | ३४. कालाङ्गम् | (गा० १७) |
| ११. उच्छुष्मम्[2] | (द० १८) | ३५. किङ्करम् | (वा० २०) |
| १२. उद्गीतम् | (रु० ४) | ३६. किरणम् | (रु० १५) |
| १३. उन्मत्तभैरवम् | (द० ४) | ३७. कुहकम् | (वा० १५) |
| १४. एकपादम् | (द० २५) | ३८. क्रोधभैरवम् | (द० ३) |
| १५. कङ्कम् | (गा० २२) | ३९. खड्गरावणम्[6] | (भू० ८) |
| १६. कङ्कोटम् | (भू० ७) | ४०. घुर्घुरम् | (भू० १५) |
| १७. कटङ्ककम् | (भू० ४) | ४१. घोरम् | (द० ११) |
| १८. कटाहकम् | (गा० २४) | ४२. घोराट्टहासम् | (भू० १३) |
| १९. कपालीशम् | (द० ७) | ४३. घोषणम्[7] | (द० १०) |
| २०. कम्बलम् | (गा० २१) | ४४. चण्डभैरवम् | (द० २) |
| २१. कम्बोजम् | (गा० २०) | ४५. चण्डासिधारम् | (भू० ९) |
| २२. करकोटम् | (भू० ३) | ४६. चन्द्रहासम् | (रु० १०) |
| २३. करपूजाविधानम् | (वा० ६) | ४७. चिन्तामणिमहोदयम् | (वा० १४) |
| २४. करोटम्[3] | (भू० ५) | ४८. चिन्त्यम्[8] | (शि० ३) |

---

१. असुमत् । २. उच्छुष्मवाहि । ३. कवांटम्, कल्कोटम् । ४. करामृतम् । ५. मणिकण्ठम् । ६. खड्गवारणम् । ७. घोरसम् । ८. चान्त्यम्, मान्त्रम्, सिन्त्यम् ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



४९. जयम् (वा० ८)
५०. ज्येष्ठम् (वा० १३)
५१. झङ्कारम्[1] (द० ३१)
५२. डामरारावम्[2] (द० १५)
५३. तिलकोद्यानभैरवम् (द० ३२)
५४. तोतलम्[3] (गा० २७)
५५. तोतलोत्तरम्[4] (गा० २८)
५६. त्रिशिरम् (द० २४)
५७. दीप्तम् (शि० ६)
५८. दुर्मुखम् (द० १३)
५९. दुष्टत्रासकम्[5] (भू० १६)
६०. देवत्रासम् (गा० ५)
६१. दौर्वासम् (वा० २३)
६२. नयम् (वा० १)
६३. नयोत्तरम् (वा० २)
६४. नारसिंहम् (रु० ९)
६५. निशासंचारम् (द० १२)
६६. निश्वासम् (रु० ३)
६७. पक्षिराजम् (गा० ९)
६८. पञ्चभूतम्[6] (गा० १३)
६९. पञ्चामृतम् (द० २७)
७०. पटद्रुमम् (गा० १९)
७१. परम्[7] (रु० १८)
७२. पारमेश्वरम् (रु० २)
७३. पुष्पम् (द० २२)
७४. प्रपञ्चम्[8] (द० २८)
७५. प्रोद्गीतम् (रु० ५)
७६. बिन्दुसारम् (गा० ३)
७७. बीजभेदम् (वा० २४)
७८. भद्रम्[9] (वा० १९)
७९. भीमम् (द० १६)
८०. भीमाङ्गम् (द० १४)
८१. महोत्कटम् (भू० १९)
८२. माकुटम् (रु० १४)
८३. मुखबिम्बम् (रु० ६)
८४. मुण्डमालम् (भू० ६)
८५. मूकम् (वा० ३)
८६. मोहनम् (वा० ४)
८७. मोहनामृतम् (वा० ५)
८८. यमघण्टम् (भू० २०)
८९. योगजम् (शि० २)
९०. योगिनीजालसम्बरम्[10] (द० २९)
९१. रुद्रम् (वा० १८)
९२. रुरुभैरवम् (द० ६)
९३. रौरवम्[11] (रु० १३)
९४. ललितम् (रु० १६)
९५. वामम् (द० १९)
९६. विकटम् (भू० १८)
९७. विजयम् (रु० १)
९८. विजयम् (वा० ९)
९९. विभागम् (गा० १४)
१००. विमलम् (भू० १७)
१०१. विरसम्[12] (रु० १७)
१०२. विश्वविकण्ठम्[13] (द० ३०)
१०३. वीणातन्त्रम् (वा० ७)
१०४. वीरम् (रु० ११)
१०५. वेतालमर्दनम् (द० १७)
१०६. शिखामृतम् (गा० १२)
१०७. शिखायोगम् (गा० १०)
१०८. शिखासारम् (गा० ११)
१०९. शिवारवम् (भू० १२)
११०. शून्यभेदविनिर्णयम्[14] (गा० १५)
१११. शेखरम् (द० २१)
११२. शौक्रम् (वा० २२)

---

१. संकोचम् । २. डामरारागम् । ३. तोत्तलम्, तोत्तरम् । ४. तोत्तलोत्तरम्, तोत्तरोत्तरम् । ५. दुष्कृतासनम् । ६. पञ्चामृतम् । ७ स्मरम् । ८. प्रपञ्चाहि । ९. भद्राक्षम् । १०. योगिनीजलसम्बरम् । ११. रोचनम् । १२. विवरम् । १३. विश्वरिकण्ठम् । १४. शून्यमदविनिर्णयम् ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



| | | | |
|---|---|---|---|
| ११३. सन्तानम् | (रु० ८) | १२३. सुवर्णरेखम्[1] | (गा० २५) |
| ११४. समुच्चयम् | (द० ८) | १२४. सूक्ष्मम् | (शि० ७) |
| ११५. साबरम् | (गा० ७) | १२५. स्वच्छन्दभैरवम् | (द० १) |
| ११६. साहस्रम् | (शि०८) | १२६. स्वायम्भुवम् | (रु० १२) |
| ११७. सिद्धम् | (रु० ७) | १२७. हयग्रीवम् | (भू० २) |
| ११८. सिद्धनित्योदयम् | (वा० १२) | १२८. हरम् | (गा० १) |
| ११९. सिद्धयोगीश्वरम् | (द० २६) | १२९. हलाहलम | (भू० १) |
| १२०. सुग्रीवम् | (गा० २६) | १३०. हाहाकारम् | (भू० ११) |
| १२१. सुत्रासम् | (गा० ६) | १३१. हुङ्कारम् | (भू० १०) |
| १२२. सुप्रभेदम् | (शि० १०) | १३२. हुङ्कारकम् | (गा० २) |

१. सुवर्णवर्णम् ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

## चतुष्षष्टितन्त्राणि चतुष्षष्टिभैरवागमाश्च

[अश्व० = अश्वक्रान्ताविभागः, कुल० = कुलचूडामणिः, रथ० = रथक्रान्ताविभागः, लक्ष्मी० = लक्ष्मीधरा सौन्दर्यलहरीटीका, वामके० = वामकेश्वरीमतम्, विष्णु० = विष्णुक्रान्ताविभागः, श्रीकण्ठी० = श्रीकण्ठीसंहिता, सर्वो० = सर्वोल्लासतन्त्रम्, सेतु० = सेतुबन्धाख्यं नित्याषोडशिकार्णवव्याख्यानम् ।]

| तन्त्रनाम | वामके० | लक्ष्मी० | सेतु० | कुल० | श्रीकण्ठी० | सर्वो० | अश्व० | रथ० | विष्णु० |
|---|---|---|---|---|---|---|---|---|---|
| अक्षयातन्त्रम् | | | | | | २२ | | | |
| अजाख्यम् | | | | | ४३ | | | | |
| अथर्वकम् | | | | | ६२ | | | | |
| अन्धकम् | | | | | ४१ | | | | |
| अरुणेशम् | ६२ | ५४ | ६२ | ६२ | | | | | |
| असिताङ्गभैरवम् | | | | | ५ | | | | |
| आकाशभैरवम् | | | | | | | | ३७ | |
| आचारसारः | | | | | | | | ५१ | |
| आथर्वण(यामलम्) | | | | | १४ | | | | |
| इन्द्रजालम् | | | | | | | | ४१ | |
| उड्डासकम् | | | | | | | ६२ | | |
| उड्डामरेश्वरम् | | | | | | | | ६२ | |
| उड्डीशम् | | | | | ३७ | | | | |
| उत्तरम् | | ६० | ५७ | ५७ | | ५२ | | | ८ |
| उत्फुल्लकमतम् | | | | | २३ | | | | |
| उन्मत्तभैरवम् | | | | | ४ | | | | |
| ऊर्ध्वाम्नायः | | | | | | ५४ | | | |

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS
CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



| तन्त्रनाम | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| एकजटातन्त्रम् | | | | | | | | १२ | |
| कङ्कालमालिनीतन्त्रम् | | | | | | | | ४३ | |
| कर्दम्बिकातन्त्रम् | | | | | ५२ | | | | |
| कबन्धम् | | | | | ६३ | | | | |
| कपालीश(भैरवम्) | | | | | ८ | | | | |
| करालभैरवम् | | | | | | | | ५४ | |
| कलाचक्रम् : | | | | | ३६ | | | | |
| कलावादम् | कालपादम् ४१ | ३९ | ३३ | ३३ | | | | | |
| कलासारम् | कालसारम् ४२ | ४० | ३४ | ३४ | | | | | |
| कामकेशरम् | | | | | | | ३७ | | |
| कामधेनुतन्त्रम् | | | | | | ३८ | | | ५२ |
| कामरत्नम् | | | | | | | ४४ | | |
| कामाख्यातन्त्रम् | | | | | | ६४ | | | ५१ |
| कामिकम् | ४० | ३८ | ३२ | ३२ | | | | | |
| कामिनीतन्त्रम् | | | | | | | ३३ | | |
| कालतन्त्रम् | | | | | | | १३ | | |
| कालभैरवम् : | | | | | | | | ६१ | |
| कालिकाकल्पः | | | | | | २६ | | | |
| कालिकाकुलसर्वस्वम् | | | | | | २५ | | | |

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

| तन्त्रनाम | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| कालीतन्त्रम् | | | | | | १ | | | २ |
| कालीविलासः | | | | | | ४६ | | | ६३ |
| कालोत्तमम् | | | | | | | | ४४ | |
| कुक्कुटाख्यतन्त्रम् | | | | | ३४ | | | | |
| कुब्जिकातन्त्रम् | | | | | ५९ | | | | ६१ |
| कुब्जिकामतम् | ४३ | कुण्डिकामतम् ४१ | ३५ | ३५ | | | | | |
| कुमारीतन्त्रम् | | | | | | २३ | | | ५३ |
| कुरञ्जम् | | | | | | | ६० | | |
| कुरूपिकामतम् | ५८ | | ५० | ५० | | | | | |
| कुलचूडामणिः | ५३ | ५१ | ४५ | विश्वतन्त्रम् ४५ | | ४१ | | | ४८ |
| कुलप्रकाशकम् | | | | | | | | | २३ |
| कुलसद्भावः | | | | | | | | ५८ | |
| कुलसारम् | ५१ | ४९ | ४३ | ४३ | | | | | |
| कुलामृतम् | | | | | | | | ६० | |
| कुलार्णवः | | | | | | २४ | | | ३ |
| कुलोड्डीशम् | ५२ | ५० | ४४ | ४४ | | | | | ५९ |
| कृकलासदीपिका | | | | | | | | ४२ | |
| कृतिसारः | | | | | | | | ६० | |
| कैवल्यम् | | | | | | | | ५७ | |

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS
CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


| तन्त्रनाम | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| क्रियासारः | | | | | | | ६ | | २६ |
| क्रोध(भैरवम्) | | | | | ३ | | | | |
| खचक्रम् | | | | | ४० | | | | |
| गणेशम् | | | | | | ३५ | | | |
| गणेशविमर्शिनी | | | | | | | | | १६ |
| गन्धर्वम् | | | | | | | | | २५ |
| गरुडम् | | | | | | | | १९ | |
| गवाक्षम् | | | | | | | | | ३६ |
| गान्धर्वम् | | | | | | ५८ | | | |
| गायत्रीतन्त्रम् | | | | | | | ५० | | |
| गुप्ततन्त्रम् | | | | | | | ७ | | |
| गुप्तदीक्षातन्त्रम् | | | | | | | २ | | |
| गुप्तसाधनम् | | | | | | १८ | | | |
| गुप्तसारम् | | | | | | | ८ | | |
| गुर्वर्चनम् | | | | | | | ४० | | |
| गुह्यचक्रम् | | | | | ३९ | | | | |
| गुह्यतन्त्रम् | ३९ | ३७ | ३१ | गुह्यतत्त्वम् ३१ | | | | | |
| गोपलीलामृतम् | | | | | | | ४५ | | |
| गोपीतन्त्रम् | | | | | | | ३१ | | |
| गोप्यम् | | | | | | | ४१ | | |

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

| तन्त्रनाम | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|---|
| गौतमीयम् | | | | | | ५६ | | | | |
| गौरीतन्त्रम् | | | | | | | १६ | | | |
| चण्ड(भैरवम्) | | | | | २ | | | | | |
| चन्द्रज्ञानम् | ३१ | २८ | २३ | तन्त्रज्ञानम् २३ | | | | | | |
| चन्द्रलेखातन्त्रम् | | | | | ५४ | | | | | |
| चन्द्राख्यम् | | | | | ३० | | | | १९ | |
| चामुण्डा(तन्त्रम्) | | | | | | | | | | |
| चालिकामतम् | | | | | २१ | | | | | |
| चित्रिका(मतम्) | | | | | ५० | ४८ | | | | |
| चिदम्बरतटम् | | | | | | | | १ | | |
| चिन्मयम् | | | | | | | ४७ | | | |
| चीनम् | | | | | | | | ५२ | | |
| चीनाचारम् | | | | | | | ३९ | | | |
| चूडामणिः | | | | | | | | १६ | | |
| छायानीलम् | | | | | | | ६१ | | | |
| जयराधामाधवम् | | | | | | | | | | |
| जालशम्बरम् | ४ | | ४ | ३ | | | | | | |
| ज्ञानम्[1] | २२ | | ६० | १४, ६० | | ५५ | | | | |
| ज्ञानद्वीपम् | | | | | | | | | | |

१. ज्ञानम्-कुल० (१५,१२) इत्यत्र वारद्वयं दृश्यते ।

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


अन्यैः पाञ्चरात्रादिभिः पतिः शरीरयुक्त एवाभ्युपगम्यते। केचन परमेश्वरादधिको मोक्ष इति वदन्ति। सर्वे एते पक्षा मतङ्गवचनेनानेन प्रतिक्षिप्ता भवन्ति। अत एव —"शुद्धयोनिमयं[1] तस्य वपुरुक्तमकल्मषम्" इति किरणायामुच्यते। "साधकस्य तु लक्ष्यार्थं तस्य रूपमिदं स्मृतम्" इति च पौष्करायाम्। "चिदचिदनुग्रहहेतो रूपाण्येतानि स प्रभुः कृत्वा। कुरुते चितामनुग्रहमनादिमलरुद्धशक्तीनाम्॥" (श्लो० ३४) इत्यत्र तत्वप्रकाशकारोऽपि तमेवार्थमाह।

अयमभिप्रायः—पत्युः शरीराभ्युपगमे तस्य शुद्धस्य भौतिकदेहायोगाद् बैन्दवदेहं वक्तव्यम्। तस्य बिन्दुरुपादानं वक्तव्यम्। तच्चात्र न संभवति। तथाहि—सर्वत्र क्षुब्धबिन्दोरेवोपादानत्वम्। तत्क्षोभः स्वतो वा शिवतो वा? नाद्यः, आत्माश्रयदोषापत्तेः। द्वितीये शिवस्य तत्क्षोभक्रियायां वपुरस्ति, तद्वपुषः साधकबिन्दुक्षोभार्थं पुनर्वपुरन्तर-

---

एव त्वं सुवर्णमिव कुण्डले॥" इति। हे अच्युत! त्वं विवर्तेऽस्तथारूपः सन्नपि निर्मलबोधैकरूपो भाससे, परिणामेऽपि च स एव त्वमसि। यथा हि कुण्डले सुवर्णस्यैव स्थितिस्तथैव जगदात्मनाऽपि त्वमेव भासीत्यभिप्रायोऽस्य श्लोकस्य। अविद्याशबलस्यास्येत्यादिधातुसमोक्षापद्यैरपि सोऽयमर्थः समर्थ्यते। तथा हि—"नावस्तु वस्तुनो नाशं विकारं वा करोत्यतः॥ नाच्छादितस्य तमसा रज्जुखण्डस्य विक्रिया। नाशो वा विद्यते यद्वत् तद्वन्नाविद्ययात्मनः॥" इति। अत एव—"वैचित्र्येणोक्तप्रकारप्रतिबिम्बनस्वभावेन वर्तनं विश्वस्य विवर्तः" (पृ० १५०) इति विवर्तलक्षणं समुपस्थापयति महेश्वरानन्दः परिमले, "विवर्तो विचित्रेण रूपेण न त्वविद्यावशात्, अपि तु स्वातन्त्र्यतः" (पृ० १५०) इति क्रमकेलिवचनेन च तत् संवादयति। एवं च विवर्तपरिमाणयोर्न जातुचिद् भेदः कश्चन सिद्धयत्यत्र तान्त्रिकेऽद्वैतदर्शने। अत एव भास्कररायो वरिवस्यारहस्यप्रकाशे विवर्तवादं वेदान्तिसंमतं परिणामवादी तान्त्रिको दूषयति" (पृ० ४) इति वदन् वेदान्तिसंमतं विवर्तवादं निरस्य सांख्यदर्शनतो विलक्षणं परिणामवादं प्रतिपादयति।

वस्तुतस्तु—"विवर्तपरिमाणयोरनभ्युपगमात्" (स्वच्छन्द० ५।८८; पृ० ९८) इति क्षेमराजदिशा नाभ्युपेयेते उभावपि विवर्तवादपरिणामवादौ प्रत्यभिज्ञादर्शने। विवर्तपरिणामपक्षः क्षेमराजेन स्पन्दनिर्णयेऽपि (पृ० १४) प्रत्याख्यातः, अभिनवगुप्तेन च ई० प्र० वि० वि० (I. ८-८) इत्यत्र। प्रत्यभिज्ञादर्शनं हि स्वातन्त्र्यवादसंमतं प्रतिबिम्बवादमङ्गीकरोतीत्यन्यत्र द्रष्टव्यम्। अभेदकारिकायां तु—'कल्पनामात्रमेवैतद् यच्छिवव्यपदेशनम्। नेत्थं विभोर्विवर्तोऽस्ति परिणामश्च न क्वचित्॥" इत्येवं पूर्वं विवर्तपरिणामवादौ निषिद्धयेते, तदनु च—"अथवा द्वयमप्यस्तु तथाप्यस्य न खण्डना" इत्येवं तयोरङ्गीकारेऽपि न काचन क्षतिरिति वर्ण्यते। सिद्धान्तशैवमतानुयायी श्रीकण्ठस्तु रत्नत्रये (श्लो० २०१-२५३) विवर्तवादं सन्दूष्य परिणामवादं पोषयति। "अन्ते पुराणतां दृष्ट्वा प्रतिक्षणं नवत्वहानिरनुमीयते" इति वदतोऽनन्तपादस्य किमभिप्रेतमिति परीक्षणीयम्।

१. शाक्तं शरीरं भगवतः साकारता च सर्वदर्शनसंग्रहे शैवमते (पृ० ६७) द्रष्टव्या।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



कल्पनायामनवस्थापत्तेः। यदि तत्राऽचलमूर्तिमात्रेणैव बिन्दुक्षोभः, तर्हि तस्य सृष्ट्यादिक्रियासु किं शरीरान्तरकल्पनया। एवमेव शरीराधीनसहकारिणोरदृष्टनिमित्तकारणयोर्निरासः। तस्माच्छिवस्य कारणत्रयाभावेन कृतशरीराभावेऽपि स्वदेहस्पन्दादावात्मनः कर्तृत्ववत् सृष्ट्यादिक्रियाकर्तृत्वोपपत्तिरिति। तदुक्तं पौष्करे—"अदेहस्यापि कर्तृत्वं स्वदेहप्रेरणे यथा" इति।

## शक्तिरेव करणम्

ननु जगत्सृष्टिस्थित्यादिरूपा पत्युः क्रिया नाकरणिका, क्रियात्वात्, छिदिक्रियावत्। अतस्तस्यापि करणेन भवितव्यम्। इयमाशङ्का मृगेन्द्रसूत्रेणानेन निरस्यते—"करणं च न शक्त्यन्यच्छक्तिर्नाचेतना चितः। विषयानियमादेकं बोधे कृत्ये च तत्तथा॥" (वि० ३।४) इति। अस्यायमर्थः—शिवस्य शक्तेरन्यद् वस्तु करणं न भवति। अत्र निषेधमुखेन विधिरुच्यते। शक्तिरेव करणम्, तयैव तत्तत्क्रियानिष्पादनादित्यर्थः। चित्सम्बन्धिनी सा शक्तिश्चाचेतनस्वरूपा न भवति; चित्स्वभावायाः शक्तेरचिद्रूपत्वायोगात्। यस्माज्ज्ञेयानां करणीयानां चानन्त्यम्, तस्माच्चास्य करणैरनन्तैर्भवितव्यम्। अपरिमितविषयं च परमेश्वरस्य ज्ञानं कृत्यं च। तस्माद् विषयस्य करणीयस्य चानियतत्वाद् अनवच्छिन्नत्वाद्धेतोरेकमपि तच्छक्तिरूपं करणं बोधे कृत्ये च ज्ञानविषये कार्यविषये च, तथा अनियतमनवच्छिन्नमनन्तमेवेति। शक्तिश्चित्तनुरित्यादिके सिद्धान्तसारावलीपद्येऽप्ययमेव विषयो वर्ण्यते। अत एव—"तस्य देवातिदेवस्य परापेक्षा न विद्यते। परस्य तदपेक्षत्वात् स्वतन्त्रोऽयमतः स्थितः॥" इति कामिकवचने जगत्कर्तृत्वे तस्य स्वातन्त्र्यं प्रतिपाद्यते। "स्वातन्त्र्यात्मकं कर्तृत्वमीश्वरे" इति च मन्त्रवार्त्तिकटीकायां रामकण्ठः।

"यथा कालो ह्यमूर्तोऽपि दृश्यते फलसाधकः। एवं शिवो ह्यमूर्तोऽपि कुरुते कार्यमिच्छया॥" इति किरणसूत्रमपि तमेनं विषयं पोषयति। यथा लोके क्षणमुहूर्तादिकः षड्ऋतुरूपोऽशरीरोऽपि कालः स्वस्वोचितपुष्पफलादीनां प्रतिक्षणं द्रव्यपरिपाकस्य बाल्ययौवनादेश्च साधकः कर्ता दृश्यते, एवममूर्तोऽपि शिवः कार्यं क्षित्यादिकं जगत् कुरुते हि। शिवस्य हि किल योगिन इव सर्वासु क्रियासु इच्छैव करणम्। यदुच्यते—"इच्छैव करणं तस्य यथा सद्योगिनो मता" इति। न चेन्द्रियादिकरणाभावे कर्तृत्वासिद्धिरिति वाच्यम्, अक्षहीनस्याप्ययस्कान्तस्य लोहाकर्षणकर्तृत्ववत् तदुपपत्तेः। यथोक्तं किरणे—"शल्याकृष्टिकरो दृष्टो ह्यक्षहीनोऽपि कर्षकः" इति। अत एव—'अनादिरूपो भगवानिच्छयाऽस्यावतारकः'[1] इत्युच्यते पौष्करे। अस्य जगतः, अवतारकः कर्तेत्यर्थः। सर्वोऽयं विषयो मृगेन्द्रे विद्यापादे (३।१-८) तद्वृत्तौ च प्रतिपादितस्तत्रैव द्रष्टव्यः।

१. "योगीव निरुपादानमर्थजातं प्रकाशयेत्" (ई० प्र० १।५।७)। अकामः संसृजेदिति च स्वच्छन्दे (११।३१६-३१८)। नकुलीशदर्शने निरपेक्षः पतिः कारणम्, सिद्धान्तशैवमते च सापेक्षः—स० सं०, पृ० ६४-६५, तत्त्वसंग्रहस्था ४४-५१ श्लोकाश्चात्र द्रष्टव्याः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## शिवस्य पञ्चमन्त्रतनुत्वम्

तत्त्वप्रकाशे भोजराजः—"चिद्घन एको व्यापी नित्यः सततोदितः प्रभुः शान्तः। जयति जगदेकबीजं सर्वानुग्राहकः शम्भुः॥ नोदयति यन्न नश्यति निर्वाति न निर्वृतिं प्रयच्छति च। ज्ञानक्रियास्वभावं तत्तेजः शाम्भवं जयति॥ शक्तो यया स शम्भुर्भुक्तौ मुक्तौ च पशुगणस्यास्य। तामेकां चिद्रूपामाद्यां सर्वात्मनाऽस्मि नतः॥" (श्लो० १-३) इति मङ्गलपद्यमुखेन शिवशक्त्योः स्वरूपं निर्वर्ण्य, "मुक्तात्मानोऽपि शिवाः किन्त्वेते यत्प्रसादतो मुक्ताः। सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः॥" (श्लो० ६) इति शिवस्य पञ्चमन्त्रतनुत्वं[1] प्रतिपादितवान्। पञ्चमन्त्रतनुरीश्वर इति लिङ्गोद्भवेऽपि। तदेतत् पञ्चमन्त्रतनुत्वं मृगेन्द्रे वर्ण्यते—"तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः। ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम्॥ ईष्टे येन जगत्सर्वं गुणेनोपरिवर्तिना। स मूर्धसमदेशत्वान्मूर्धा नावयवस्तनोः। तस्य तस्य तनुर्या पूस्तस्यामुषति येन सः। तत्त्राणाद् व्यञ्जनाच्चापि स तत्पुरुषवक्त्रकः॥ हृदयं बोधपर्यायः सोऽस्य घोरः शिवो यतः। परिग्रहस्य घोरत्वाद् घोरोक्तिरुपचारतः॥ वामस्त्रिवर्गवामत्वाद् रहस्यश्च स्वभावतः। वामं धाम परं गुह्यं यस्यासौ वामगुह्यकः॥ सद्योऽणूनां मूर्तयः संभवन्ति यस्येच्छातस्तेन सद्योऽभिधानः। सद्यो मूर्तीर्योगिनां वा विधत्ते सद्योमूर्तिः कृत्यशैघ्र्यान्न मूर्तेः॥" (३।८-१३) इति।

## शिवस्य पञ्चकृत्यकारित्वम्

पञ्चमन्त्रतनुना शिवेन संपाद्यं [2]कृत्यपञ्चकं च मृगेन्द्रे एवं वर्ण्यते—"जगज्जन्मस्थिति-ध्वंस-तिरोभाव-विमुक्तयः। कृत्यं सकारकफलं ज्ञेयमस्यैतदेव हि॥" (२।३) इति। तत्त्वप्रकाशेऽपि च—"पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहृतितिरोभावाः। तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य॥" (श्लो० ७) इति। जगतो जन्मवज्जन्तुचक्रस्य भोगोपयोगिपरिकरसहितस्य पौनःपुन्येन तत्तद्विविधयोनिषु सर्जनं जन्म[3]। तच्च शिव-

---

१. मतङ्गे I. ६५-६८, तन्त्रा० VII. १२, IX. १०१, कालोत्तरे (२२।१२-१६), म० म० प०, पृ० १२१ इत्यत्रापि विषयोऽयं द्रष्टव्यः। पञ्चमन्त्रतनुध्यानानि स्वच्छन्दे (१२।१२५-१३७), पञ्चमूर्तेः शिवस्य पञ्चभूतात्मकत्वं च कालोत्तरे (२२।१२-१३)।

२. पशोः शिवस्य च पञ्चकृत्यानि प्रत्यभिज्ञाहृदये स्पन्दसन्दोहे च वर्णितानि। सौन्दर्यलहरीटीकायां सौभाग्यवर्धन्यां स्मृते शाम्भवदीपिकावत्रने शैवशाक्तागमप्रसिद्धान्येव तानि वर्णितानि। ई० प्र० वि०, I. ३३१; म० म० प०, पृ० ९७; स० सं० (शैवमते) पृ० ६८ इति च द्रष्टव्यम्।

३. जन्माख्यस्य प्रथमकृत्यस्य सृष्टेर्वा विशिष्टं वर्णनं श० र० सं०, पृ० २७-२८ इत्यत्र द्रष्टव्यम्। तत्त्वप्रकाशश्लोकौ (७१-७२), मोक्षकारिकाश्लोकाः (१-४), मृगेन्द्रागमीया अनन्ताद्यष्टक - वामादिशक्तिनवक - अष्टादशोत्तरशतरुद्र-पशुप्रायसाञ्जनसृष्टयस्तत्रैव विद्यापादे (४।२-११) द्रष्टव्याः। स्वेच्छयेत्याज्ञावतारदृष्ट्या भगवान् स्वेच्छयैव

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्यैकं कृत्यम् । स्थितिस्तदिच्छानिरुद्धस्य स्वदृष्टस्य सर्वलोकस्य पुरुषार्थसिद्धये व्यापार-प्रसिद्धये नियोजनं स्थापनं द्वितीयं कृत्यम् । ध्वंसः स्थित्यन्ते शुद्धाशुद्धाध्वभोगसाधनतनु-करणभुवनादीनां बिन्दुमायात्मककारणे सशक्त्यात्मनां विलयनद्वाराऽन्तर्निहिताणुसंघका-धिष्ठानेन भवाध्वभ्रमणश्रान्तानां संसारिणां विश्रामायाऽवस्थापनं तृतीयं कृत्यम् । अयमेव च ध्वंसः प्रलय इत्युक्तः । स च त्रिविधः—अधम-मध्यम-उत्तमभेदेन । ब्रह्मणो दिनान्त-स्वापे कालाग्निरुद्रोर्ध्वावलोकनवह्निना भूर्भुवःस्वर्लोकानां त्रयाणां लयोऽधमः प्रलयः । श्रीकण्ठस्य दिनान्तस्वापे भूततत्त्वादिगुणतत्त्वान्तलयो मध्यमः प्रलयः । कालाग्निभुव-नादिनादान्तलय उत्तमः प्रलयः । एतत्सर्वं मतङ्गे[1] विस्तरेण प्रदर्शितं तत एव द्रष्टव्यम् । अस्मिन् महाप्रलये माया-पुरुष-शिवव्यतिरेकेण सर्वेषामुपसंहारः । तदुक्तं तत्त्वप्रकाशे—

माया पुरुषः शिव इत्येतत् त्रितयं महार्थसंहारे ।
अवशिष्यते पुनस्तत् प्रवर्तते पूर्ववत् सृष्टौ ॥[2]

संसारे खिन्नानां निखिलानां प्राणिनां प्रभुः कृपया ।
कुरुते महार्थसंहृतिमेतेषामेव विश्रान्त्यै ॥ (श्लो० ६९-७०) इति ।

तिरोभावः[3] पाशानुग्रहेण पशूनां यथानुरूपाद् भोगादप्रच्यावश्चतुर्थं कृत्यम् । अयमेव संरक्षणाख्ययाऽन्यत्रोक्तः[4] । यदाह वार्त्तिककारः—"स्वसंस्कारोचिताद् भोगादप्रच्यावः शरीरिणाम् । प्रोक्तं संरक्षणं नाम न्यायेन परिपालनम् ॥" इति । विमुक्तिश्चानुध्यान-मनुग्रहः पाशतिरोधानेनाणूनां परापरमोक्षदानम् । तत्रापरमोक्षः षड्विधः, परमोक्ष-स्त्वेकविध इति सप्तप्रकारोऽयं मोक्षो [5]मतङ्गे प्रतिपादितो मोक्षप्रकरणे प्रदर्शयिष्यते । इद[6]मनुग्रहरूपं कृत्यं शिवः सृष्टिकालेऽपि च करोतीति सर्वमेतद् मृगेन्द्रे विद्यापादे चतुर्थ-पञ्चमपटलयोरवलोकनीयम् । "पशूनां देहसंयोगो भोगमोक्षाय कथ्यते" इत्यादिना

---

सृष्टिसंहारौ करोति । त्वदाशयोन्मेषनिमेषमात्रमयौ जगत्सर्गलयाविति कक्ष्यास्तोत्र-वचनम्, "सद्यो भवन्ति न भवन्ति समस्तमूर्तेरुन्मीलनेन तव देवि निमीलनेन" इति कामसिद्धिस्तोत्रवचनमपि तदनुगुणम् । निमेषोन्मेषाभ्यामिति सौन्दर्यलहरीश्लोको-(१४)ऽपि ।

१. संकलाध्वसंहाराख्ये पञ्चविंशे पटले विद्यापादीये।
२. तत्त्वनिर्णयस्य तृतीयं श्लोकमनुकरोति कारिकेयम् ।
३. तिरोभावविवेचनं तन्त्रालोके चतुर्दशाह्निके द्रष्टव्यम् ।
४. मृगेन्द्रवृत्तौ (विद्या० २।३-४), रौरवे (विद्या० १।१५) च विषयोऽयमवलोकनीयः ।
५. मतङ्गे योगपादे (५।६३-६७) विषयोऽयं प्रतिपाद्यते ।
६. अनुग्रहकृत्यम्, शक्तिपातः, मुक्तिवैचित्र्यं च मृगेन्द्रविद्यापादे पञ्चमपटले द्रष्टव्यम् । बध्नाति काचिदपि शक्तिरित्यत्रावधूतसिद्धोऽपि वक्ति । वाजसनेय-सर्ववीर-ब्रह्म-यामल-सिद्धातन्त्रप्रभृतिषु वर्ण्यंते यत् परमेश्वरस्य स्वेच्छाप्रवृत्तत्वादनुग्रहस्यानेकानि कारणानि भवन्ति । स कदाचिद् भक्तियोगेन, कर्मणा, विद्यया, ज्ञानधर्मोपदेशेन, मन्त्रैः, दीक्षया—इत्येवमादिभिरनेकैः प्रकारैः संसारिणोऽनुगृह्णाति । निरपेक्षः शक्तिपातश्चाग्रे प्रतिपादयिष्यते ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्वायम्भुवे कृत्यपञ्चकप्रयोजनमुच्यते। शिवस्यैवैतत् पञ्चकृत्यं मुख्यम्, विद्याविद्येश्वरादीनां च तत्प्रेरणयेति—"अधिकारं प्रकुर्वन्ति शिवेच्छाविधिचोदिताः" इति रौरववचने प्रतिपाद्यते। एतच्च कृत्यपञ्चकं न मायादिभिः कर्मभिर्वा निर्वर्तयितुं शक्यम्, अचेतनत्वात्। नापि पुरुषेण, तस्य मलनिरुद्धशक्तिकत्वात्। शिवश्च प्रलयकालेऽप्येतानि कृत्यानि सम्पादयति। तदुक्तं पौष्करे—"प्रलयेऽप्यनुगृह्णाति सृजत्यवति हन्ति च। तिरोदधाति भगवान् न कालापेक्षया सदा॥" इति, "स्वापेऽप्यास्ते बोधयन्" (विद्या० ४।१५) इति च मृगेन्द्रे।

## पतेर्निमित्तकारणत्वम्

द्वैतवादिनि शैवसिद्धान्तशास्त्रे पतेः शिवस्य[1] निमित्तकारणत्वमेवाङ्गीक्रियते, नोपादानत्वमिति पराख्यसूत्रेण प्रदर्श्यते—"निमित्तमीश्वराख्यं तद् यद् दृष्टं सहकारणम्। उपादानं च यत्सूक्ष्मं सर्वकार्येषु संस्थितम्॥" इति। ईश्वराख्यं निमित्तकारणम्, यच्च दृष्टं दण्डचक्रादि सहकारिकारणम्, यच्च मृदादि उपादानकारणम्, तत् त्रितयमपि सर्वकार्येषु सम्बद्धं वर्तते। तथा च कारणत्रयं सर्वकार्येषु संहितमिति वचनेन सर्वकार्यस्य पृथक्तया कारणत्रयव्याप्तिप्रतिपादनेन प्रपञ्चस्यापि कार्यस्य पृथक् कारणत्रयावश्यकतयाऽभिन्ननिमित्तोपादानत्वं निरस्तम्। ननु ऊर्णनाभिजन्तोर्लूतातन्तुं प्रति निमित्तत्वमुपादानत्वं च दृष्टमिति चेन्न, तत्रापि तदास्यगतलालाया एव तत्रोपादानत्वात्। किञ्च, ईश्वरस्योपादानत्वे तस्य परिणामित्वमचिद्रूपत्वं च प्रसज्येत। तदुपादेयस्य सर्वस्य प्रपञ्चस्यापि चिद्रूपत्वापत्तिश्च। अत एव तत्समवायिशक्तेरपि नोपादानत्वम्। चिद्विवर्ताङ्गीकारे जगदसत्यतापत्तिः। न चेष्टापत्तिः, सर्वप्रमाणसिद्धस्य जगतोऽपह्नोतुमशक्यत्वात्। तदुक्तं पौष्करे—"नास्ति शक्तिरुपादानं चिद्रूपत्वाद् यथा शिवः। परिणामोऽचितः प्रोक्तश्चेतनस्य न युज्यते॥ चितो विवर्त एवोक्तस्तथात्वे कार्यशून्यता। सर्वप्रमाणसंसिद्धं चिद्विवर्तः कथं जगत्॥" इति। एवं च प्रपञ्चस्य ईश्वरो निमित्तकारणम्, शक्तयः सहकारिकारणम्, बिन्दुरुपादानकारणम्। यथोक्तं तत्रैव—"निमित्तमीश्वरस्तेषामुपादानं च बिन्दुराट्" इति। वचनमेतत् पराख्येऽपि दृश्यते। तत्रापि शुद्धेऽध्वनि शिवस्य निमित्तत्वम्, बिन्दोरुपादानत्वम्। अशुद्धेऽध्वनि तु अनन्तेशस्य निमित्तत्वम्, मायाया उपादानत्वं वेदितव्यम्। तथा च किरणे—"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" इति। "मायाऽपि नात्रोपादानं मोहकत्वात् स्वतेजसा" इति च पौष्करे।

न च माया-काल-कर्मादीनामेव जगन्निमित्तत्वम्, नेश्वरस्येति वाच्यम्; तेषामचेतनानां चेतनप्रेरणं विना कार्यकारणत्वानुपपत्त्या तत्प्रेरकचेतनावश्यम्भावे सत्यस्मदादीनां निरुद्धदृक्क्रियतया तत्प्रेरकत्वाभावेन सर्वज्ञस्य सर्वकर्तुरीश्वरस्यैव तत्सम्भवेन सकलप्रपञ्चं प्रति तस्यैव निमित्तकारणत्वौचित्यात्। अत एव पौष्करे—"निमित्त-

१. शिवस्य निमित्तकारणत्वं मतङ्गे (विद्या० ६।९९), स्वच्छन्दे (११।२-३) चोपपाद्यते। नेत्रतन्त्रे (२१।५०-५१) निमित्तोपादानत्वं विविच्यते। आगमरहस्यवचने (I. पृ० ६), शिवदृष्टौ (३।५१-५२) च तस्य निमित्तकारणत्वं निषिध्यते।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मीश्वरस्तेषामुपादानं च बिन्दुराट् । नृकर्म सहकारि स्यात् कार्यमेतत् त्रिहेतुकम् ॥" इत्युच्यते । तस्मात् प्रपञ्चकार्यस्य निमित्तादिकारणत्रयरूपत्वमीश्वरादित्रयस्येति सर्वैरभ्युपेयम् ।

## पतेस्त्रैविध्यम्

सोऽयं कर्ता पतिः शिवः शक्तोद्युक्तप्रवृत्तभेदेन त्रिविधो भवतीति—"शक्तोद्युक्त-प्रवृत्तश्च कर्ता त्रिविध उच्यते । शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः ॥" इति [1]मृगेन्द्र-सूत्रेण प्रदर्श्यते । स्वशक्त्यात्मकशरीरकरणो वास्तविकशरीरकरणरहितः शिवः शक्तः, उद्युक्तः, प्रवृत्त इति त्रिविधश्चिच्छक्तेः प्रवृत्तिभेदेन औदासीन्य-उद्योग-प्रवृत्ति-रूपव्यापारभेदेनोपचर्यते, न तु वास्तवः । तथा चायमर्थः—अत्र यच्छक्तत्वं कार्यं प्रति योग्यत्वम्, असौ निष्कलावस्था, तद्वान् शान्त इत्युच्यते । यद् उद्युक्तत्वं सकलनिष्कला-वस्था सदाशिव उच्यते । प्रवृत्तक्रियत्वं च स्थूलत्वादीश्वर इति । कृत्यविषयोऽय-मवस्थाभेदः । तेनोपचारादेतत् तत्त्वत्रयं भिन्नमित्युच्यते, न परमार्थत्वादिति । तदुक्तं किरणे—"प्रोक्तः स [2]निष्कलः स्थूलस्तथा सकलनिष्कलः । ईशः सदाशिवः शान्त इति नाम्ना स्थितस्त्विह ॥" इति ।

"इच्छानुग्रहकर्तृत्वाल्लयभोगाधिकारवान् । त्रिविधः कृत्यभेदेन कथितो नाम-भेदतः ॥" इति किरणवचने [3]लयभोगाधिकारावस्थाभेदेन शिवस्य त्रैविध्यं वर्ण्यते, "लयभोगाधिकाराणां न भेदो वास्तवः शिवे । किन्तु बिन्दोरणूनां च वास्तवा एव ते मताः ॥" इति च पौष्करे प्रोच्यते, मतङ्गे च विद्यापादे तृतीयचतुर्थपटलयोर्विस्तरेणा-वस्थात्रयमेतद् व्याख्यायते, तथापि लयभोगाधिकारावस्था एताः कार्योपसंहार-कार्योद्योग-कार्यसम्पत्तिरूपा एवेति नात्र स्वरूपतः कश्चन भेद इति मन्तव्यम् । यथा ह्यात्मा शरीरयोगात् सकलः, प्रलयावस्थायामकलः, मुक्त्यवस्थायां च पर इत्युच्यते, एवमेव शिवोऽपि सकलनिष्कलादिशब्दैर्भिन्न इत्युपचर्यते । नहि वास्तवः स भेद इति । निष्कलः सकलश्च शिवो लिङ्गोद्भवे, निष्कलः सकलः शान्तश्च शिवो हंसपारमेश्वरे वर्ण्यते । तन्त्रालोकेऽपि (८।३७९-३८०) लयभोगाधिकारावस्थाः सकलनिष्कलाद्यवस्थाश्च मतङ्गप्रामाण्येन विवेचिताः ।

---

१. श्लोकोऽयं मृगेन्द्रागमे गवेषणीयः ।

२. सकलो निष्कलश्च शिवः, तस्याष्टात्रिंशत्कलाः, तासां न्यासविधिश्च रौरवे I. १६, १७९, १८९; II. २२) द्रष्टव्याः । अष्टात्रिंशत्कलाः स्वच्छन्देऽपि (I. ४८) वर्ण्यन्ते । "यावदुच्चार्यते वाचा" (७।२३८-२३९) इत्यादिना च तत्र सकल-निष्कललक्षणं व्यावर्ण्यते । सकलं स्वरूपमसारमिति च विज्ञानभैरवे (श्लो० ८) । अद्वयदृष्ट्या सकलीकरणं योगीश्वराचार्यवचने, द्वैतदृष्ट्या च सकलीकरणविधिरघोर-शिवाचार्यपद्धति(पृ० २४)वर्णितः पाण्डिचेरीमुद्रिते सोमशम्भुपद्धतिप्रथमभागे (पृ० ३२२) द्रष्टव्यः ।

३. पत्युर्लयभोगाधिकाराख्यास्तिस्रोऽवस्था मतङ्गपारमेश्वरे विद्यापादे तृतीयतुरीयपटल-योर्विस्तरेण वर्णिता विलोकनीयाः ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


## पशुः (जीवः)

"देहान्योऽनश्वरो व्यापी विभिन्नः समलोऽजडः। स्वकर्मफलभुक् कर्ता किञ्चिज्ज्ञः सेश्वरः पशुः ॥" इत्येवं पशुस्वरूपं वर्ण्यते पराख्यसंहितायाम्। देहान्य इत्यनेन चार्वाकपक्षनिरासः। अनश्वर इत्यनेन सौगतक्षणभङ्गवादनिरासः। व्यापीत्यनेन क्षपणकमतनिरासः। विभिन्न इत्यनेन वेदान्तवादनिरासः। समल इत्यत्र मलशब्देन ज्ञानावरकं कर्मभिन्नं रागकारणमज्ञानमुच्यते। अजड इति ज्ञानक्रियास्वभावः। स्वकर्मफलभुगिति स्वस्य कर्म स्वकर्म धर्माधर्मात्मकम्, तस्य फलं भुङ्क्ते इति स्वकर्मफलभुक्। युगपत् सेवाकृष्यादिप्रवृत्तयोर्द्वयोः पुरुषयोरेकस्य फलसिद्धेरितरस्यादर्शनाच्चैतन्मन्तव्यम्। तदुक्तं पौष्करे—"उभयोः कृषिसाम्येऽपि कश्चिद् धान्यानि गच्छति। न किञ्चिदपरस्तस्य कर्म कारणकं द्विजाः ॥" इति। कर्ता पूर्वोक्तस्य कर्मणः सम्पादयिता। किञ्चिज्ज्ञः किञ्चिदल्पं जानातीति किञ्चिज्ज्ञः। सेश्वरः, ईश्वरेण प्रेरकेण सहितः। न सांख्यानामिव स्वतन्त्रः, "ईश्वराधिष्ठितात्माऽसावस्वतन्त्रो यतस्तु सः" इति पराख्यवचनान्तरात्। "ततः कलासमायुक्तो भोगेऽणुः कर्तृकारकः" इति पराख्यवचनेऽणोराणवमलयुक्तस्य जीवस्य कर्तृत्वं प्रतिपाद्यते, "पशवो ह्यणवः" (श्लो० ५) इति हि तत्त्वप्रकाशे, "पशवो ह्यणवो मताः" इति च सिद्धान्तहृदये। "पशुर्नित्यो ह्यमूर्तोऽज्ञो निष्क्रियो निर्गुणोऽप्रभुः। व्यापी मायोदरान्तस्थो भोगोपायविचिन्तकः ॥" इति च [1]पशुस्वरूपं वर्ण्यते किरणागमे।

मृगेन्द्रे च—"चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा। सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम् ॥ सदप्यभासमानत्वात्तन्निरुद्धं प्रतीयते। वश्योऽनावृतवीर्यस्य सोऽत एवाविमोक्षणात् ॥" (विद्या० २।५-६) इत्येवमणोर्जीवस्य दृक्क्रियारूपचैतन्यस्वरूपत्वं वर्ण्यते। मलावृतं तच्चैतन्यं न प्रकाशत इत्यत एव—"अणवश्चिदचिद्रूपाः" इति, "शिवात्मकाः प्रमातारः" इति च नरेश्वरविवेके भण्यते। बुद्धिप्राणशरीराख्यं पुरत्रयं दहतीति जीवस्त्रिपुरान्तकः शिव उच्यत इति हंसभेदे, "अत एव तु ये केचित् परमार्थानुसारिणः। तेषां तत्र स्वरूपस्य स्वज्योतिष्ट्वं न लुप्यते ॥" इति च तत्त्वगर्भे। अत एव—"जीवः शक्तिः शिवस्यैव" इति त्रिशिरोभैरवे वर्ण्यते। "जीवः सर्वमयः" इति चात्मसप्ततौ। पाश्यो जीव इति तु तन्त्रसद्भावे।

---

१. पशुपदार्थसिद्धिस्तत्स्वरूपं च मृगेन्द्रे षष्ठे पटले वर्ण्यते। तत्त्वसंग्रहे (श्लो० २७-४३), सर्वदर्शनसंग्रहे (पृ० ६८-७०), शैवदर्शनबिन्दौ (पृ० २५), मतङ्गे (विद्या० ६।४-६), नेत्रतन्त्रे (१९।१५१-१५३) च द्वैतदृष्ट्या; स्पन्दनिर्णये (पृ० ६५, ६८-७१), प्रत्यभिज्ञाहृदये (पृ० ६१-७३), ई० प्र० वि० (II. २४४-२४६), ई०प्र०वि०वि० (II. ६१), म०म०प० (पृ० २४), शिव० विम० (पृ० ४३-४८), तन्त्रसारे (पृ० ३), परमार्थसारे (पृ० १२-१८, ५५-६८), तन्त्रा० (९।१४४-१४५) चाद्वैतदृष्ट्या पशुस्वरूपमवसेयम्। ईश्वराद्वयवादस्य वैशिष्ट्यमिदं यत्पशुरपि पञ्चकृत्यानि सम्पादयति।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## त्रिविधः पशुः

अयं च पशुर्विज्ञानाकल-प्रलयाकल-सकलभेदेन त्रिविधो भवति। प्रतिपादितं चैतत् तत्त्वप्रकाशे—"पशवस्त्रिविधाः" (श्लो० ८) इत्यादिना, "इत्येवं कीर्तिताः पशवः" (श्लो० १६) इत्यन्तेन ग्रन्थेन। त्रिविधाः पशवः सिद्धान्तहृदयेऽपि वर्ण्यन्ते। तत्र प्रथमो विज्ञानयोगसंन्यासैर्भोगेन वा कर्मक्षये सति कर्मक्षयार्थस्य कलादिभोगबन्धस्याभावात् केवलमलमात्रयुक्तो विज्ञानाकल[1] इति व्यपदिश्यते। द्वितीयस्तु प्रलयेन कलादेरुपसंहारान्मलकर्मयुक्तः प्रलयाकल इति व्यवह्रियते। तृतीयस्तु मलमायाकर्मात्मकबन्धत्रयसहितः सकल इति संलप्यते।

तत्र प्रथमो द्विप्रकारो भवति, समाप्तकलुषासमाप्तकलुषभेदात्। तत्राद्यान् कालुष्यपरिपाकवतः पुरुषधौरेयानधिकारयोग्याननुगृह्यानन्तादिविद्येश्वराष्टकपदं[2] प्रापयति। अन्त्यान् सप्तकोटिसंख्यातान् मन्त्राननुग्रहकरणान् विधत्ते। प्रलयाकलोऽपि द्विविधः—पक्वपाशद्वयस्तद्विलक्षणश्च। तत्र प्रथमो मोक्षं प्राप्नोति। द्वितीयस्तु [3]पुर्यष्टक-

---

१. विज्ञानाकलादयस्तत्त्वप्रकाशकुमारवृत्तौ (श्लो० ८-१६), मृगेन्द्रवृत्तौ (विद्या० २।१), रत्नत्रये (श्लो० २३-२९), सर्वदर्शनसंग्रहे (पृ० ६८), मालिनीविजयोत्तरे (पृ० ३-५, ७), प० त्रि० वि० (पृ० ११७-११९) इत्यत्रापि च विवृताः। तन्त्रालोके (९।९०-९७, १३८-१४१) च विज्ञानाकलादीनां क्रमो विपर्यस्त इव दृश्यते। प्रमातृसप्तकस्था टिप्पणी चात्रावलोकनीया।

२. अनन्तादिविद्येश्वराष्टकं मतङ्गे विद्यापादे ४-५ पटलयोः सविशेषं निरूपितम्। स्वायम्भुव-सिद्धान्तगमवचनयोश्च तद् द्रष्टव्यम्।

३. "स्यात् पुर्यष्टकमन्तःकरणं धीकर्म करणानि" (श्लो० १२) इत्येवं तत्त्वप्रकाशे पुर्यष्टकस्वरूपं वर्णितम्। तत्र पुर्यष्टकं नाम प्रतिपुरुषं नियतः सर्गादारभ्य कल्पान्तं मोक्षान्तं वाऽवस्थितः पृथिव्यादिकलान्तत्रिंशत्तत्त्वात्मकोऽसाधारणरूपः सूक्ष्मदेहः" इत्यघोरशिवाचार्यो व्याख्यातवान्। अत्र सः—"वसुधाद्यस्तत्त्वगणः प्रतिपुंनियतः कलान्तोऽयम्। पर्यटति कर्मवशतो भुवनजदेहेष्वयं च सर्वेषु॥" (श्लो० २४-२५) इति तत्त्वसंग्रहवचनं प्रमाणयति। अन्तःकरणशब्देन मनोबुद्ध्यहङ्कारवाचिनाऽन्यान्यपि पुंसो भोगक्रियायामन्तरङ्गानि कलाकालनियतिविद्यारागप्रकृतिगुणाख्यानि सप्त तत्त्वान्युपलक्ष्यन्ते। धीकर्मशब्देन बुद्धेरध्यवसिततया ग्राह्याणि पृथिव्याकाशान्तानि पञ्चभूतानि तत्कारणानि च शब्दादीनि पञ्चतन्मात्राण्युच्यन्ते। करणशब्देन बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च दर्शयति।

"शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः। बुद्धिर्मनस्त्वहङ्कारः पुर्यष्टकमुदाहृतम्॥" (१७।४-५) इति श्रीमत्कालोत्तरे श्रूयते। (टिप्पणी चात्रत्या द्रष्टव्या)। तत्सूत्रं च तत्रभवता रामकण्ठेन त्रिंशत्तत्त्वपरतया व्याख्यातमित्यघोरशिवाचार्यः। कथं पुनरस्य पुर्यष्टकत्वम्? भूततन्मात्रबुद्धीन्द्रियकर्मेन्द्रियान्तःकरणसंज्ञैः पञ्चभिर्वर्गैस्तत्कारणेन गुणेन तदापूरकेण प्रधानेन कलादिपञ्चकञ्चुकात्मना वर्गेणारब्धत्वादिति गृहाण। वस्तुतस्तु—"मनो बुद्धि-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


देहयुतः कर्मवशान्नानाविधजन्मभाग् भवति। तत्र पुर्यष्टकयुतान् विशिष्टपुण्यसम्पन्नान् कांश्चिदनुगृह्य भुवनपतित्वं महेश्वरोऽनन्तः प्रयच्छति। सकलोऽपि द्विविधः, पक्वकलुषापक्वकलुषभेदात्। तत्राद्यान् परमेश्वरस्तत्परिपाकपरिपाट्या तदनुगुणशक्तिपातेन[1] मण्डल्याद्यष्टादशोत्तरशतं[2] मन्त्रेश्वरपदं प्रापयति। तत्परिपाकाधिक्यनिरोधेन शक्त्युप-

---

रहङ्कारस्तथा तन्मात्रपञ्चकम्। इति पुर्यष्टकं प्रोक्तम्" (नि० १।५१।५०) इति योगवासिष्ठवचनम्, "तन्मात्रोदयरूपेण मनोऽहंबुद्धिवर्तिना। पुर्यष्टकेन" (श्लो० ४९) इति स्पन्दकारिकावचनं च कालोत्तरसूत्रमनुवर्तत इति यथाश्रुतार्थग्रहणे न कापि हानिः। पुर्यष्टकशब्दस्य सार्थक्यं च तत्रैव दृश्यते।

कुमारोऽपि तत्त्वप्रकाशवचनमेतदेवं व्याख्याति—"पुरि स्थूलशरीरे वर्तमानं यदष्टकं तत् पुर्यष्टकम्।....बुद्ध्यहङ्कारमनांस्यन्तःकरणम्। धियः कर्म व्यापारो विषयनिश्चयो धीकर्म, तत्करणानि तन्निमित्तानि शब्दादीनि च पुर्यष्टकमिति केचित्। तदुक्तम्—"शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः। मनो बुद्धिरहङ्कारः पुर्यष्टकमुदाहृतम्॥" इति। एवं च पूर्वोक्तं कालोत्तरसूत्रमेव सोऽत्र नामनिर्देशं विना प्रमाणयति प्रथमेऽस्मिन् व्याख्याने। अनन्तरं पुनः स वदति—"गुरवस्तु धीकर्म च करणानि च धीकर्मकरणानीनि ब्रुवते। तत्राष्टकत्वं शब्दस्पर्शरूपरसगन्धबुद्धीन्द्रियकर्मेन्द्रियान्तःकरणात्मना विभागाद् भवति। परे कर्मेन्द्रियबुद्धीन्द्रिय-अन्तःकरणचतुष्टय-प्राणादिपञ्चक-तन्मात्रपञ्चक-काम-कर्म-अविद्यात्मनाऽष्टविधं पुर्यष्टकमित्याहुः। तथा चोक्तम्—"कर्मेन्द्रियाणि खलु पञ्च तथापराणि बुद्धीन्द्रियाणि मनआदिचतुष्टयं च। प्राणादिपञ्चकमथो वियदादिकं च कामश्च कर्म च तमः पुनरष्टमी पूः॥" इति। "महाभूतकर्मेन्द्रियज्ञानेन्द्रियप्राणान्तःकरणाविद्याकामकर्मसंघात्मकं पुर्यष्टकम्" (२।७०।५) इति योगवासिष्ठटीकाकारोऽपि वक्ति।

अत्रत्यमघोरशिवाचार्यव्याख्यानमेवानुपूर्व्या सनामनिर्देशं सर्वदर्शनसंग्रहे शैवदर्शनप्रकरणे सायणमाधवेन संगृहीतम् (पृ० ७०)।

योगिनीहृदयदीपिकायां स्वच्छन्दसंग्रहप्रामाण्येन सूक्ष्मं पुर्यष्टकमेवं वर्ण्यते—"चितिश्चित्तं च चैतन्यं चेतनाद्वयकर्म च। जीवः कला च देवेशि सूक्ष्मं पुर्यष्टकं स्मृतम्॥" (पृ० ६८, २८४, ३०२) इति। अत्र "जीवः कला शरीरं च" इति पाठान्तरं दृश्यते। "ईदृशं पुर्यष्टकं कर्मेन्द्रियाणि खलु पञ्च...." इति श्लोके परिगणितस्थूलपुर्यष्टकसमानजातीयम्" (पृ० ३०४) इति योगिनीहृदयसेतुबन्धे भास्करराय:।

"गार्लैण्ड आफ लेटर्स" इत्याख्ये ग्रन्थे (पृ० २५६-२५७) चित्-चितिचित्त-चैतन्य-चेतना-इन्द्रियकर्म-देह-कलाख्यं पुर्यष्टकं व्याख्यातम्। अत्र प्रमाणमन्वेषणीयम्।

१. शक्तिपातस्वरूपं दीक्षाप्रकरणे प्रदर्शयिष्यते।

२. "तत्राष्टौ मण्डलिनः क्रोधाद्यास्तत्समाश्च वीरेशः। श्रीकण्ठः शतरुद्राः शतमित्यष्टादशाऽभ्यधिकम्॥" (त० प्र० १४) इत्यत्र विवृतास्ते। तत्र शतरुद्रा मतङ्गे विद्यापादे (२३।१३-४४) वर्ण्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



संहारेण दीक्षाकरणेन मोक्षप्रदो भवत्याचार्यमूर्तिमास्थाय परमेश्वरः। अपक्वकलुषान् बद्धानणून् भोगभाजो विधत्ते परमेश्वरः कर्मवशात्।

## अन्ये प्रकाराः

बन्धतत्त्वस्थनिवृत्त्यादिभुवनचतुष्टयं योगबलेन प्राप्ता दीक्षया नियोजिता वा क्रमेण मूर्तिकेवलि-योगकेवलि-ज्ञानकेवलि-शक्तिकेवलिनो भवन्तीति चतुर्विधा इमे पशवो मतङ्ग-प्रामाण्येन शतरत्नसंग्रहे (पृ०७७-७८) वर्ण्यन्ते। सप्तविधमोक्षव्याख्यानावसरे लक्षणान्येतेषां वक्ष्यन्ते। अप्रबुद्धः, प्रबुद्धकल्पः, प्रबुद्धः, सप्रबुद्धकल्पः, [1]सुप्रबुद्ध इति पञ्च प्रमातारो विरूपाक्षपञ्चाशिकाव्याख्याने (पृ० १८) प्रदर्श्यन्ते। तत्र संबुद्धस्त्रिशिरोभैरव-प्रामाण्येन तन्त्रालोकेऽपि (१।१३६) व्याख्यातः। सुभगोदयवासनासूचितं (श्लो०४३) प्रमातृ-सप्तकं[2] च शिव-मन्त्रमहेश्वर-मन्त्रेश्वर-मन्त्र-विज्ञानाकल-प्रलयाकल-सकलाख्यम्[3]।

## पशोरवस्थात्रयम्

स्वायम्भुवागमे सुप्रभेदे च शतरत्नसंग्रहधृते पशोरवस्थात्रयं प्रकारान्तरेण वर्ण्यते। तद्यथा—"अथात्माऽविमलो बद्धः पुनर्मुक्तश्च दीक्षया। विज्ञेयः स त्रिधावस्थः केवलः सकलोऽमलः॥"[4] इति। अत्रात्मशब्देन "अत सातत्यगमने" इति धातुना निष्पन्नेन जीवात्मा उच्यते। स आत्मा केवलः, सकलः, अमल इति चावस्थात्रययुक्तो भवति। विमलो न भवतीत्यविमलः, अत्यन्तमलिन इत्यर्थः। अयं तु केवलावस्थः। बद्धः कर्मानुरक्तः कलादिबन्धेन बद्धः। अयं तु सकलावस्थः। पुनश्च दीक्षया कलादि-बन्धान्मुक्तः। अयं चामलः शुद्धावस्थ इति। सुप्रभेदेऽप्युक्तम्—"त्र्यवस्थः पुरुषः प्रोक्तः शुद्धः सकलः केवलः। शुद्धावस्थानमात्मानं शिवरूपमिति स्मृतम्॥" इति।

---

१. स्पन्दकारिकाव्याख्यासु स्पन्दनिर्णय-स्पन्दप्रदीपिका-रामकण्ठवृत्तिषु सुप्रबुद्धादयो भेदा व्याख्यायन्ते।

२. प्रमातृसप्तकं सा० प० (पृ० २९), स्तव० चि० (पृ० २), शि० स्तो० (पृ० १०), प्र० हृ० (पृ० ४०-४६, ५०-६१), शिव० विम० (पृ० ६०-६१), स्पन्द० राम० (पृ० १२७), शि० दृ० (पृ० ३१), त० सा० (पृ० ९२), ई० प्र० वि० (II. २५१), म० म० प० (पृ० ३१), तन्त्रा० (III. ३०५-३५४; VII. ७, ७५) इत्यत्र व्याकृतं द्रष्टव्यम्।

३. साञ्जननिरञ्जनौ त० सा० (पृ० १३५), सर्वदर्शनसंग्रहे (पृ० ६३) च, समला निर्मलाश्च सिद्धादय ई० प्र० वि० वि० (II. ४०५-४०६), चतुर्विधं आत्मा मालिनी० (पृ० ३-६), (तन्त्रा० I. २१६), स्वच्छन्दे (VI. ५८) च विवृताः। प्रमातृतत्त्वविचार ई० प्र० वि० वि० (III. ३०५-३५४। इत्यत्र कृतः, विनायक-गृहीतादयो भेदाश्च क्रियाकालगुणोत्तरे तोतुले च।

४. तत्त्वत्रयनिर्णयषष्ठश्लोकव्याख्यायामघोरशिवो वचनमिदमेवं व्याख्याति—"पशुविषयः सकलाकलप्रभेदो वास्तव एव। तथाहि—बन्धत्रययुक्तः कलादियोगे, विज्ञानादिना कर्मक्षयेऽपि संस्कारवशात् किञ्चित्कालमवस्थितश्चेति द्विविधः सकलः। अकलोऽपि द्विविधः। तत्र प्रलयेन कलादेरुपसंहृतत्वान्मलकर्मयुक्तः प्रलयाकलः। विज्ञानयोगा-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



### १. केवलावस्थः

तेषु—"अचेतनो[1] विभुर्नित्यो गुणहीनोऽक्रियोऽप्रभुः। व्याघातभागशक्तश्च शोध्यो बोध्योऽकलः पशुः ॥" इति केवलस्य लक्षणं वर्ण्यते। सुप्रभेदे च स एवं लक्ष्यते —"अमूर्तः स पशुर्नित्यो निर्गुणो निष्क्रियोऽप्रभुः। मायोदरगतो व्यापी भोगोपायेष्वशक्तितः॥ स केवलस्त्विवति प्रोक्तः स्वापवान् मलबन्धनात्।" इति। "यद्यशुद्धिर्न पुंसोऽस्ति सक्तिर्भोगेषु किंकृता। शुद्धे पुंसि न तद्भोगो जाघटीति विपश्चितः॥" इति स्वायम्भुवसूत्रेण पुंसः समलत्वं सिद्धयति। एवं च भोगासक्तिकारणतयाऽशुद्धभोगघटकतया चानाद्यशुद्धेरावश्यकत्वात् तदधीनमवस्थानिरूपणमात्मनो नानुपपन्नम्। स च केवलावस्थो जीवः—"मायाद्यवनिपर्यन्ते तत्त्वभूतात्मवर्त्मनि। भुङ्क्ते तत्र स्थितान् भोगान् भोगैकरसिकः पुमान्॥" इति नीत्या संसाराटवीं पर्यटति। तत्त्वसंग्रहेऽपि तदेतदुच्यते—"पर्यटति कर्मवशतो भुवनजदेहेष्वयं च सर्वेषु" (श्लो० २५) इति। एष च—"एवं मायाञ्जनस्थोऽणुर्निजदोषतिरस्कृतः। याति तन्मयतां तेषु मायाभोगेषु रञ्जितः॥" इति नीत्या नितान्तं मोहग्रस्तो न कथमपि चेतत इति केवल इत्युच्यते। "कलानां निलयो यस्मात् तेनासौ केवलः स्मृतः" इति च सर्वज्ञानोत्तरे।

### २. सकलावस्थः

"संसारी विषयी भोक्ता क्षेत्री क्षेत्रज्ञ एव च। शरीरी चेति बन्धात्मा सकलः प्रोच्यते बुधैः॥" इति सकलावस्थस्य लक्षणं तत्रैव प्रदर्श्यते। सुप्रभेदे च—"त्रिमलैर्बध्यते चात्मा सकलः परिवारितः। सकलश्चेति बद्धात्मा संसारी विषयी तथा॥ क्षेत्री क्षेत्रज्ञो भोक्ता च पशुर्ज्ञानी तथैव च। भोगी चैव शरीरी च आत्मपर्यायवाचकः॥" इति तदनुगुणमेव लक्षणं वर्ण्यते। एष सकलावस्थ आत्मा बद्धोऽहमिति जानाति, बन्धमोक्षाय चेष्टते च।

### ३. अमलावस्थः

बन्धमोक्षाय चेष्टमानं जोवात्मानम्, "तमः शक्त्यधिकारस्य निवृत्तेस्तत्परिच्युतौ। व्यनक्ति दृक्क्रियानन्त्यं जगद्बन्धुरणोः शिवः॥" (वि० ५।१) इति मृगेन्द्रागमरीत्या शिवोऽनुगृह्णाति। सोऽयमनुग्रहाख्यो व्यापारः शास्त्रेषु शक्तिपातनाम्ना परिचीयते। तदेतदग्रे भविष्यति। शक्तिपातपूतश्च आत्मा—"स देशिकमनुप्राप्य दीक्षाविच्छिन्नबन्धनः। प्रयाति शिवसायुज्यं निर्मलो निरुपप्लवः॥" इत्येवंरीत्या शिवसायुज्यमधिगच्छति। सोऽयममलावस्थो जीवो मुक्त इत्युच्यते। "अशरीरं यदात्मानं पश्यति ज्ञानचक्षुषा। तदा भवति शान्तात्मा सर्वतो विगतस्पृहः॥" इति च जीवन्मुक्तस्य लक्षणम्। एतदप्यग्रे भविष्यति।

---

दिना कर्मक्षयेण केवलमलमात्रयुक्तो विज्ञानकेवलः। मुक्तस्त्वमल एव।" (पृ० ६) इति। अत्राविमल इत्यस्य स्थाने विमल इति पाठः स्वीकृतः। एवं चाघोरशिवो विज्ञानाकलादिभेदप्रतिपादकतयैव स्वायम्भुवग्रन्थमेनं योजयति।

१. अचेतनः पशुरत्र वर्ण्यते। मृगेन्द्रे च—"चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा" (विद्या० २।५) इत्येवं तस्य सर्वदा चैतन्यस्वरूपत्वं समुपवर्णितम्। तेन सचेतनोऽपि जीवो मलावृतः सन्नचेतन इवाभातीति स्थलयोरनयोः संगतिरापादनीया।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## पाशाः

तत्त्वप्रकाशे—"अर्थपञ्चकं पाशः"[१] (श्लो० ५) इत्येकत्र, "पाशाश्चतुर्विधाः" (श्लो० १७) इति चापरत्र श्रूयते। अत्र—"बिन्दोर्महामायात्मनः परममुक्त्यपेक्षया पाशत्वेऽपि तद्योगस्य विद्येश्वरादिपदप्राप्तिहेतुत्वेनापरमुक्तित्वादत्र पाशत्वेनानुपादानमित्यविरोधः" इति तट्टीकाकारोऽघोरशिवस्तदनुवर्ती सायणमाधवश्च समाधानमाहतुः। वस्तुतस्तु—"प्रावृतीशबले कर्म मायाकार्यं चतुर्विधम्। पाशजालं समासेन" (वि० २।७) इति मृगेन्द्रवचने चत्वारः पाशाः सूचिताः, अन्यत्र तु पाशपञ्चकं वर्ण्यते। तदुभयमपि मतं सूचितं द्वाभ्यां वचनाभ्यां तत्त्वप्रकाशकारेण। मृगेन्द्रानुसारिणा च तेन पाशचतुष्टयमेव व्याख्यातम्। शतरत्नसंग्रहादिषु तु पाशपञ्चकं वर्ण्यते। तदिमानि भवन्ति तेषां नामानि—मलः, तिरोधानशक्तिः, महामाया, माया, कर्म चेति। तदेतेषां क्रमशोऽत्र विवरणं प्रस्तूयते।

### १. मलः

"अथानादिर्मलः पुंसां पशुत्वं परिकीर्तितम्। तुषकम्बुकवज्ज्ञेयं मायावापाङ्कुरादिवत्॥" इति स्वायम्भुवसूत्रेण पशुत्वकारणमाणवो मलो निरूप्यते। अनादिश्चासौ मलश्चानादिमलः, मलिनीकरोति दृक्क्रियात्मकं तेजः प्रच्छादयतीति मलः। अयमनादिकालात् प्रवृत्तो मल एव पुरुषाणां पशुत्वं सम्पादयति। यथा हि तुषकम्बुकः शालितण्डुलानामावापस्य उच्छूनतायाः प्रसवाभिमुखीभावस्य अङ्कुरोत्पत्तेर्निमित्तं भवति, एवं मायायाः शिवेच्छावशादावापस्य प्रसवाभिमुखीभावस्य कलादिकार्यादेश्च तन्निमित्तमस्ति। यथा च ताम्रस्य कालिमा रसशक्त्या निवर्तते, तथा मलः शिवशक्त्या। सुप्रभेदे च—[२]"मलोऽज्ञानं तमोऽज्ञत्वं तिरस्कारकरस्तथा। पतिः पशुरविद्येति मलपर्यायवाचकाः॥" इत्येवं तस्य पर्याया निरूप्यन्ते।

तदेतस्य मलस्य स्वरूपमेवं वर्ण्यते मृगेन्द्रे—"तदेकं सर्वभूतानामनादि निबिडं महत्। प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवत्॥" (वि० ७।८) इति। तद्

---

१. पाशसत्त्वे प्रमाणं तस्य चातुर्विध्यं च मृगेन्द्रे विद्यापादे सप्तमे पटले वर्ण्यते। तत्रैव (२।७) चत्वारः पाशास्तेषां निर्वचनानि च सौरभेयागमप्रामाण्येन वृत्तौ प्रदर्शितानि। सर्वदर्शनसंग्रहे (पृ० ७१-७२), मोक्षकारिकायाम् (पृ० ६३-७१), शैवदर्शनबिन्दौ (पृ० १८-२५) मतङ्गे च विद्यापादे पुंपाशेश्वरपटले पाशपदार्थविवेचनं द्रष्टव्यम्।

२. "मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम्" (१।२३) इति मललक्षणं मालिनीविजयोत्तरे। "अज्ञानं बन्धकारणम्" (विद्या० २६।६५) इति मतङ्गेऽपि। "मलोऽज्ञानं पशुत्वं च तिरस्कारकरस्तमः। अविद्या ह्यावृतिर्मूर्च्छा पर्यायास्तस्य वाचकाः॥" इति च किरणे तस्य पर्यायाः श्रूयन्ते। मलपर्यायास्तन्त्रालोकेऽपि (९।८४-८६) द्रष्टव्याः। तन्त्रालोके (९।६२-१४७), शैवदर्शनबिन्दौ (पृ० १९-२०) च त्रिविधो मलो विवेचितो विस्तरेण।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मलात्मकमावरणं सर्वभूतानां [1]चतुर्दशविधानामपि प्राणिनामेकमेव। तद्धि अनादिकालात् प्रवर्तते, न तु मायीयबन्धनवदागन्तुकम्। अत एवैकम्। इदमत्रावधेयम्—न कर्मवत् प्रवाहानादित्वं मलस्य, किन्तु कारणाभावादेवानादित्वं मायावदिति। तच्च निबिडं घनम्, अभेद्यमित्यर्थः। व्यापकानामात्मनामावरकत्वाद् महत्। ननु मलस्यैकत्वे एकमुक्तौ सर्वमुक्तिप्रसङ्ग इत्यत आह—प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवदिति। प्रत्यात्मस्थाः प्रतिपुरुषं वर्तमानाः स्वकालान्तापायिन्यः स्वस्वपरिणामकालापसारिण्यो याः शक्तयस्तासां समूहः सोऽस्यास्तीति तद्वत्। तदुक्तं तत्त्वत्रयनिर्णये—"मलशक्तयो विभिन्नाः प्रत्यात्मं चैव तद्गुणावरिकाः" (श्लो० ११) इति। एवं च सति मलस्यैकत्वेऽपि तदीयावरणशक्तीनामानन्त्यात् तदावार्याणामपि भेदान्नैकमुक्तौ सर्वमुक्तिप्रसङ्गः। स्वायम्भुवागममृगेन्द्रागमप्रदर्शितः सर्वोऽयमर्थस्तत्त्वप्रकाशेऽप्युक्तः—"एको ह्यनेकशक्तिर्दृक्क्रिययोश्छादको मलः पुंसाम्। तुषतण्डुलवज्ज्ञेयस्ताम्राश्रितकालिमावद् वा॥" (श्लो० १८) इति। किरणागमे च—"प्रकाशो व्यक्तिशब्देन मलशब्देन चावृतिः। व्यक्तिर्याऽणोर्मलः प्रोक्तः स्फुटं दीपान्धकारवत्॥" इत्येवं मलस्वरूपं[2] व्याख्यायते। "मलश्चिच्छादकः" इति च।

मलस्य सत्त्वे प्रमाणं तु मोहादिलक्षणकार्यलिङ्गं शेषवदनुमानं द्रष्टव्यम्। तद्यथा—मोहादिकं कार्यं सकारणकं कार्यत्वाद् घटवत्। अत्र च मायादीनां प्रकाशकतया मोहकारणत्वासिद्धेः परिशेषान्मोहकारणतया मलस्य सिद्धिः। मोहादीनि मलकार्याणि सप्तविधानि भवन्ति। तद्यथा मतङ्गपारमेश्वरे—"मोहो मदश्च रागश्च विषादः शोष एव च। वैचित्त्यं चैव हर्षाख्यः सप्तैते सहजा मलाः॥" (वि० ६।१०३) इति। एतेषां स्वरूपं तत्रैव (वि० ८।३१-५१) द्रष्टव्यम्।

"मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम्" (१।२३) इत्येवं मालिनीविजयप्रतिपादितं मलस्वरूपमुपपादयति तन्त्रालोककारः। "बौद्धं च पौरुषेयं[3] च द्विविधं तन्मलं स्मृतम्। तत्र दीक्षादिना याति पौरुषेयं मलं क्षयम्॥ बौद्धमक्षयमेवास्ते तावत्तावत् समुद्रितम्। यावन्न बौद्धमेवास्य सजातीयविलापकम्॥ ज्ञानमभ्युदितं सम्यक् सारेतरविभागकृत्।" इत्येवं चिल्लाचक्रेश्वरीमते च बौद्धं पौरुषेयं चेति द्विविधं मलं प्रदर्श्यते। अभिवनगुप्तस्तन्त्रालोके (१।३६-५१) तमिमं विषयं ज्ञानाज्ञानस्वरूपं पौरुषबौद्धभेदेन द्विधा विभज्य व्याख्याति, "बौद्धाज्ञाननिवृत्तौ तु विकल्पोन्मूलनाद् ध्रुवम्। तदैव मोक्ष इत्युक्तं धात्रा श्रीमन्निशाटने॥" (१।५०) इति च बौद्धाज्ञान-

१. "अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति। मानुषकश्चैकविधः समासतो भौतिकः सर्गः॥" (का० ५३) इत्येवं सांख्यकारिकायां विषयोऽयं वर्ण्यते।

२. मलस्य स्वरूपं मतङ्गे I. २१२, तन्त्रा० I. २५४ च द्रष्टव्यम्। अद्वैतमतेन मलस्वरूपं ने० उ० II. १८५ इत्यत्र, मलस्य द्रव्यत्वनिरासश्च स्प० नि० (पृ० २४) इत्यत्र पश्यतु। मतङ्गविद्यापादीयः षष्ठः पटलश्च पुंपाशेश्वरस्वरूपनिदर्शकोऽत्र द्रष्टव्यः।

३. बौद्धं पौरुषं चाज्ञानम्—तन्त्रा० I. ५५, ७३-८९, ई० प्र० वि० वि०, I, २३, तन्त्रसारे (पृ० २-५) च विवृतम्।

१८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्यैव [1]विकल्पात्मकस्य संसारकारणतां निश्चिनोति । नेदृशो[2] विभागोऽन्यत्र क्वापि दृश्यते, तथापि—"स्वापरामर्शमात्रोऽयमपराधः कियानसौ" इति, "अज्ञानपङ्केऽपि तथा निरस्ते कालेन कैवल्यमुपैति देही" इति, "अविद्याकृतसंकोचगृहीताहंयुताऽस्य या" इति, "एतावतैव भेदोऽस्य यदहम्मानिताऽऽत्मनि" इति, "अज्ञानाद् बध्यते लोकस्ततः सृष्टिश्च संहृतिः" इति, "षोढेत्थमेकैव तव स्वशक्तिर्बाह्यावमर्शात् तु भवेदविद्या" इति, "सा चाऽनृतात्मिकाऽविद्या" इति च मोक्षोपाय-स्वात्मसंबोध-षाड्गुण्यविवेक-संवित्प्रकाश-सर्वाचार-कक्ष्यास्तोत्र-धातुसमोक्षावचनेषु अज्ञान-अविद्या-अहंयुतादिपदैर्विकल्पात्मकमेतदज्ञानमेव बन्धकारणतया सर्वत्र निर्दिश्यते ।

मलोऽज्ञानमविद्येत्यादयः[3] शब्दा यद्यपि पर्यायतया प्रयुज्यन्ते, तथापि वर्तते तेषु तेषु दार्शनिकसम्प्रदायेषु तेषां प्रत्येकं स्वकीयं वैशिष्ट्यम् । तत्र हि ते दर्शनान्तर-विलक्षणं स्वरूपमुन्मीलयन्ति । शिवसूत्रविमर्शिनीधातुसमीक्षाप्रभृतीनामुद्धरणानामवलोकनेन तत् स्पष्टं प्रतीयेत । शैवदर्शनेषु च प्रयुक्तो मलशब्द आणवं मलं निर्दिशति । सोऽयं प्रथमः पाशः ।

## २. तिरोधानशक्तिः

मलस्य शक्तयोऽधुनैव चर्चिताः । न चैताः शक्तयः स्वातन्त्र्येण रुन्धन्ति, अपसरन्ति वा, किन्तु परमेश्वरस्य रोधशक्त्यधीनाः । साऽपि रोधशक्तिरुपचारात् पाश इति मृगेन्द्रसूत्रद्वयेन प्रतिपाद्यते—"तासां माहेश्वरी शक्तिः सर्वानुग्राहिका शिवा । धर्मानुवर्तनादेव पाश इत्युपचर्यते ॥ परिणामयत्येताश्च रोधान्तं [4]कार्कचित्त्विषा । यदोन्मीलनमाधत्ते तदानुग्राहिकोच्यते ॥" (वि० ७।११-१२) इति । माहेश्वरी शैवी शक्तिस्तासां सर्वशक्तीनां धर्मानुवर्तनाद् दृक्क्रियात्मकसंनिरोधकत्वलक्षणस्य धर्मस्यानुसरणादेव पाशत्वेनोपचर्यते । न चात्र मुख्यं पाशत्वम् । यतो हि सा सर्वानुग्राहिका सकलजगदनुग्रहस्वभावा शिवा, ततो न मुख्यं पाशत्वं तस्याः । [5]रोधशक्तेर्हि मलपरिपाकान्तमेव तिरोधानैकस्वभावत्वम्, तदनन्तरमणुवर्गाणामाशयविकासन-हेतुत्वादनुग्राहकत्वं सिद्ध्यति । तथा चेयमेव पतिशक्तिर्यावन्मलपरिपाकमचिद्रूपाणि मल-

१. विकल्पस्वरूपमग्रे प्रदर्शयिष्यते ।

२ "ज्ञानाज्ञानगतं चैतद् द्वित्वं स्वायम्भुवे रुरौ । मतङ्गादौ कृतं श्रीमत्खेटपालादिदैशिकैः ॥" (तन्त्रा० १।४६) इत्यत्र ग्रन्थानामेतेषां बौद्धपौरुष-ज्ञानाज्ञानपरकतया व्याख्यानं प्रौढोक्तिमात्रम् । मतङ्गे (विद्या० १७।६१-६२) बुद्धितत्त्वप्रकरणेऽवश्यं पौरुषमष्टविधं बौद्धं च ज्ञानं वर्ण्यते । तस्याभिनवगुप्तकृतविभागेन नैव साम्यम् ।

३. शिव० विम० (पृ० ५-७, ३२, ३६-३८), स्पन्द० राम० (पृ० ११४), परा० अभि० (पृ० ४१) इत्यादीनि स्थलानि द्रष्टव्यानि ।

४. क एवार्कः कार्कः, तस्य चित्त्विषा चिद्रूपया त्विषा कान्त्येति विग्रहः । कशब्देन मूर्धा सदानुग्रहैकव्यापार ईशान उच्यते, "ईशानो मूर्धा" इति मन्त्रलिङ्गात् । स एव सकलजगदनुग्रहे नित्योद्युक्तत्वाद् अर्केणादित्येनोपमितः ।

५. निरोधशक्तिः (तिरोभावः) शैवदर्शनबिन्दौ (पृ० २०-२१) व्याख्याता ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


कर्म-मायातत्कार्याण्यनुगृह्णाति, चिद्रूपतामात्मनस्तिरोदधाति ; पाकानन्तरमात्मनोऽनुगृह्णाति, पाशं तिरोदधातीति चिदचितां सर्वेषामनुग्रहकारित्वात् सर्वानुग्राहिकेत्यपि सिद्धम् । यदुच्यते—"शिवस्य शक्तिः सर्वेषां सदानुग्रहकारिणी । पाशधर्मनिरोधेन पाशानां पाशहेतुना ॥ निवृत्तियोग्यतां तेषां करोतीति यतस्ततः । पाशधर्मनिरोधाच्च विधत्ते पश्वनुग्रहम् ॥ तादात्मिकेन रोधेन रोधिकेत्युपचर्यते ।" इति । तत्त्वप्रकाशेऽपि—"पाशानुग्राहित्वात् पुरुषतिरोधायिका विभोः शक्तिः । पाशत्वेनाभिमता पाशाश्च चतुर्विधास्त्वेवम् ॥" (श्लो० २०) इति । सोऽयं द्वितीयः पाशः ।

### ३. महामाया

"वागीश्वरी च शुद्धाध्वमूलोपादानकारणम् । नोपादानं विना कार्यं कदाचिदुपलभ्यते ॥" इति विश्वसारोत्तरसूत्रेण महामायाख्यस्तृतीयः पाशो निरूप्यते । शुद्धस्याध्वनो मूलभूतमुपादानकरणं वागीश्वरी महाविद्या । "परा वागीश्वरी विद्या मायाऽविद्याऽपरा स्मृता" इति पौष्करवचने वागीश्वर्याः परात्वं विद्यात्वं च, मायायाश्चापरात्वमविद्यात्वं च वर्ण्यते । महामायाया नादादीनि बहूनि पर्यायनामानि भवन्ति । तद्यथा [1]नादकारिकायाम्—"सिद्धो नादः[2] परः सुमङ्गला मालिनी महामाया । समनाऽनाहतबिन्दुरघोषा वाग् ब्रह्मकुण्डलिनीतत्त्वम् ॥ विद्याख्यं चेत्युक्तस्तैस्तैः शब्दैस्तदागमेष्वित्थम् ।" इति । अनेन महामायायाः शुद्धाध्वोपादानत्वरूपं लक्षणं प्रदर्शितम् । न चात्र समवेतशक्तेरेवोपादानत्वेन सिद्धिरस्त्विति वाच्यम्, तस्या उपादानकारणत्वेऽचेतनत्वापत्त्या चेतनशिवसमवायायोगात् । तदुक्तं पौष्करे—"शिवे कर्तरि तादात्म्यान्नेयं कुण्डलिनी स्मृता । उपादानत्वतो हेतोः कुलाले मृत्तिका यथा ॥" इति । एवं च मायाप्रकृत्योर्मोहकत्वेन प्रबुद्धपुरुषकायकरणरूपशुद्धाध्वकारणत्वायोगेन परिशेषात् तदनुकारिकारणतया महामायासिद्धिरिति ।

---

१. एतन्नादकारिकावचनं मुद्रिते ग्रन्थे १५ तमकारिकावृत्तावन्ते दृश्यते, सार्धत्रिशतिकालोत्तरवृत्तौ (पृ० ११) तु मूल एव वर्तते । तत्र हि सम्पूर्णा नादकारिका समुद्धृता ।

२. "बुद्ध्यस्मितामनोभ्यो विद्यातो रागतः कलायाश्च । मायापुंशक्तिभ्यो नादोऽन्यो दृश्यते ध्वनिभ्योऽपि ॥" (श्लो० १), "रूपरसगन्धशब्दाद्यर्था येनावमृश्यतां नीताः । सोऽन्तःसंजल्पात्मा नादः सिद्धो न विषयभावेन ॥" (श्लो० १०) इत्येवं नादस्वरूपं प्रदर्श्यते नादकारिकायाम् । कालोत्तरायां च—"नादाख्यं यत्परं ज्योतिः सर्वभूतेष्ववस्थितम्" (१।५) इति प्रदर्श्य—"स्थूलं शब्द इति प्रोक्तं सूक्ष्मं चिन्तामयं भवेत् । चिन्तया रहितं यत् तु तत्परं परिकीर्तितम् ॥" (१।८) इत्येवं तस्य त्रयो भेदा वर्ण्यन्ते । ई० प्र० वि० वि०, II. १९२ इत्यत्राभिनवगुप्तः परा-पश्यन्ती-मध्यमापरत्वेन वचनमिदं व्याख्याति । "ततो यदुक्तं भगवता श्रीमत्कालपादसंहितायां स्थूलं शब्द इति प्रोक्तमिति, तन्मध्यमाभिप्रायेण मन्तव्यम्" इत्येवमुपसंहरति स प्रकरणमेतत् । अत एव—"वाग्ब्रह्मणि निष्णातश्चिद्ब्रह्माप्नोति" (नां० का० १९) इत्युच्यते । "शब्दो नादात्मकस्तस्मात् प्रत्ययेनोपबृंहितः । मन्त्रबोधस्वरूपत्वमभिन्नो बोधयत्यपि ॥" इति कालपरावचनमप्यत्र स्मर्तव्यम् ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



"मायोपरि महामाया" इति परात्रिंशिकाव्याख्योद्धृते कुब्जिकामते, तत्त्वसंग्रह-वृत्ति-मृगेन्द्रवृत्तिविद्यापादोद्धृते रौरवागमे (I. १५) च स्मर्यते। कुब्जिकामते सा महामाया त्रिकोणानन्दरूपिणी वर्णिता, "शुद्धविद्यैव त्रिकोणा महागुहा" इति परा० अभि० (पृ० ५३-५४), महामाया, शुद्धविद्या, वागीश्वरी, मातृका चेति नामान्तराणि—इति तन्त्रा० (८।३३७-३३८), शुद्धविद्यैव महामायेतिपदेन श्रीरौरवादिगुरुभिरुपदिष्टेति चाभिनवगुप्त ईश्वरप्रत्यभिज्ञाविमर्शिन्यां (३।१।६) वदति। मतङ्गेऽपि विद्यापादीये सप्तमे पटले शुद्धविद्यारूपेणैव सा व्याख्याता। अनुपदमेवोक्ते पौष्करवचने च सा कुण्डलिनीपदेन स्मर्यते।

रत्नत्रये तु सा बिन्दुपदेन व्याख्याता। तथाहि—"जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयते। स बिन्दुः[1] परनादाख्यो नादबिन्द्वर्णकारणम् ॥" (श्लो० २२) इत्यत्र नादबिन्द्वर्णकारणं परनादाख्यं बिन्दुं प्रतिपाद्य, "शब्दतत्त्वमघोषा वाग् ब्रह्म-कुण्डलिनी ध्रुवम्। विद्या शक्तिः परा नादो महामायेति देशिकैः ॥ बिन्दुरेवं समाख्यातो व्योमानाहतमित्यपि। चतस्रो वृत्तयस्तस्य याभिर्व्याप्तास्त्रिधाणवः ॥" (श्लो० ७०-७१) इत्येवं तस्य पर्यायाः सूच्यन्ते, परापश्यन्त्यादयश्च चतस्रस्तस्यैव वृत्तय इति निर्णीयते। एवं च वागीश्वरी, महामाया, नादः, बिन्दुरित्यादिभिः शब्दैरत्र कुण्डलिनी शक्तिरेव बोध्यत इति निश्चप्रचम्। तदत्र महामाया कुण्डलिनी विशेषेण विविच्यते।

**कुण्डलिनी महामाया**—"इष्यतां कुण्डलिन्याख्यं शुद्धमेतद् द्विजोत्तमाः" इति पौष्करवचने महामाया कुण्डलिनीशब्देन प्रोक्ता। शतरत्नसंग्रहे[2] स्वतन्त्रतन्त्र-सर्वज्ञानो-त्तरादिप्रामाण्येन सेयं महामायाख्या कुण्डलिनी शक्तिरेवं व्याख्याता—समवायिशक्तेरधो वर्तमाना मायाकर्मानुसारिणी कुण्डलिनी शक्तिः शिवस्य परिग्रहशक्तिरित्युदीर्यते। तदुक्तं रत्नत्रये—"मन्त्रयोनिर्महामाया या परिग्रहवर्तिनी" (श्लो० १६६) इति। "अत्र कुण्डलिनीशब्दवाच्या तु भुजङ्गकुटिलाकारेण नादात्मना स्वकार्येण प्रतिपुरुषं भेदेना-वस्थिता, न तु स्वरूपेण प्रतिपुरुषमवस्थितेत्यर्थः" इति सर्वज्ञानोत्तरवृत्तिकारः। तस्या महामायायाः सकाशान्नादबिन्द्वादिकं कार्यं निष्पद्यते। तदुक्तं विश्वसारोत्तरसूत्रे—"याऽथ

१. अघोरशिवः श्लोकमेनमेवं व्याख्याति—"तत्र नादो नामाभिधेयबुद्धिहेतुर्बिन्दोः प्रथमप्रसररूपः सूक्ष्मो नादश्चिन्तया रहितत्वेन श्रीमत्कालोत्तरादावुक्तः। बिन्दुश्च तत्कार्यो मयूराण्डरसबिन्दुवदव्यपदेश्यः परामर्शज्ञानरूपोऽपरबिन्दुस्तत्रैव सूक्ष्मत्वे-नोक्तः। अर्णश्च वर्ण आकाशवायुप्रभवः श्रोत्रग्राह्यः स्थूलशब्दः" (पृ० ११)। एव चात्र स्थूलं शब्द इत्येवं कालोत्तरपठितस्त्रिविधोऽपि नादो बिन्दुकारणक इति प्रतिपाद्यते। बिन्दुनादविवेचनं वैयाकरणमतनिरासपूर्वकं शैवदर्शनबिन्दौ (पृ० २१-२५) द्रष्टव्यम्।

२. शतरत्नसंग्रहे (पृ० ४१-४४) स्वतन्त्रतन्त्र-सर्वज्ञानोत्तर-रत्नत्रय-त्रयोदशशतिका-कालोत्तर-मृगेन्द्र-मतङ्ग-सिद्धान्तदीपिका-सुप्रभेद-पौष्करप्रामाण्येन विषयोऽयं प्रति-पादितः। मतङ्गे विद्यापादे-सप्तमे विद्यातत्त्वनिरूपके पटले प्राधान्येन शुद्धविद्यैव निरूप्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


कुण्डलिनी शक्तिर्मायाकर्मानुसारिणी। नादबिन्द्वादिकं कार्यं तस्या इति जगत्स्थितिः ॥" इति।

अत्रायमभिप्रायः—शिवेन समवायिशक्त्या क्षुब्धाया महामायायाः कुण्डलिन्याः सकाशान्नादाभिधानं तत्त्वं प्रथममुत्पद्यते। इदमेव शिवाधारतया शिवतत्त्वमित्यपि वदन्ति। ततो बिन्दुसंज्ञकं तत्त्वमुत्पद्यते। इदं च तत्त्वं शब्दाधारतया शक्तितत्त्वम्। ततः शक्तितत्त्वात् सादाख्यं तत्त्वम्। सादाख्यादीश्वराख्यं तत्त्वम्। ईशाख्याद् विद्याख्यं तत्त्वमिति क्रमेण शुद्धानि पञ्चतत्त्वानि जायन्ते। तत्र विद्यातत्त्वे विद्यातत्त्वाधिपतिश्च, [1]भृगुण्यादयः सप्त विद्याराज्ञ्यश्च, तदधीनाः सप्तकोटिमहामन्त्राश्च, वाचकशब्दा व्योमव्याप्यक्षरादयश्च, वैखर्यादयः, कामिकाद्यष्टाविंशतितन्त्राणि च वर्तन्ते। ईश्वरतत्त्वेऽनन्तादयोऽष्टौ विद्येशाः, तदधिष्ठात्र्यस्त्वष्टौ वामादिशक्तयः, तद्विलासिन्यः शक्तयोऽष्टौ भानुमत्यादयः, उच्छुष्मादयः पञ्च रुद्राः, सिद्धान्तशास्त्रैः प्रपूजिता नन्द्याद्यष्टौ गणेश्वराः, इन्द्रादयो लोकपालास्तेषामायुधानि च, शिवासनभूता धर्मादयोऽष्टौ च स्थिताः। सदाशिवतत्त्वे तदधिकारावस्थः सदाशिवः, प्रणवाद्या दश अणवः, पञ्च ब्रह्माणि, षडङ्गानि च, अक्षरबिन्दुस्थूलध्वनिरूपो नादश्च वर्तते। बिन्दुतत्त्वे भुवनरूपो निवृत्तिमदादिसंज्ञः सद्योजातादिसंज्ञः सकलनिष्कलाख्यः शिवः, अक्षरबिन्दुहेतुस्वरूपः सूक्ष्मनादश्च वर्तते। नादतत्त्वे तु ध्वनिपतिरिन्धिका वा दीपिका वा रेचिका वा निवृत्त्यादिभुवनपतिसंज्ञः शिवो वर्तते। चिच्छक्तौ शक्तिमद्वरिष्ठः परमेश्वरः सकलजगत्परमकारणं कुण्डलिनी च वागीशांपतयश्च। तदूर्ध्वं केवलं शिव एवेति।

इदं नादतत्त्वमेव परमकारणं नित्यम्। तदेव महामायेति केचिदाचार्या वदन्ति। तेषां पक्षे चत्वार्येव कार्याणि शुद्धतत्त्वानि। तद्यथा—"शुद्धानि पञ्चतत्त्वान्याद्यं तेषु स्मरन्ति शिवतत्त्वम्। शक्तिसदाशिवतत्त्वे ईश्वरविद्याख्यतत्त्वे च ॥" (त० प्र० २१) इति। अस्य व्याख्या—तेषु मध्याच्छिवतत्त्वं [2]बिन्द्वात्मकमाद्यं प्रधानमुपादानं स्मरन्ति पूर्वाचार्याः, परमोपादानत्वेनैव चास्य मायावन्नित्यत्वं सिद्धम्। अतश्चान्यानि चत्वारि तत्त्वानि तत्कार्याणीति भावः। श्रीमत्पौष्करे तु नादाभिधानं शिवतत्त्वमपि कार्यमेव, किन्तु तत्र शक्तितत्त्वान्तर्भावेण चत्वार्येव कार्याणि शुद्धानीत्युक्तम्। तद्यथा—"वृत्तिस्तत्त्वात्मिका चास्य चतुर्थी संव्यवस्थिता। शिवतत्त्वं सदेशाख्यमीशं विद्याह्वयं तथा ॥ शुद्धान्येतानि तत्त्वानि रुद्राणूनां महात्मनाम्।" इति। सर्वज्ञानोत्तरे तु शक्त्यभिधानं बिन्दुतत्त्वमेव परमकारणमित्युक्तम्—"अतोर्ध्वं बैन्दवं तत्त्वं विमलं सर्वतोमुखम्। परमं सर्वतत्त्वानामनन्तज्योतिरूपकम् ॥" इति।

**तस्या वाग्रूपाश्चतस्रो वृत्तयः**—[3]वाग्रूपा वैखर्यादयश्चतस्रस्तस्या महा-

---

१. अत्र मृगेन्द्रे विद्यापादे (१३।१५६-१९८). मतङ्गे च विद्यापादे (७।१६-३४) विषयोऽयं व्याख्यातो द्रष्टव्यः।

२. प्रकरणानुरोधान्नादात्मकमिति पाठेन भाव्यम्।

३. संवित्स्तोत्रानुसारं वक्ति वागिति निरुक्तिमाश्रयन् महेश्वरानन्दः परावागात्मनि संविदि वाक्शब्दव्यवहारं विधत्ते। तद्यथा—"तस्याश्च वक्तीति कर्तृव्युपत्त्या वाक्त्वम्, न पुनरुच्यत इति वर्णानुगुण्यात्" (पृ० १२४) इति। शिवदृष्टिकारेणापि

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मायाया वृत्तयः कार्याणि। "तस्याश्चतस्रो वाग्रूपा वृत्तयो वैखर्यादयः। वैखरी मध्यमा चान्या पश्यन्ती सूक्ष्मसंज्ञिता ॥" इति विश्वसारोत्तरसूत्रमत्र प्रमाणम्। एका वृत्तिर्नाम्ना वैखरीत्युच्यते। अन्या वृत्तिर्नाम्ना मध्यमा। अपरा नाम्ना पश्यन्ती। इतरा च सूक्ष्मसंज्ञिता। तत्र सूक्ष्मा वृत्तिर्नादः, पश्यन्ती वृत्तिर्बिन्दुः, मध्यमा वृत्ति-

---

कालपादा-खेटपालकृतस्वायम्भुवटीका-व्याख्यानिगुरुकृतमतङ्गटीकाप्रमाणैः नादाख्यस्य शब्दस्य शिवात्मकता वर्णिता, भट्टोत्पलेन च सोद्धरणं व्याख्याता (पृ० १०२-१०४)। तन्त्रालोककारेण (१६।२१०) तत् तथैव स्मृतम्। स्पन्दप्रदीपिकाधृतकालपरायामपि—"शब्दो नादात्मकः" (पृ० १०९) इति, "पराक्षरतरोर्धातुर्नानाशक्तेर्विवर्तगाः। शक्तयो वर्णदेहेषु वक्त्राद्वर्णत्वमागताः॥" इति च पराया वाच एव सर्वोऽपि वाग्व्यवहारः प्रसृत इति व्यक्तीक्रियते। तत्रैवोद्धृतैः (पृ०८९)—"निष्कम्पबोधसामान्यरूपः" (जया० २०।२३३-२३९) इत्यादिभिः श्लोकैस्तस्या अभिव्यक्तिक्रमश्च प्रदर्श्यते। "संविन्मूलाद् वर्णरूपाज्ज्ञानस्तम्भात् सरस्वती। प्रागघोषा सनादाऽनु पुण्यतीर्था प्रवर्तते॥" (पृ० ८७) इत्यादिकं संवित्प्रकाशवचनम्, "घोषिणी जातनिर्घोषा नित्यमेव प्रवर्तते। तयोरपि च घोषिण्या निर्घोषैव गरीयसी॥ गौरिव प्रसवत्यर्थान् इयमुत्तमशालिनी। सततं स्पन्दते ह्येषा शाश्वतं ब्रह्मवादिनी॥ दिव्यादिव्यप्रभावेण भारतीगौः शुचिस्मिते। एतयोरन्तरं पश्य सूक्ष्मयोः स्पन्दमानयोः॥" (आश्व० २१।२१-२३) इति महाभारतवचनम्, "वागेवास्याः" (पृ० ८९) इति संवित्प्रकाशवचनं च वाचो महिमानं वर्णयन्ति। संविदेव प्राणद्वारेण वाग्रूपतां धत्ते इति "स्थानेषु विवृते वायौ" (पृ० ११२) इत्यादिकान् श्लोकानुद्धरता स्पन्दप्रदीपिकाकारेण सुष्ठु प्रदर्शितम्। "तस्यां चान्तःसंजल्परूपायां (परायां वाचि) द्वावपि शब्दार्थौ समं स्फुरतः" (पृ० ११३) इति वदन्, योगिनाथवचनानि प्रमाणयंश्च स तमिमं विषयं स्थूणानिखननन्यायेन पुनः पोषयति। एवं च वाचः शब्दब्रह्मस्वरूपत्वमत्र प्रतिपाद्यते।

"खेचरी गोचरी चाथ दिक्चरी भूचरीभिदा। परादिभारतीसंस्थं शक्तिचक्रं चतुर्विधम्॥ आनन्देच्छाज्ञक्रियाख्यं खेचर्याद्यं चतुष्टयम्॥" (पृ० ९१) इति स्पन्दप्रदीपिकाधृते वचने परादिभारतीसंस्थं शक्तिचक्रं वर्ण्यते। वाचः परापश्यन्त्यादयश्चत्वारो भेदा मूले व्याख्यायन्ते। परिमलधृतपादुकोदये तु—"विमर्शो बिन्दुनादौ च स्फोटः शब्दश्च वाक्क्रमः" (पृ० ८६) इति पञ्च भेदास्तस्या व्यावर्णिताः। साम्बपञ्चाशिकाव्याख्याधृतभर्गशिखायां (पृ० ३४) च भानोर्भर्गस्यैव शब्दब्रह्मस्वरूपत्वं वर्ण्यते। वाक्प्रपञ्चः—स्तव० क्षेम० (पृ० २), वि० प० (श्लो० ९), स्प० नि० (पृ० ६६-६७), प्र० हृ० (पृ० ६८, ८७), स्पन्द० राम० (पृ० १४९-१५४), शि० दृ० (पृ० ३६-९३), अजिता० (I. २-४, १५), ई० प्र० वि० (I. २५०-२७८, २८२), ई० प्र० वि० वि० (I. १५, १०५; II. १६९, १८७-१९८, २५८, २६७), तन्त्रा० (II. २२३-२३०) इत्यत्रापि द्रष्टव्यः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



रक्षरम्, वैखरी[1] वृत्तिर्मातृकेत्युच्यते। अनेन शब्दसृष्टिरपि बिन्दूपादानेत्युक्तं भवति। अत्रायं सृष्टिक्रमः—शिवेच्छया प्रथमं क्षुब्धाया महामायायाः सकाशान्नाद उत्पद्यते। नादाद् बिन्दुः। बिन्दोरक्षरम्। अक्षरान्मातृकेति[2]। तदुक्तं मृगेन्द्रे—"शक्तेर्नादोऽभवद् बिन्दुरक्षरं मातृका ततः" (क्रि० १।२) इति। "बिन्दुः क्षुब्धस्तदिच्छातः शब्दराशिरभूत् तदा" इति च पराख्ये।

आसां चतसृणामपि वृत्तीनामाश्रयभूता निवृत्त्यादयः कलाः पञ्च च बिन्दोरेव कार्याणि। तदुक्तं रत्नत्रये—"सैषा चतुर्विधा वृत्तिर्निवृत्त्यादिकलाश्रयात्। पञ्चधा भिद्यते भूयः कलास्ता बिन्दुवृत्तयः॥" (श्लो० ५५) इति।

इयं च महामाया शब्दवस्तूभयात्मिका भवति, शब्दात्मकानां वर्णपदमन्त्राणां वस्त्वात्मकानां कलातत्त्वभुवनानां चोत्पादनात्।

अत्र शब्दब्रह्मवादिन आत्मन एव नादादिक्रमेणावस्थानमिति वदन्ति। तद युक्तम्, अविकारिणस्तस्य नादाद्याकारेण परिणामानुपपत्तेः। नापि तच्छक्तेः, तस्या अपि परिणामायोगात्। द्वयोरपि विकारित्वाऽभ्युपगमेऽचेतनत्वप्रसङ्गात्। तस्मात् शब्दोपादानत्वं बिन्दोरेवाभ्युपगन्तव्यम्। तदुक्तं नादकारिकासु—"अविकार्यत्रात्मोक्तस्तच्छक्तिश्चाप्यतो न योग्यौ तौ। बहुधा स्थातुं यद्वा चैतन्यविनाकृतौ विकारित्वात्॥" (श्लो० १६) इति।

---

१. "नादः सूक्ष्मो भवेद् बिन्दुः पश्यन्ती मध्यमाऽक्षरम्। मातृका वैखरी ज्ञेया नादाद्यास्तु शिवादयः॥" (पृ० ५३) इत्येवं शतरत्नधृते सिद्धान्तरहस्यसारे विषयोऽयं वर्ण्यते।

२ मातृका-मालिनी-भूतलिपिस्वरूपविचारोऽस्माभिर्नि० षो० उ० (पृ० ६२-६९) इत्यत्र कृतः। "तेन ता मातरः प्रोक्ताः" इति विष्णुयामलवचने तेषां मातृत्वं व्याख्यायते। "न तैर्विना भवेच्छब्दो नार्थो नापि चितेः स्थितिः" इति सर्ववीरवचने मातृकावर्णानां माहात्म्यातिशयो वर्ण्यते। "अष्टाष्टकविभेदेन मातृका या निरूपिता। तदेव कुलचक्रं तु तेन व्याप्तमिदं जगत्॥" इति त्रिकरत्नकुलवचनेन मातृकाख्येन कुलचक्रेण सर्वं जगद् व्याप्तमिति ज्ञायते। "मातृकाज्ञानभेदे विस्तरतो निरूपितमेतत्" (परा० अभि०, पृ० १९२) इत्यभिनवगुप्तो भणति। शाम्भवोपायप्रदर्शके हि कुलकौलदर्शनेऽनुत्तरादकारादेव विश्वस्य जगतो निष्पत्तिरिति सिद्धान्तः स्वीकृतः। तन्त्रालोकस्य तृतीयाह्निके, परात्रिंशिकाविवृतौ, परापञ्चाशिकायाम्, सौभाग्यसुधोदयस्य प्रथमे प्रपञ्चे, शिवसूत्रविमर्शिन्याम्, संकेतपद्धति-स्वच्छन्दसंग्रहादिषु चायं विषयः प्रतिपाद्यते। अभिनवगुप्तधृतो मातृकाज्ञानभेदस्तु साम्प्रतं नोपलभ्यते, न च दृश्यते त्रिकरत्नकुलमपि मातृकासूचीषु। मातृका-मालिनी-शब्दराशि-मातृसद्भावनिरूपणम्—त०सा० (पृ० १३४), मालिनी० (पृ० १४,४४), स्वच्छन्द०(VI ११२-११३), तन्त्रा० (VIII. ५९-६८), ने० उ० (II. २६९) इत्येतेषु स्थलेष्वपि दृश्यते। शतरत्नधृते (पृ० ४५) स्वायम्भुवागमवचने नववर्गात्मिका मातृकाऽङ्गीकृता। मन्त्राणां मातृभूता सेति च तन्त्रसद्भावे। तन्त्रालोके (XII. १८१) मातृका-मालिनीस्थानीयो भैरवसद्भावो वर्ण्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



एवमत्र वागीश्वर्या महामायायाः कुण्डलिनी-नाद-बिन्दुप्रभृतिभिः शब्दैस्तेषु तेषु शास्त्रेषु व्याकृतायाः स्वरूपमुन्मीलितम्। सर्वे इमे शब्दाः स्वस्वरूपोन्मीलनाय विस्तरमपेक्षन्ते। तन्नाधुना संभवति। सोऽयं तृतीयः पाशो महामायाख्यः।

## ४. माया

सिद्धान्तशैवदर्शनेषु कर्तुरीश्वरस्याभिन्ननिमित्तोपादानत्वं नाङ्गीक्रियते। तत्र हि शुद्धेऽध्वनि शिवस्य निमित्तत्वम्, बिन्दोरुपादानत्वम्; अशुद्धेऽध्वनि चानन्तेशस्य निमित्तत्वम्, मायायाश्चोपादानत्वमङ्गीक्रियते। न च माया-काल-कर्मादीनामेव जगन्निमितत्वं नेश्वरस्येति वाच्यम्, तेषामचेतनानां चेतनप्रेरणं विना कार्यकारकत्वानुपपत्त्या तत्प्रेरकचेतनावश्यम्भावे सत्यस्मदादीनां निरुद्धदृक्क्रियतया तत्प्रेरकत्वाभावेन सर्वज्ञस्य सर्वकर्तुरीश्वरस्यैव तत्सम्भवेन सकलप्रपञ्चं प्रति तस्यैव निमित्तकारणत्वौचित्यात्।[1]

शतरत्नसंग्रहे स्वायम्भुवसूत्रधृतं मायालक्षणमेवं वर्ण्यते—"मायातत्त्वं जगद्बीजमविनाश्यशिवात्मकम्। विभ्वेकमकलं सूक्ष्ममनाद्यव्ययमीश्वरम्॥" इति। [2]मात्यस्यां प्रलये सर्वं जगत्, मयति अन्नाज्जगदिति वा माया। तदुक्तं पौष्करे—"मयत्यस्माज्जगत् सर्वं तेन माया प्रकीर्तिता" इति। "तद्भावभाविनो भावाः सर्वे मायात्मकाः पशोः" इति च स्वायम्भुवे। मायारूपं तत्त्वं मायातत्त्वम्। इदमेव तत्त्वं [3]ग्रन्थ्यादिनामभिर्बहुभिर्गीयते। एतच्च तत्त्वं जगद्बीजं जगतः सर्वस्य कलादेर्बीजमुपादानकारणम्। अविनाशि नित्यम्। जगत्संहारे यद्युपादानकारणस्य मायाख्यस्यापि विनाशः स्यात्, तत्पुनः सर्गादौ कस्मादुपादानाज्जगदुत्पद्येत। अतो नास्या अनित्यत्वम्। अशिवात्मकम् अशुद्धम्, शिवात्मकं चेतनं न भवतीत्यशिवात्मकम्। अचेतनमिति यावत्। अचेतनस्यैव तत्कार्यस्य कलादेरुपलम्भात्। अचेतनतत्कार्योपलम्भेऽपि तत्कारणस्य चेतनत्वाभ्युपगमे कारणानियमलक्षणः सकलानुमानोच्छेदः सर्वव्यवहारलोपोऽपि दोषः स्यात्। विभु व्यापि। पुरुषस्य भोगाय तिर्यगूर्ध्वाधोमध्यस्थितस्रोतोभिः सर्वतोमुखतया सर्वकार्योत्पादकत्वात्। एवं पक्षतुण्डादिभेदानामपि भोगाधिष्ठानत्ववत् कलादिकार्यभेदानामपि भोगाधिष्ठानतया भेदरहितम्, भिन्नत्वेऽनेकत्वे सत्यचेतनस्य घटपटादिवदुत्पत्तिमत्त्वप्रसङ्गात्। इदं

---

१. अनुमानेन मायायाः सिद्धिर्मृगेन्द्रे (विद्या० ९।३-२१) द्रष्टव्या।

२. "मात्यस्यां शक्त्यात्मना प्रलये सर्वं जगत् सृष्टौ व्यक्तिं यातीति माया। यथोक्तं श्रीमत्सौरभेये—"शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये। विकृतौ व्यक्तिमायान्ति" (२।७) इति मृगेन्द्रविद्यापादवृत्तौ। मतङ्गे विद्यापादाष्टमपटले माया तद्भुवनानि तदधिपतयश्च विस्तरेण व्याख्यातानि। वि० प० (श्लो० ४१-४२), ई० प्र० वि० (I. २८१), तन्त्रा० (III. ११), शै० बि० (पृ० २०) इति च द्रष्टव्यम्।

३. मृगेन्द्रे (विद्या० ९।१, १०।१) माया ग्रन्थिपदेनोक्ता। मायायां गहनाभिधानो रुद्रस्तिष्ठतीति सा गहनपदेनाप्युच्यते (परमार्थ० २, ११)। "शक्तिसंमूर्छितात्मानो लुप्तव्यापारवृत्तयः। यत्राणवः प्रलीयन्ते तदिदं गहनाह्वयम्॥" (विद्या० ८।९३) इति च मतङ्गे।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तु नोत्पत्तिमन्न कारणजन्यम्, परमकारणत्वात्। नहि परमकारणानि बहूनि भवन्ति। तदुक्तं मृगेन्द्रे—"यदनेकमचित् तत्तु दृष्टमुत्पत्तिधर्मकम्। न तदुत्पत्तिमत् तस्मादेकमभ्युपगम्यताम् ॥" (९।७) इति।

ननु जगदुत्पत्तौ [1]परपरिकल्पितपरमाण्वादिवदुपादानकारणबहुलत्वमस्तु, बहुभ्योऽपि तन्तुभ्यः पटस्यैकस्योत्पत्तिदृष्टेः। तद्वज्जगत्सर्वमनेकस्मात् कारणादुत्पद्यताम्, किं ग्रन्थ्यात्मकपरमकारणकल्पनयेति चेन्न, यदनेकतन्त्वात्मकं कारणं पटस्योक्तम्, तदनेकमप्येकस्माद् दुकूलकार्पासादिद्रव्यादुत्पन्नत्वादेकम्। यथा चैकस्माद् दुकूलकार्पासादिद्रव्यादनेकाकारपटाद्युत्पत्तिः, एवं परमकारणात् सर्गस्थितिलयाधारात् सर्गादौ मायातत्त्वाज्जगदुत्पत्तिरिति न कश्चिद् दोषः।

अकलं कलारहितम्। कला नाम पुरादिसन्निवेशानेकरुद्रभोग्यत्वादयो विशेषाः, तद्रहितम्। नात्र क्वचित् पुराणि नित्यानि दृश्यन्ते। नापि तत्सन्निवेशाः। नापि भोग्यत्वम्। सूक्ष्मं न स्थूलम्। अव्यक्तबुद्ध्यादिवत् स्थूलं न भवतीत्यर्थः। सूक्ष्मतारतम्यविश्रान्तिभूमित्वादिदमेव सूक्ष्मम्। तदुक्तं पौष्करे—"तन्मात्राणि पृथिव्यादेः सूक्ष्माण्येभ्यस्त्वहङ्कृतिः। तस्याः सूक्ष्मतरा बुद्धिस्तस्याः प्रकृतिरेव च॥ तस्याः कलादिवर्गश्च माया सूक्ष्मतरा ततः। यत्र सौक्ष्म्यपराकाष्ठा सा मायेत्यभिधीयते ॥" इति।

अनादि, परमकारणत्वात्। यच्चानादि न तत् सर्वात्मना परिणमते। किन्तु शक्त्यात्मनावस्थितायास्तस्या एकदेशतो मायात्मकादुत्पद्यते व्यक्तिमासादयति। येषां सर्वात्मना जगद्बीजं परिणमते, तेषां तदनित्यमित्यनादिपदेन एकदेशपरिणामसिद्धिः। एवं सत्यस्मिन् सिद्धान्ते कार्यत्वं न पटकुटीवद् वृत्तितया, पटदशायां कुटीकृत्यस्यानुपपत्तेः। नापि सांख्यवद् दधिक्षीरन्यायेन परिणामितया, तथात्वे क्षीरनाशवत् सर्वात्मना उपादाननाशप्रसङ्गात्। अत एव न बौद्धवद् बीजान्तराङ्कुरन्यायः, तत्रापि सर्वात्मना बीजनाशात्। नापि मायावादिवत् शुक्तिरजतन्यायेन विवर्ततया, कार्यस्याऽसत्यत्वप्रसङ्गात्। तस्मादस्मिन् मते घृतकीटन्यायेन एकदेशपरिणामितयैव कार्यत्वं सिद्ध्यति। तदुच्यते—"बिन्दु-माया-प्रधानानां विकृतिर्घृतकीटवत्" इति। अत्र तनुकरणादीनि कार्याणि संहृतौ बिन्द्वाद्युपादानेषु शक्त्यात्मनाऽवस्थाय सृष्टौ बन्धात्मकप्रयोजनाय पुनर्व्यक्तीभवन्ति। तदुक्तं मृगेन्द्रे—"तदाधाराणि कार्याणि शक्तिरूपाणि संहृतौ। विकृतौ व्यक्तिरूपाणि व्याप्रियन्तेऽर्थसिद्धये ॥" (९।१३) इति।

अव्ययं न तस्या विकारशक्तयो व्ययं विनाशं गच्छन्तीत्यव्ययं मायातत्त्वम्, शक्तिव्ययरहितमित्यर्थः। अव्ययपदेनासत्कार्यवादिभ्योऽस्यात्र विशेषः सूचितः। इत्थं सर्वविकाराणामुपादानतयाऽऽपूरकत्वेन ईश्वरवत् पुरुषार्थसाधकत्वादीश्वरत्वमपि मायातत्त्वस्य सिद्ध्यति।

---

१. मायैव जगदुपादानं न तु परमाण्वादय इति मृगेन्द्रे विद्यापादे नवमदशमपटलयोः। भोगकारिका (श्लो० ११४-१२०) चात्र द्रष्टव्या।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



अस्य एकत्वेऽप्यनेकाकारकार्योत्पादकत्वं सहकारिसापेक्षत्वं च मृगेन्द्रसूत्रेण प्रतिपाद्यते। तथाहि—"तदेकमशिवं बीजं जगतश्चित्रशक्तिमत्। सहकार्यधिकारान्तसंरोधि व्याप्यनश्वरम् ॥" (वि० ९।२) इति। अस्यायमर्थः—तद् मायातत्त्वम् एकम्। अशिवम् अशुद्धं मोहकत्वात्। जगतो बीजम्। चित्रशक्तिमत् चित्रा विचित्राः शक्तयो यस्य तत् तथोक्तम्। तथा चास्य एकत्वेऽपि तच्छक्तीनामनेकत्वाद् विचित्रकार्यजनकत्वमविरुद्धमित्यर्थः। किञ्च, सहकार्यधिकारान्तसंरोधि। सहकारिणां कर्मणामधिकारान्तं यावत् संरुणद्धि अणून् बध्नाति तच्छीलम्। कर्मणामभावे मायातत्त्वस्याप्रवृत्तिरिति तदभिप्रायः। अनेन कर्म सहकारीत्युक्तम्, कर्माभावे ग्रन्थिततत्त्वस्याप्रवृत्तेः। व्यापि अनश्वरम्। पदद्वयमेतदनुपदमेव व्याख्यातम्।

[1]तत्त्वप्रकाशकारः—"माया च वस्तुरूपा मूलं विश्वस्य नित्या सा" (श्लो० १९) इत्येवं संक्षेपेण मायास्वरूपमुक्त्वा—"शक्तय इहास्य करणं मायोपादानमिष्यते सूक्ष्मा। एका नित्या व्यापिन्यनादिनिधना शिवासक्ता ॥ साधारणी नराणां कारणमपि चेयमखिलभुवनानाम्। निखिलजनकर्मखचिता स्वभावतो मोहसंजननी ॥ कर्माण्यवेक्ष्य शम्भुर्मायां विक्षोभ्य शक्तिभिः स्वाभिः। प्रतिपुरुषं भोगार्थं वपूंषि करणानि चाधत्ते ॥" (श्लो० ३८-४०) इत्येवं मायोपादानकमखिलं जगदिति प्रपञ्चयति। माया विमोहिनीति किरणे रुद्रयामलसाराख्ये विज्ञानभैरवे (श्लो० ९३) च वर्ण्यते। "विकृतेः परतो माया नित्या विम्वी ह्यचेतना चैका। सर्गस्थितिविलयानामाधारः कारणं च सा जगतः ॥" (श्लो० २६) इति च मायालक्षणं तत्त्वसंग्रहे। "परमं यत् स्वातन्त्र्यं दुर्घटसम्पादनं महेशस्य। देवी मायाशक्तिः स्वात्मावरणं शिवस्यैतत् ॥" (प० सा०, श्लो० १५) इति चाद्वैतवादिनां मायास्वरूपम्। "तेन मायाभिधा शक्तिः सहैव कुरुते द्वयम्। वेद्यान् सदसतः सर्वान् कांश्चिद् वेद्यांश्च वेदकान् ॥ वेद्यीकरणमर्थानां मलो मायाख्य उच्यते।" इति च मायाकार्यं नरेश्वरविवेके। "एकैव मायिका माया स्थिताऽष्टाष्टकभेदिनी" इति मायावैभवागमे, "स्वातन्त्र्यशक्तिर्मेऽसि त्वमतिदुर्घटकारिणी। मायेति कीर्त्यसे देवि भर्तुर्मे वैश्वरूपदा ॥" इति शचीमते, "मायात्वमेतदेव स्यान्नाशस्तत्त्वप्रदर्शनात्। नहि विज्ञातरज्ज्वात्मा सर्पादीन् मन्यते पुनः ॥" इति च संवित्प्रकाशे मायास्वरूपं वर्ण्यते।

शुद्धेऽध्वनि शिवस्य निमित्तत्वम्, बिन्दोरुपादानत्वम्; अशुद्धेऽध्वनि चानन्तेशस्य निमित्तत्वम्, मायायाश्चोपादानत्वमिति प्रतिपादितपूर्वम्। अत्र प्रमाणं च—"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" इति किरणसूत्रम्। अनन्तः अनन्तादिको वर्गः, असिते अशुद्धमायात्मके, प्रभुः सृष्ट्यादिकर्ता। अत्र चानन्तादीनामीश्वरप्रेरणयैव कर्तृत्वमभिमतम्। तदुक्तं कैलाशसंहितायाम्—"मायाविक्षोभकोऽनन्तो महेश्वरसमन्वयात्" इति। अत्र शिवप्रेरितस्यानन्तस्य कलादिप्रधानपर्यन्ततत्त्वानामेव कर्तृत्वम्। अनन्तप्रेरितस्य श्रीकण्ठस्यैव गुणादिक्षित्यन्ततत्त्वानां कर्तृत्वम्। भौतिकसृष्टेस्तु श्रीकण्ठप्रेरितस्य ब्रह्मणः कर्तृत्वमिति विवेकः। अत्र पौष्कर-मतङ्ग-स्वायम्भुववचनानि च प्रमाणतयोपन्यस्तानि शतरत्नसंग्रहे (पृ० ५१) द्रष्टव्यानि।

---

१. कुमारदेवकृता तात्पर्यप्रकाशिकाख्या टीका विशेषजिज्ञासुभिर्नूनमवलोकनीया।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


[1]तत्रानन्तक्षोभ्यस्य मायातत्त्वस्य कार्याण्यशुद्धरूपाणि[2] मृगेन्द्रसूत्रेणानेन प्रदर्शितानि—"ग्रन्थिजन्यं कलाकालरागविद्यानृमातरः। गुणधीगर्वचित्ताक्षमात्राभूतान्यनुक्रमात् ॥" (विद्या०१०।१) इति। अत्रायमुत्पत्तिक्रमः—मायातत्त्वात् प्रथमतः कलाशब्दस्यार्थभूतयोः कलानियतिनाम्नोस्तत्त्वयोः, कालतत्त्वस्य, नृशब्देनोक्तस्य पुंसश्चेति चतुर्णां तत्त्वानां साक्षादभिव्यक्तिः। कलातत्त्वात्तु विद्यारागतत्त्वयोर्मातृशब्दार्थभूतस्य प्रधानतत्त्वस्य चेति त्रयाणां तत्त्वानामभिव्यक्तिः। श्रीकण्ठक्षोभितात् प्रधानतत्त्वाद्[3] गुणशब्दार्थानां सत्त्वरजस्तमसामभिव्यक्तिः। तेभ्यो धीशब्दार्थस्य बुद्धितत्त्वस्याभिव्यक्तिः। बुद्धितत्त्वाच्च गर्वशब्दवाच्यस्य तैजस-वैकारिक-भूतादिरूपेण त्रिविधस्याहङ्कारतत्त्वस्याभिव्यक्तिः। तैजसादहङ्काराच्चित्त[4]शब्दवाच्यस्य मनसः, अक्षशब्दवाच्यानां ज्ञानेन्द्रियाणां च समुद्भवः। वैकारिकादहङ्कारात् कर्मेन्द्रियाणामुत्पत्तिः। भूतादिशब्दवाच्यादहङ्कारान्मायाशब्दोद्दिष्टानां तन्मात्राणां तत्त्वानामुद्भवः। [5]तन्मात्रेभ्यः सकाशाद् भूतानां पञ्चतत्त्वानामुत्पत्तिः। अस्मादनुक्रमादेतानि त्रिंशत्तत्त्वान्यनन्तेशादिभिर्ग्रन्थितत्त्वतः साक्षात् परम्परया चाभिव्यञ्जितानीति।

एवं ग्रन्थिगहनादिपदाभिधानो मायाख्यश्चतुर्थः पाशो विवेचितः।

## ५. कर्म

मायापाशलक्षणानन्तरं कर्मरूपः पञ्चमः पाशो विश्वसारोत्तरसूत्रेण निरूप्यते—"धर्माधर्मात्मकं कर्म तच्च त्रिविधमर्थतः। जात्यायुर्भोगदं येन नामिश्रं पच्यते क्वचित् ॥" इति। धर्माधर्मात्मकं कर्म पुनर्जातिप्रदमायुःप्रदं भोगप्रदं चेति त्रिविधं भवति। "सति मूले तद्विपाको जात्यायुर्भोगाः" (२।१३) इति हि योगसूत्रेऽपि निरूप्यते। अत्र जातिर्देवत्वादिः। आयुः शतवर्षेष्वपि जीवनादिः। भोगः सुखदुःखानुभवः। एते जात्यादयोऽप्युत्तमादिक्रमेण त्रिविधा भवन्तीति मतङ्गे धर्माधर्मनिर्णयपटले—"जातिभेदाद् रूपभेदाच्छौर्यविज्ञानभेदतः" (२६।६) इत्यादिना प्रतिपाद्यते। तत्र जातिवैचित्र्यं तावत् प्रसिद्धम्। इन्द्रियवैचित्र्यम्—यथा परावृत्तजिह्वावत्त्वं गजादीनाम्, चक्षुःश्रवत्वं भुजङ्गानाम्, अनालोकालोकितमुलूकानाम्। विषयवैचित्र्यं

---

१. "क्षोभितोऽनन्तनाथेन ग्रन्थिर्मायात्मको यदा। तदा स्वेन विकारेण तनोति विपुलं जगत् ॥" (विद्या० ९।२) इत्यादिना मतङ्गेऽयमर्थः प्रतिपाद्यते।

२. कार्याण्येतानि शुद्धाशुद्धान्यशुद्धानि च भवन्तीति विभावनीयम्। सर्वाण्येतानि मतङ्गे विद्यापादे ९-२३ पटलेषु सविस्तरं वर्णितानि भुवनभुवनाधिपतिनामावलीपुरस्सरम्। तत्त्वाध्वविवेचनावसरे सर्वमेतत् विस्तारयिष्यते। शुद्धाशुद्धरूपा द्विविधा सृष्टिश्च शैवदर्शनबिन्दौ (पृ० १८-१९) प्रदर्श्यते।

३. अत्रत्यः क्रमः सांख्यकारिकावर्णितक्रमात् क्वचन भिद्यते।

४. चित्तपदव्युत्पत्तिर्म० म० प० (पृ० २३) इत्यत्र द्रष्टव्या। परिमलें (पृ० ६१) अहङ्कारो बुद्धिर्मन इति क्रमो दृश्यते। अत्रागमसंवादोऽपेक्षितः।

५. स्थूलसूक्ष्माणां भूतानां विवरणमत्रत्ययोर्व्याख्ययोर्द्रष्टव्यम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



च यथा—'जलधरपतितजलकणोपजीवित्वं चातकानाम्, मयूराणामवकराहारत्वं कुक्कुटादीनां च, कमलकिञ्जल्करसास्वादनं मधुकरसारसानामित्याद्यूहनीयम्'[1]।

युगपत्[2] सेवाकृष्यादिप्रवृत्तयोर्द्वयोः पुरुषयोरेकस्य फलसिद्धेरितरस्यादर्शनाच्च तत्र धर्माधर्मात्मकस्य स्वोपार्जितस्य कर्मणः कारणत्वमङ्गीक्रियते। तदुक्तं पौष्करे—"उभयोः कृषिसाम्येऽपि कश्चिद् धान्यानि गच्छति। न किञ्चिदपरस्तस्य कर्म कारणकं द्विजाः॥" इति।

मृगेन्द्रसूत्रानुसारं (वि० ८।३-४) दृष्टमदृष्टं चेति द्विविधं कर्म भवति। क्रियावसानिकं कर्म दृष्टम्, तस्य संक्षये फलप्रवणं कर्म चादृष्टमिति च मतङ्गे (वि० ७।६१-६२)। तदेतददृष्टं कर्म देहेन्द्रियभुवनादेर्जनकं धारकं भोग्यमध्यात्मादित्रिसाधनं च भवति। तत्राध्यात्मशब्देनान्तःकरणसन्निकर्षेण आत्मानमधिकृत्य यद् वर्तते तन्मतिरित्युच्यते। आदिग्रहणाद् वाक्क्रिये च गृह्येते। एवं च मनोवाक्कायक्रियासाधनं यस्य तद् यथा क्रमम् इष्टदेवतानुध्यान-नमस्कार-स्तोत्रपाठ-यजनादिरूपं धर्मात्मकं कर्म। परस्वहरणेच्छा-तत्प्रवाद-तदुपघातादयो यथासंख्यं मनोवाक्कायक्रियासाधनं चाधर्मात्मकं कर्म। "जायेते पुण्यपापौ" इत्यादिनाऽचिन्त्यवचनेन तदेतन्मनोवाक्कायात्मकं त्रिविधं कर्म वर्ण्यते।

अथवा "अध्यात्मादित्रिसाधनम्" (विद्या० ८।४) इति मृगेन्द्रवचनस्य अध्यात्म-भूत-दैवानि त्रीणि हेतुतया अधिकृत्य अध्यात्ममधिभूतमधिदैवतं च यत् सुखदुःखमुत्पद्यते, तस्य त्रिविधस्यापि साधनम्। कर्मवशाद्धि चेतःप्रसादाद्युद्वेगादि वा आध्यात्मिकं सुखदुःखमुत्पद्यते। आधिभौतिकं चाङ्गनासंभोगगजसिंहाद्यभिभवरूपम्। आधिदैविकं चाभिमतानभिमतवर्षातपादिकृतम्। एतच्च व्याख्यानं शतरत्नोद्धृतं सुप्रभेदागममनुसरतीति तत् तत एव द्रष्टव्यम् (पृ० ५६)।

तत् कर्म सत्यानृतयोनित्वाद् धर्माधर्मस्वरूपं भवति। एतच्च स्वापे विपाकं गच्छति, सृष्टावुपयोगमेति, संहारकाले च मायायां तिष्ठति। सिद्धान्तसारावल्यामप्येतत् प्रतिपादितम्। अधर्मभेदाश्च शिवधर्मे निरूपिताः। "पुंसां सितानि कर्माणि कुर्वतामसितानि च। सिद्ध्यतः स्वर्गनिरयावत्र क्षिप्रं परापरौ॥" इति रौरववार्त्तिकवचने सितासिताभ्यां कर्मभ्यां स्वर्गनिरयप्राप्तिर्निरुक्ता। "कर्मतश्च शरीराणि विविधानि शरीरिणाम्" इति स्वायम्भुवे च। न चैतदभुक्तं क्षीयते। तदुक्तं पौष्करे—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति। दीक्षाप्रायश्चित्तादिना तु तस्य [3]क्षयो भवत्येव। एतदेव मायादिकालाग्निपर्यन्तस्य तत्त्वजातस्य प्रवर्तकमिति मृगेन्द्रे विद्यापादे (८।६) द्रष्टव्यम्।

---

१. मृगेन्द्रवृत्तौ (वि० ८।२) च विषयोऽयं द्रष्टव्यः।

२. एकस्य फलसिद्धिरपरस्यासिद्धिरित्यत्र सर्वात्मनाऽदृष्टमेव कारणमुत प्रवर्तते तत्र दृष्टमपि साधकं बाधकं वा कारणमिति परीक्ष्यैव साम्प्रतिका गृह्णीयुरमुं सिद्धान्तम्।

३. यथोक्तं किरणागमे—"अनेकभविकं कर्म दग्धं बीजमिवाणुभिः। भविष्यदपि संरुद्धं येनेदं तद्धि भोगतः॥" इति। अस्यार्थः—कर्म प्रारब्धम्, आगामि, संचितमिति त्रिविधं भवति। तेष्वनेकजन्मसंचितं हि कर्म दीक्षापुरश्चरणादिना साधितैर्मन्त्रैर्दग्धं सत्

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


"कर्मानादि प्रोक्तं धर्माधर्मात्मकं विचित्रं च" (श्लो० १९) इत्येवं तत्त्वप्रकाशकारः कर्मणः स्वरूपं भेदं च प्रतिपादयति। अत्र तात्पर्यदीपिकाकारः कुमारो धर्माधर्मलक्षणं व्यवस्थाप्य प्रतिवादिसंमतलक्षणं समालोच्य च [1]नित्यनैमित्तिककाम्यात्मना धर्मस्य त्रैविध्यं वर्णयामास, "एवंलक्षणो धर्मो द्विविधः[2]—इष्टः, पूर्तश्चेति। तत्रेष्टो वैदिकः, पूर्तस्तान्त्रिक इति" इति च प्रतिपादयामास। ततः स मतान्तरोपन्यासपुरस्सरमधर्मस्यापि त्रैविध्यमाह। न चैतत् सर्वं स्वमनःकल्पितमपि तु सिद्धान्तहृदयाख्ये ग्रन्थे सर्वमेतत् प्रोक्तमिति ततः स विस्तरेण तत्रत्यानि वचनानि समुदाजहार। लौकिक-वैदिक-आध्यात्मिक-अतिमार्ग-शैवाख्यानि कर्माणि मृगेन्द्रे क्रियापादे (८।७८) वर्णितानि, व्याख्यातानि च तानि तद्वृत्तौ नारायणकण्ठेन।

"यथानादिर्मलस्तस्य कर्माप्येवमनादिकम्। यद्यनादि न संसिद्धं वैचित्र्यं केन हेतुना ॥" इति किरणवचने, "ईशविद्याद्यपेक्षित्वात् सहकारी तदुच्यते" इति मृगेन्द्रवचने (विद्या० ८।३) च तस्य नित्यत्वं सहकारिकारणत्वं च वर्ण्यते। अन्यजन्मसमुद्भुवा कर्मणा ज्ञानिनोऽपि बाध्यन्त इति गमशास्त्रे प्रतिपाद्यते। "योगो नान्यः क्रिया

---

फलदानाय तथैवासमर्थं भवति, यथा किल वह्निना दग्धं बीजमङ्कुरदानाय न क्षमते। सुप्रभेदागमे चैवमेव प्रतिपाद्यते। मन्त्रोपहृतशक्तिकं हि कर्म फलदानाय न कल्पत इत्यर्थः। भविष्यद् आगामि कर्मापि मन्त्रशक्त्या प्रतिबद्धं भवति। येन कर्मणा पुनरिदं शरीरं निष्पादितं तत् प्रारब्धकर्म भोगत उपशमं याति। तथा च प्रारब्धकर्मव्यतिरिक्तकर्मणामेव दीक्षादिना निरोध इति मन्तव्यम्। एतच्च प्रारब्धकर्म त्रिविधम्—इच्छाप्रारब्धम्, अनिच्छाप्रारब्धम्, परेच्छाप्रारब्धं चेति। एतेषां लक्षणानि पञ्चदश्यादिग्रन्थप्रामाण्येन प्रदर्शितानि श० र० सं० (पृ० ९१-९२) इत्यत्र द्रष्टव्यानि।

कर्मविचारो मतङ्गे (विद्या० ७।६१-६९, ८। ९५-१०६, चर्या० ५।४-१०), पर० योग० (पृ० १२०, १२७, १३५, १६५-१८५), तन्त्रा० (VIII. १४४), शि० वि० (पृ० २०) इत्यत्र, मलत्रयप्रकरणेषु च वर्तते। तत्त्वप्रकाशस्थौ ७१-७२ श्लोकौ चात्र द्रष्टव्यौ। नियतिसापेक्षं कर्म नियामकमिति च मृगेन्द्रे (विद्या० १०।१५-१७)। कार्ममलविचारश्च तन्त्रा० (९।८८-८९) इत्यत्र द्रष्टव्यः।

१. नित्यनैमित्तिककाम्यकर्मणां सर्वत्र शास्त्रेषु वर्तते महान् विस्तरः। शान्तिकपौष्टिकादीनि मारणमोहनादीनि विविधानि षट्कर्माणि तत्साधकाः प्रयोगाश्च प्रायो बाहुल्येन दृश्यन्ते। शान्त्यादिकर्मणां द्वादशात्मता मालिनीविजये (२०।४२) प्रदर्शिता। तन्त्रसार-तन्त्रालोक-नेत्रतन्त्र-स्वच्छन्दतन्त्रादिषु त्रिविधानां षड्विधानां च कर्मणां प्रपञ्चो द्रष्टव्यः। "पूजा होमो बलिर्भिक्षा चरुश्चातिथिपूजनम्। षट्कर्माणि तु कार्याणि शिवाचार्येण नो परैः ॥ व्याख्यानं श्रवणं चैव प्रदानं च प्रतिग्रहः। दीक्षा च स्थापनं चेति षट्कर्माणि सदा गुरोः ॥" (प्र० सा० २।१३४-१३५) इत्येवं च षट्कर्मणां विभागो दृश्यते।

२. मतङ्गे (विद्या० १७।२९-४८) यमनियमात्मको द्विविधो धर्मः प्रतिपाद्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


नान्या", "उन्मेषः क्रिया मता", "वृषो धर्मो ज्ञानक्रियात्मकः" इत्यादिषु गमशास्त्र-तत्त्वगर्भ-मयसंग्रहवचनेषु क्रियापदं कर्मपरकमेव व्याख्यातम् ।

"महान्ति पातकान्याहुर्यदाज्ञावशतः सुराः । पावनानि नमस्तस्मै स्वच्छन्दाय हराय ते ॥" इति भट्टनायकस्तोत्रे, "रागोऽप्यस्तु जगन्नाथ मम त्वय्येव यः स्थिरः । लोभायापि नमस्तस्मै त्वल्लाभालम्बनाय मे ॥" (स्त० चि० ४७) इति कर्णिकाकार-वचने च परमेश्वरसमर्पितानां कर्मणां पावनत्वं वर्ण्यते । स्पन्दशास्त्रे नवम्यां कारिकायां निजा सहजाऽनादिर्याऽशुद्धिरविद्याऽविवेकमूला भोगाभिलाषरूपा, तया संकुचितशक्तेर्जीव-स्य क्षोभो विकारोऽशुद्धिजनितो देहाहम्प्रत्ययरूपो विवेकेनात्मवलस्पर्शाद् यदा प्रलीयते, तदा स्वस्वरूपे स्थितिर्भवतीति प्रतिपादितम् । अत्र स्पन्दप्रदीपिकाकार उत्पलवैष्णवः षड्धातुसमीक्षां नारदसंग्रहं संवित्प्रकाशं च प्रमाणयति । यतो मोहमूलानि कर्माणि संसृतेः कारणानि, अतः कर्मणां क्षयात्तन्निर्मुक्तो जीवः स्वस्थः शान्ततमश्च भवति । यथा सुभर्जितं बीजं भूयो न प्ररोहति, तथैव विकल्पमुक्तचित्तस्य कर्मापि संसृतिकारणं न भवति । "कर्मेदं त्वत्कृतमपि त्वन्मयं येन माधव" इति संवित्प्रकाशवचनं चात्रत्यं सत्यं भगवद्गीतावर्णितं सर्वकर्मसमर्पणं स्मारयति ।

"पतन्ति जन्तवो येन कर्मणा नरके ध्रुवम् । उत्पतन्ति च तेनैव त्रिकालज्ञा भवन्ति च ॥" इति कालिकामतमुद्धरन्तो निर्विकल्पाः कौलिकास्तु कर्मविचारेऽस्मिन् महद्वैशसमुत्पादयन्ति । यत्तु—"सर्वज्ञानोत्तरादौ च भाषते स्म महेश्वरः ।....तस्मान्मु-ख्यतया स्कन्द लोकधर्मान्न चाचरेत्" (तन्त्रा० ४।२४८,२५१) इति वचनव्याख्यान-प्रसङ्गे—"ये तु वर्णाश्रमाचाराः प्रायश्चित्ताश्च लौकिकाः । संबन्धान् देशधर्मांश्च प्रसिद्धान्न विचारयेत् ॥....न मुख्यवृत्त्या वै स्कन्द लोकधर्मान् समाचरेत् ।" इति सर्वज्ञानोत्तरवचनम्, तल्लौकिकवैदिकाध्यात्मिकातिमार्गकर्मापेक्षया शैवकर्मणां प्रशंसापरमवगन्तव्यम् । अत्र च—"यद्यप्यस्ति त्रिकालज्ञस्त्रैलोक्याकर्षणक्षमः । तथापि लौकिकाचारं मनसाऽपि न लङ्घयेत् ॥" (शक्ति० त०, II. ४६।४२-४३) इति वचनं स्मरणपदवीमानेतव्यम् ।

एवं क्रमेणोक्तानि मल-तिरोधानशक्ति-महामाया-माया-कर्माणि पञ्चापि पुरुष-बन्धकतयाऽस्मिन् शास्त्रे पाशपञ्चकत्वेन प्रसिद्धानि । यदुच्यते—"मलः कर्म महामाया मायोत्थमखिलं जगत् । तिरोधानकरी शक्तिः पाशत्वेनार्थपञ्चकम् ॥" इति । अत्र महामायामनुपादाय पाशचतुष्टयं मृगेन्द्रागमादिषु वर्ण्यते । तिरोधानशक्तेरपि पाशत्व-मौपचारिकमेव । अत एव मल-कर्म-मायारूपस्त्रिविध एव पाशः स्वायम्भुवागमे प्रदर्शितः—"मायेयमाणवं कर्म चैतावदणुबन्धनम्" इति । अथात्ममलमायाख्येति रौरवस्वाय-म्भुववचनेऽपि पाशत्रयमेव निदर्श्यते । प्रयोगमञ्जरीकारेणापि त्रय एव पाशाः स्वीकृताः । मलपदेनाणवं मलं संगृह्य कर्ममायापदाभ्यां सह मलपदं च संयोज्य आणव-मायीय-कार्माख्यास्त्रयो मलाः प्रतिपाद्यन्ते [1]त्रिकादिदर्शनेषु । अत्रापि केवलाणवमलयुक्तो

1. इच्छादिशक्तित्रयं मलरूपेण परिणमत इति प्र० हृ० (पृ० ६०) इत्यत्र वर्ण्यते । मलत्रयं तल्लक्षणादिकं च शिव० विम० (पृ० ५-७, ३६-३८), ई० प्र० वि० वि०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



विज्ञानाकलः, आणवकार्ममलसंवलितः प्रलयाकलः, त्रिविधमलसंयुक्तश्च सकल इति त्रिविधः पशुः प्रतिपादित एव। शाक्तदर्शनेष्वपि मलत्रयमेवैतत् प्रतिपाद्यते। [1]पाशशब्दस्तु तत्रान्यार्थे प्रयुज्यते।

पाशपञ्चकच्छेदाय त्रिविधमलापाकरणाय वाऽवबोधरूपं परं ज्ञानमेव परमं शरणमिति साम्प्रतं तदेव विविच्यते।

## अवबोधरूप परं ज्ञानम्

एवमियता प्रबन्धेन शास्त्राख्यमपरं ज्ञानम्, शिवशासनेषु समुपदिष्टं पतिपशुपाशाख्यं[2] पदार्थत्रयं च सप्रपञ्चं विवेचितम्। तदेतत्—"ज्ञानं वस्तुपरिच्छेदो वस्तु च त्रिविधं स्मृतम्" इति वायव्यवचने संक्षिप्य प्रोक्तम्। अस्मिन् प्रसङ्गे—"पाशज्ञानान्न मुक्तिः स्यात् पशुज्ञानात् तथैव च। सर्वतश्च यतो मुक्तिः पतिज्ञानेन गम्यते॥" इति स्वायम्भुववचने ज्ञानस्य त्रैविध्यं शिवज्ञानस्यैव च मुक्तिप्रदत्वं निर्दिश्यते। "शास्त्रजालानि नादान्तं पाशज्ञानं वरानने। पशुज्ञानमिति प्रोक्तं ह्ययं ब्रह्माभिमानतः॥ शिववस्तुपरं तस्मान्मन्त्रातीतो निरञ्जनः। सर्वज्ञः सर्वगः शान्तः सर्वात्मा सर्वतोमुखः॥" इति चिन्त्यवचने च तेषां स्वरूपं वर्ण्यते। तदत्राधुना बोधरूपं[3] परं ज्ञानमेव शिवज्ञानमिति व्याख्यायते।

(II. ३०५-३०६, ३२५-३२७; III. ३१३-३३२), म० म० प० (पृ० ३१), ई० प्र० वि० (II. २४८-२४९), ने० उ० (II. १८१-१८३), तन्त्रा० (८।२९१-२९२) इत्यादिषु स्थलेष्ववलोकनीयम्।

१. "घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी। कुलं जातिश्च शीलं चेत्यष्टौ पाशाः प्रकीर्तिताः॥" (१३।९०) इति कुलार्णवश्लोको बहुषु शाक्ततन्त्रग्रन्थेषु समुद्ध्रियते। "ग्रहान् ग्रहानिवाष्टौ द्राक् त्यजेद् गह्वरदर्शितान्" (तन्त्रा० १५।५९६) इति चाभिनवगुप्तः।

२. षट्पदार्थमयं ज्ञानमिति तु मतङ्गादीनां पक्षः (विद्या० २६।६५)। तत्र विद्यापादे पञ्चमे शक्तिपदार्थः, २६ पटले च भोगोपायौ सम्यग् विवृताः। अत्रापि च यथायथं विवेचिता विवेचयिष्यन्ते च।

३. चित् संविद् ज्ञानं बोधश्चेति पर्यायाः (स्प० प्र०, पृ० ८५)। शब्दानामेतेषां सम्यगर्थविगमाय प्र० हृ० (पृ० ३४-४०, ४७-५८, ७१-७६, ८०-८४, ९९-१००), शि० वि० (पृ० २-३, १५, २३, ३६, ६७), पर० योग० (पृ० १२३, १३१, १३६, १५६, १६७), वि० भै० वि० (पृ० १२२), शि० दृ० वि० (पृ० २०,२९, २१०), तन्त्र० अभि० (पृ० २, ६), मा० वि० (पृ० २५), ई० प्र० वि० (I. ३४८-३५६), ई० प्र० वि० वि० (I. ९६, ११९, १३६-१४५, २०७-२७०, २८५; II. ५६, ६०, ७४, १५३, २७२, २८९, ३१२, ३३७, ३६५, ४२१; III. २४७), स्वच्छन्द० (VI. ११२-११३), तन्त्रा० (I. २१६, २५५; III. ६, ११; VII. १३-६३, १८०, VIII. १९५), स्प० प्र० (पृ० १११-११५) इत्येतानि स्थलानि दर्शनार्हाणि।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



बोधो हि—"इति बुद्धिप्रकाशोऽयं भावप्रत्ययलक्षणः[1]। बोध इत्युच्यते बोधव्यक्तिभूमितया पशोः ॥" (वि० ११।८) इति मृगेन्द्रागमपद्धत्या बुद्धौ प्रकाशते। अन्तःकरणवृत्तौ बोधशब्द औपचारिकः प्रयुज्यते। अत एव—"अन्तःकरणवृत्तिर्या बोधाख्या सा महेश्वरम्। न प्रकाशयितुं शक्ता पाशत्वात्" (श्लो० १०६) इति मोक्षकारिकायामुच्यते। वस्तुतस्तु बोधरूपं परं ज्ञानं संवित्स्वरूपम्, बोध एव मूलमध्याग्रकल्पितः षट्त्रिंशत्तत्त्वसंरम्भतयोल्लसतीति त्रिशिरःशासनोक्तेः (तन्त्रा० ८।१२), "नहि बोधो विचित्रार्थनिर्माणेऽन्यमपेक्षते। संकल्पादेव यो रूपसहस्राणि सृजत्यजः ॥" इति षाड्गुण्यविवेकोक्तेश्च। बोधपर्यायः संविच्छब्दो नि० उ० उपोद्घाते (पृ० ८४-८५) व्याख्यातो द्रष्टव्यः, अत्रापि च विवेचयिष्यते।

तदिदं बोधरूपं परं ज्ञानम्—"विश्वस्यानेकरूपस्य ज्ञानमेकं शिवात्मकम्। व्यापकं विमलं शान्तं भुक्तिमुक्तीति येन तत् ॥ एकैव वस्तुतः शैवी या शक्तिर्निर्मला परा। अविनाभाविनी शम्भोः शुचेरूष्णमिव प्रभोः ॥ तयात्मशिवयोः सन्धिः शिवबोधपरापरा।" इति कालोत्तरसूत्रैः, "शिवस्य समवेता या शक्तिर्ज्ञानात्मिकाऽमला। सैव ज्ञानमिति प्रोक्त शास्त्रं तदनुमापकम् ॥" इति पौष्करवचनेन च व्याख्यातम्। तदिदं शाम्भवं ज्ञानमध्यक्षादिविलक्षणम्, अपरोक्षप्रकाशम्, सर्वार्थविषयं चेति मृगेन्द्रवचनेऽस्मिन् प्रदर्श्यते—"नाध्यक्षं नापि तल्लैङ्गं न शाब्दमपि शाङ्करम्। ज्ञानमाभाति विमलं सर्वदा सर्ववस्तुषु ॥" (वि० ५।१६) इति।

बहिरन्तश्च तत्तद्रूपतया ज्ञानमेव प्रकाशते। ज्ञानादृतेऽर्थस्य कापि सत्ता नास्ति, अतो जगदिदं ज्ञानरूपम्। नहि ज्ञानादृते केनचिद् भावा विषयीकृताः। एतस्मादवसीयते यज्ज्ञानमेव ज्ञेयरूपतामापद्यत इति कालिकाक्रमे, देविकाक्रमे, आत्मसप्ततौ च वर्ण्यते। "तथा ज्ञानसमाविष्टं सर्वं तद्रूपमिष्यताम्" इति संवित्प्रकाशे। तदभेदो विश्वस्य इति कात्यः। चिद्घनमात्मपूर्णं विश्वमिति च सारस्वतसूत्रसंग्रहे। येन प्रबुद्धभावेन स्वयं विषयान् भुञ्जानः पाशवं भावं न याति, स ज्ञानचन्द्र इत्युच्यत इति चन्द्रज्ञाने। स्वभावादेकरूपापि ज्ञानस्य शक्तिः संकल्पैर्नानात्वं प्रतिपद्यते। ज्ञानं नभ इवानन्तम्, ज्ञेयं च विश्ववदल्पम्। यथाऽऽकाशस्यान्येन केनचित् प्रतिबन्धो न भवति, तद्वदस्य व्यापिनो ज्ञानस्याप्रतिबद्धता मन्तव्या। स्फीतबोधानां विषमेष्वपि विषयेषु स्वातन्त्र्यम्,

---

१. "न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः। लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः॥" (श्लो० ५२) इत्येवं सांख्यकारिकायां द्विविधः सर्गः सूच्यते। सांख्यसंमतः सोऽयं भावप्रत्ययलक्षणः सर्गः—"भावा बुद्धिगणाः" (१०।२४) इत्यादिना "इति बुद्धिप्रकाशोऽयम्" (११।८) इत्यन्तेन ग्रन्थेन मृगेन्द्रे विद्यापादे, मतङ्गे विद्यापादे बुद्धितत्त्वनिरूपके सप्तदशे पटले च वर्ण्यते। तत्रत्यः "रूपैः सप्तभिरित्युक्ता" (१७।६४) इति श्लोकः सत्यं सांख्यकारिका(६३)श्लोकं स्मारयति। परा० अभि० (पृ० २०९-२१०) अत्रत्या टिप्पणी च भावसृष्टिं प्रत्ययसृष्टिं च चर्चयति। स्वच्छन्द० (११।१२६-१७२), भोगकारिका (श्लो० ५५-६४), त० प्र० कु० (श्लो० ६६) चात्र द्रष्टव्यानि।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मन्दबुद्धीनां च समेष्वपि पारतन्त्र्यं दृश्यते। ज्ञाता ज्ञानं ज्ञेयमिति त्रिधेयं ज्ञानस्यैव स्थितिरिति स्पन्दप्रदीपिकायां ज्ञानसम्बोधे। स्वस्वभावस्थिता भावा भोक्तृभोग्यभावेन कदाचित् परस्परं सम्बद्धयन्ते। द्रष्टा, अनुभविता, स्मर्ता, ग्राहकः, भोक्ता, वेदकः, कर्ता, उपलब्धा, संवेत्ता, ज्ञाता—इति सर्वे शब्दा ज्ञानवाचका भवन्तीति तत्त्वविचारे द्रष्टव्यम्।

बौधायनसंहितायां स्पन्दप्रदीपिकाधृतायां ज्ञानस्य क्षणिकत्वं क्षणभङ्गवादसंमतं निरस्य—"तस्माज्ज्ञानं नित्यमेकं क्षणिकानि बहूनि नो" इति भणितम्। एतेन नैयायिकपक्षोऽपि प्रत्युक्तो वेदितव्यः। तदिदं ज्ञानम्—"त्रिःप्रत्ययमिदं ज्ञानमात्मा शास्त्रं गुरोर्मुखम्" इति [1]निशाटनादिपद्धत्या त्रिःप्रत्ययं भवति। सिद्धामते वर्णितं स्वप्रत्ययं ज्ञानमेव प्रातिभज्ञाननाम्ना शास्त्रेषु वर्णितम्। तदेतस्य प्रातिभज्ञानस्य [2]दीक्षानिरपेक्षत्वं मोक्षहेतुत्वं च मालिनीमत-नन्दिशिखा-निशाटनप्रामाण्येन तन्त्रालोके (१३।१६७-२०३) प्रदर्श्यते। "ज्ञानेन तु महासिद्धो भवेद् योगीश्वरस्त्विह" इति सिद्धामतवचने, "ज्ञानं ह्यकलितं चैकं मुद्रा चैका ग्रहात्मिका। द्वावेतौ यस्य जायेते सोऽन्वयी सिद्धशासने॥" इति च श्रीपश्चिमवचने ज्ञानस्य माहात्म्यं ख्याप्यते। "स्वदेहसाक्षिकं चैतत् सर्वस्य ज्ञानचेष्टितम्। ज्ञानानधिष्ठितः कायो लुठत्येव यतो धृतः॥" इति षाड्गुण्यविवेकवचनं चात्र स्मर्तव्यम्।

"श्रौतं चिन्तामयं द्व्यात्म भावनामयमेव च। ज्ञानं तदुत्तरं ज्यायो यतो मोक्षैककारणम्॥" (१३।३२७) इति तन्त्रालोकवचने च चतुर्विधं ज्ञानं प्रतिपाद्यते, तद्विवेके च—"ज्ञानं च त्रिविधं प्रोक्तं तत्राद्यं श्रुतमुच्यते। चिन्तामयमथान्यच्च भावनामयमेव च॥ शास्त्रार्थस्य परिज्ञानं विक्षिप्तस्य श्रुतं मतम्। इदमत्रेदमत्रेति इदमत्रोपयुज्यते॥ सर्वमालोच्य शास्त्रार्थमानुपूर्व्या व्यवस्थितिः। तच्च चिन्तामयं ज्ञानं द्विरूपमुपदिश्यते॥ मन्दस्वभ्यस्तभेदेन तत्र स्वभ्यस्तमुत्तमम्। सुनिष्पन्ने ततस्तस्मिन् जायते भावनामयम्॥ यतो योगं समासाद्य योगी योगफलं लभेत्। एवं विज्ञानभेदेन ज्ञानी प्रोक्तश्चतुर्विधः॥" इत्युद्धरणमुखेन तत्स्पष्टीकृतम्। ज्ञानिनो महिमा च त्रिशिरःशास्त्रप्रामाण्येन तन्त्रालोके (२८।६२-७१) वर्णितो द्रष्टव्यः।

शाक्तेषु तदनुप्राणितेषु च दर्शनेषु बोधो ज्ञानं वा संविन्नाम्ना व्याख्यायते। संविद्रूपा परा शक्तिरभिन्ना परमेश्वरादित्यद्वयसम्पत्तिवार्त्तिके। त्रिशिरोभैरवागमे (तन्त्रा० ५।८६-८७) मन्त्रभूम्यां प्रवेशः संविदभिन्नपरतत्त्वान्तःप्रवेशरूपेण व्याख्यातः। संवित्सतत्त्वशब्दोऽत्र संविदभिन्नार्थकः। नैकेषु ग्रन्थेषूद्धृते कल्लटकृततत्त्वार्थचिन्तामणि-

---

१. "किरणायां यदप्युक्तं गुरुतः शास्त्रतः स्वतः" (तन्त्रा० ४।४१) इत्यत्र जयरथः—"तत्र उत्तरोत्तरं मुख्यं विवक्षितम्। यथा गुरुतः शास्त्रम्, ततोऽपि स्वपरामर्शः ····। गुरुः शास्त्रे उपायः, तदपि स्वपरामर्शे। एवम् "उपादायापि ये हेयास्तानुपायान् प्रचक्षते" इत्याद्युक्तयुक्त्या गुरुशास्त्रयोरप्युपायत्वादमुख्यत्वमिति स्वपरामर्शस्यैव प्राधान्यम् (पृ० ४६) इति व्याख्याति।

२. विषयोऽयं शक्तिपातप्रसङ्गे समुपस्थापयिष्यते।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सूत्रे संविदेव प्राणरूपेण परिणमते, स्पन्दत इति प्रतिपाद्यते। चैतन्यमात्मनो रूपमिति स एव वक्ति। चित् संविदिति च स्तोत्रभट्टारके। जगत्येतावदाकारस्वीकारेऽपि संविदियमेकाकारैवावतिष्ठत इति पर्यन्तपञ्चाशिकायाम्। "संविन्मूलाद्वर्णरूपाज्ज्ञानस्तम्भात् सरस्वती। प्रागघोषा सनादाऽनु पुण्यतीर्था प्रवर्तते॥" इति संवित्प्रकाशे। अत्रैव सृतेः संसारस्यासत्त्वं शुद्धायाः संविदश्च सर्वदा सत्त्वं वर्णितम्। सोऽयं शुद्धसंविद्विचारस्तन्त्रालोके तद्विवेके (४।९५-१२६) च विस्तारितो द्रष्टव्यः। "बोधस्वरूपवाची संवित् प्रोक्ता च देवता गुरुभिः" इति भुवनेश्वरीकल्पोक्तिप्रामाण्येन कुमारस्तत्त्वप्रकाशव्याख्यायां बोधपर्यायं संविच्छब्दं देवीदेवात्मकं व्याख्यातवान्। तथा हि—सुखचिदादात्मको मोक्ष इति तस्य देवीदेवात्मकत्वसिद्धिः। तत्र परमानन्दसंविद् देवी संविदानन्दो देव इति।.... "विज्ञानमानन्दं ब्रह्म" (बृ० उ० ३।९।३४) इत्यादिश्रुतेश्च तदवगमः। ".....शिवो देवः शिवा देवी शिवं ज्योतिरिति त्रिधा। अलिङ्गमपि यत्तत्त्वं लिङ्गभेदेन कथ्यते॥ इति बृंहण्याम्" (श्लो० ३) इति। वीरावलीशास्त्रेऽपि संविद्विकासेन मोक्षोऽभिव्यज्यत इति प्रतिपाद्यते। मुकुटसंहितायामपि संविद्व्यापारस्यैव भोगमोक्षोभयसाधकत्वं वर्ण्यते। संविदोऽस्या आलम्बनेन योगी संविन्मयो भवतीति च वामननाथो वक्ति।

त्रिकसारे चित्रसंविदः, नरेश्वरविवेके च भ्रान्तसंविद् व्याख्याताः। अत्र संविच्छब्दो लौकिकज्ञानपर्यायतया प्रयुक्तः। प्रयुज्यते हि तादृशेऽर्थे संविच्छब्दः प्राभाकरादिदर्शनेषु वेदान्तादिग्रन्थेषु च।

"यत्र सर्वे लयं यान्ति दृश्यन्ते तत्त्वसंचयाः। तां चितिं पश्य कायस्थां कालानलसमत्विषम्॥" इति वीरावलीवचने, "पुंसि कर्तृत्वमारोप्य बुद्धावपि चिदात्मताम्" इति देवलाचार्यवचने, "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति प्रत्यभिज्ञाहृदयप्रथमसूत्रेऽन्यत्र च शैव-शाक्त-वैष्णवागमादिग्रन्थेषु प्रयुक्तौ चिच्चितिशब्दौ संवित्पर्यायौ परज्ञानमवबोधात्मकमेव प्राधान्येन व्यञ्जयतः।

"इत्येतन्मातृकाचक्रं दिव्यं विष्णुपदास्पदम्। ज्ञानं गुरुमुखात् सम्यक् पशोः पाशान् निकृन्तति॥" इति वाजसनेयतन्त्रवचनं गुरुमुखादधिगतं ज्ञानमेव पशोः पाशान् निकृन्ततीति प्रतिपादयति। गुरुश्च—"दीक्षाकाले न मीमांस्या ज्ञानदाने विचारयेत्" इति कामिकादेशमनुसृत्य ज्ञानमेतदवबोधाख्यं यद्यपि योग्याय शिष्याय समुपदिशति, तथापि दीक्षाकाले स्त्रीशूद्रचाण्डालादयो न मीमांस्या इति दिशा तान्त्रिकीं दीक्षां सर्वेभ्यो ददातीति प्रसङ्गप्राप्ता दीक्षा, दीक्षाप्रदो गुरुश्च साम्प्रतं व्याख्यायेते।

## सपरिकरा दीक्षा

परापरभेदभिन्नं ज्ञानं विवेचितम्। "ज्ञानदीक्षे प्रवक्ष्यामि" इति प्रतिज्ञानुसारं साम्प्रतं सपरिकरा दीक्षा वक्तव्या। तत्र पशुप्रकरणे [1]केवलः, सकलः, अमल इति त्रिविधः पशुर्वर्णितः। तेषु केवलावस्थः पशुर्नितान्तं मोहग्रस्तो न कथमपि चेतते।

---

१. अत्र १३४ पृष्ठस्था ४ संख्याका टिप्पणी द्रष्टव्या। अघोरशिवव्याख्यानं नात्र घटते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


सकलावस्थस्तु बद्धोऽहमिति जानाति, बन्धमोक्षाय चेष्टते च। तादृशं चेष्टमानं पशुम्—"तमःशक्त्यधिकारस्य निवृत्तेस्तत्परिच्युतौ। व्यनक्ति दृक्क्रियानन्त्यं जगद्बन्धुरणोः शिवः॥" (विद्या० ५।१) इति मृगेन्द्रवचनानुसारं [1]शिवोऽनुगृह्णाति। सोऽयमनुग्रहव्यापारः शास्त्रेषु शक्तिपातनाम्ना वर्ण्यते।

## शक्तिपातः

मृगेन्द्रसूत्रस्यायमर्थः—तमश्च शक्तिश्च तमःशक्ती, तयोरधिकारः। तमसो मलस्य शक्तेः, भगवत्सम्बन्धिन्यास्तिरोधानशक्तेश्च योऽधिकारस्तस्य निवृत्तेस्तत्परिच्युतौ कैवल्याभिमुखो भवति पशुः। तस्यामवस्थायां जगदुद्धरणक्षमः शिव आत्मनो दृक्क्रिययोरानन्त्यं परिपूर्णत्वं व्यनक्ति। सत्योरेवानन्तयोर्दृक्क्रिययोर्मलावच्छिन्नत्वादावृतानन्त्ययोर्मलपरिपाकेनावरणापगमादभिव्यक्तिः क्रियते, न त्वपूर्वतया उत्पाद इति भावः। अनेन कर्मनाशे मलपरिपाके च सति भगवतोऽनुग्राहिका शक्तिः पशुषु पततीत्युक्तं भवति। तदुक्तं पौष्करे—"कर्मनाशान्मलस्यापि विपाके सहकारिणी। पतत्युन्मीलनी शक्तिस्तदाऽनुग्रहरूपिणी॥" इति। "यया विना न सर्वज्ञः शिवः सा शक्तिरैश्वरी। या सा शिवप्रयुक्ता तु पशूनां मोक्षयेत् ततः॥ पतेद् दीक्षानुसन्धाने" इत्येवं श्रीकण्ठ्यामपि सोऽयं विषयो वर्णितः।

शक्तिपाते च सति यानि लिङ्गानि प्रादुर्भवन्ति, तानि मृगेन्द्रवचनेनानेन बोधितानि—"येषां शरीरिणां शक्तिः पतत्यविनिवृत्तये। तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ द्वेषो भवस्थितौ॥ भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके विधौ।" (विद्या० ५।४) इति। शक्तिपातस्य प्रयोजनं मतङ्गसूत्रचतुष्टयेन वर्णितम्—"तन्निपाताच्च तस्येत्थमज्ञस्याप्यभिलाषिणः। बुद्धिरुत्पद्यतेऽकस्माद् विवेकेनात्मवर्तिना॥ विवेकिनो विरक्तस्य जिज्ञासा चोपजायते। जिज्ञासोपेतचैतन्यं पशुं संसारसागरात्॥ जिघृक्षया युनक्त्येनं युक्तं प्रेरयति प्रभुः। प्रेरणे प्रेरकः श्रीमान् द्वयोरपि स मन्त्रराट्॥ अनुग्राह्यस्य विनये तथाऽनुग्राहकस्य च। कारुण्ये त्वनयोर्यस्यात् तयोर्योगः सुदुर्लभः॥" (विद्या० ४।४५-४८) इति। तथा पौष्करेऽप्युच्यते—"वैराग्यं जायते क्षिप्रं संसाराद् दुःखसागरात्। दिदृक्षा जायते शम्भोः पादपङ्कजयोरपि॥ कदा द्रक्ष्यामि देवेशं मोक्ष्येऽहं बन्धतः कदा। को वा दर्शयिता शम्भोरिति संजायते मतिः॥ एवं संसारतो भीतमनुगृह्णाति चेश्वरः।" इति। मालिनीविजये चैष विषय एवं प्रदर्शितः—"एवमस्यात्मनः काले कस्मिंश्चिद् योग्यतावशात्। शैवी सम्बद्ध्यते शक्तिः शान्ता मुक्तिफलप्रदा॥ तत्सम्बन्धात्ततः कश्चित् तत्क्षणादपवृज्यते। अज्ञानेन सहैकत्वं कस्यचिद् विनिवर्तते॥ रुद्रशक्तिसमाविष्टः[2] स यियासुः शिवेच्छया। भुक्तिमुक्तिप्रसिद्ध्यर्थं नीयते सद्गुरुं प्रति॥"

---

१. "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्तु स विज्ञेयो भवेन्मोक्षे च निश्चितः॥" (शान्ति० ३४८।७३) इति महाभारतवचनेऽपि शक्तिपाताख्यो भगवदनुग्रह एव वर्ण्यते।

२. शक्तिपातः, रुद्रशक्तिसमावेशश्च—मालिनी० (पृ० ५,८,१४), रुद्रशक्तिसमावेशः—तन्त्रा० (I. २२१, VIII. १३५),शक्तिसमावेशश्च (तन्त्रा० IX. १८०) इत्यत्र व्याख्यायते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



(१।४२-४४) इति। मलमायाख्ययुक्तानामप्यनुग्रहः संभवतीति च स्वायम्भुववृत्तौ प्रतिपादितम्।

ननु शक्तेः कथं निपातः? तस्या व्यापकत्वात्, व्यापकस्य वस्तुनश्च्युतिलक्षणनिपातायोगात्, अग्नेरुष्णत्ववत् शिवसमवायिन्याः शिवात् च्युत्ययोगाच्च। किञ्च, नित्यव्यापकशक्तेः सर्वथा सर्वकालं पश्वात्मसु स्थितत्वाद् युगपन्मुक्तिप्रसङ्गः। न च सा शक्तिः कस्मिंश्चिद् विशिष्टकाल एवानुग्रहकारिणीति वाच्यम्, तर्हि कालस्यैव मोक्षकर्तृत्वापत्तेः शिवेन प्रयोजनाभावप्रसङ्गात्। अतः कथं शक्तिपात इति चेत्, मैवम्। द्विधा [1]शब्दप्रवृत्तिर्गौणी मुख्येति। अत्र पातशब्दप्रवृत्तिर्गौणी। यथा लोकेऽस्य दृष्टिरस्यां कामिन्यां पतितेत्युक्ते न सा पुरुषाद् विच्युता कामिन्यां पतिता दृश्यते, किन्तु दृश्यदर्शकमात्रेण सम्बन्धाद् दृष्टिः पतितेत्युपचर्यते। तद्वदिहास्मिन् पुंस्यप्यनुग्राह्यानुग्राहकत्वलक्षणसम्बन्धेन सम्बन्धात् शक्तिः पतितेत्युपचारेणोक्ता, न मुख्यत इत्यदोषः। सोऽयं विषयः किरणागमसिद्धान्तवचनाभ्यां शतरत्नसंग्रहे (पृ० ६८) विवेचितो द्रष्टव्यः।

मोक्षकारिकाव्याख्याने रामकण्ठः—"स्वतन्त्रः शक्तिपातोऽसौ शैवः पशुविमोक्षकृत्। सापेक्षत्वे हि तस्य स्यादशक्तः परमेश्वरः॥" इति विद्याधिपतिप्रतिपादितं स्वतन्त्रशक्तिपातमतमुद्धृत्य खण्डयति, [2]कर्मसाम्यापेक्षः शक्तिपात इति मतमपि च

---

१. तन्त्रालोके (६।३१-३३) अब्वपदनिर्वचनावसरे स्मृते निशाचारवचने पारिभाषिकी, नैमित्तिकी, प्रसिद्धा चेति त्रिविधा संज्ञा प्रतिपादिता। "इह सर्वत्र शब्दानामन्वर्थं चर्चयेद् यतः" (६।३१) इति तत्रत्यं वचनं स्पष्टयन् जयरथ आह—"यद्यप्यर्थाभिधाने शब्दानां त्रयी गतिः—यौगिकी, रूढा, योगरूढा च। तत्रापि यौगिक्या एव प्राधान्यम्, सनिमित्तं तत्र तस्याः प्रवृत्तेः। अत एवान्यद् द्वयमत्रैव यथाकथञ्चिदन्तर्भावनीयम्, येन सर्वत्रैवान्वर्थचर्चा पारं यायात्" (पृ० ३१-३२) इति। नैरुक्ताः केचन वैयाकरणाश्च शब्दानां यौगिकत्वमेवाभ्युपगच्छन्ति।

२. "तत्र कर्मसाम्यं समबलयोर्विरुद्धफलयोः पुण्यरूपयोरपुण्यरूपयोः पुण्यापुण्यरूपयोर्वा युगपत् फलौन्मुख्यम्" (पृ० १३४) इत्येवं शैवपरिभाषायां कर्मसाम्यं लक्ष्यते। "इत्थं हि तत्प्रक्रिया—विरुद्धयोः कर्मणोः समबलयोरन्योन्यप्रतिबन्धे कर्मसाम्यम् ...." (पृ० १४७) इति च शिवदृष्टिस्था टिप्पणी। "धर्माधर्माख्ययोः साम्ये मानुष्यं लभते पुमान्" इति च सिद्धान्तहृदये प्रोच्यते। "धर्माधर्मक्षयकरी दीक्षा" इति स्वायम्भुववचने दीक्षायाः कर्मसाम्यसम्पादकत्वमुच्यते। धातुसाम्ये हि यथा देहः स्वस्थस्तिष्ठति, तथैव कर्मसाम्येऽन्तःकरणं निरुपद्रुतमवतिष्ठते। "समत्वधर्मव्यापारः कष्टोऽयं स्यात् सुदुष्करः" इति मतङ्गवचनेन (?) तस्य सुदुष्करत्वं व्यक्तीभवति। कर्मसाम्येन हि शक्तिपातयोग्यता प्रादुर्भवति। तदुक्तं किरणागमे—"समे कर्मणि संजाते तत्कालं योग्यतावशात्। तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा॥ सर्वज्ञः स शिवो यद्वत् किञ्चिज्ज्ञत्वविवर्जितः।" इति। अमुमेव वचनमनुसरन्तौ "कर्मव्यञ्जकमप्येतद् रोधि सद् यन्न मुक्तये" (८।६) इति मृगेन्द्रवचनव्याख्यानावसरे नारायणकण्ठाघोरशिवौ कर्म-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



निरस्य तस्य मलपरिपाकसापेक्षत्वं साधयति (श्लो० ६९-७०)। अद्वैतवादिभिः शैवैः शाक्तैश्च दार्शनिकैस्तु शक्तिपातस्य निरपेक्षत्वमेवाङ्गीक्रियते। "सर्वः शक्तोऽपि सापेक्ष ईशवन्मोहसाम्ययोः" (४।४) इति शिवदृष्टिवचनं विवृण्वन् भट्टोत्पलः—"द्वैतदर्शनेऽपीश्वरो मोहं मायातत्त्वमाश्रित्य सर्गे प्रवर्तते, कर्मसाम्यं चापेक्ष्यानुग्रहे" (पृ० १४७) इति वक्ति। अत्र मलपरिपाकसापेक्षपक्षः खेटपालस्य, कर्मसाम्यसापेक्षपक्षश्च कस्यचन किरणागमव्याख्यातुराचार्यस्येति स्वच्छन्दोद्योतदर्शनेन (५।८८; पृ० ८४, ९४) ज्ञायते। तन्त्रालोके त्रयोदशाह्निके मतद्वयमप्येतन्महता डम्बरेण निरस्तम्, मतङ्गव्याख्यातुरनिरुद्धाचार्यस्य, प्रमाणस्तुतिकारस्य विद्याधिपतेर्वचनं चात्र प्रमाणत्वेनोपन्यस्तम्। मतद्वयमेतन्निरस्य शक्तिपातस्य निरपेक्षत्वं च संसाध्य—"नवधा शक्तिपातोऽयं शम्भुनाथेन वर्णितः" (१३।२५४) इति दिशा तीव्र-मध्य-मन्दभेदम्, प्रत्येकं च पुनस्तीव्र-मध्य-मन्दभेदान् कृत्वा तस्य नवधात्वं वर्णयति। स्वीयमतप्रतिष्ठायां तेन बहूनि नन्दिशिखावचनानि, मालिनीमतवचनानि च समुपन्यस्तानि। एतच्च सर्वं [1]स्वच्छन्दोद्योते, तन्त्रालोके, तद्विवेके च द्रष्टव्यम्।

एवं शक्तिपातो विवेचितः। "तयोः (गुरुशिष्ययोः) योगः सुदुर्लभः", "नीयते सद्गुरुं प्रति" इति च वचनानुसारं शक्तिपातपूत आत्मा सद्गुरुं विन्दति, स च तं परीक्ष्य दीक्षयति। कलादिभिस्तत्त्वैर्भुवनादिभिश्च संयुतो निबद्धात्मा शिवस्वरूपां दीक्षां विना हि केवलेन ज्ञानेन न मोचयितुं शक्यते। अणोरात्मनो ज्ञानक्रियाशक्तिरीश्वरशक्तिवन्नित्या विभ्वी च भवति, तथापि सा मलावृता सती न सर्वत्र चकास्ते। अत एव स किञ्चिज्ज्ञो भवति। मलरुद्धं चैतन्यं प्रदीपवत् स्वल्पे व्यञ्जके स्वल्पम्, महति च व्यञ्जके महदभिव्यज्यते। जीवात्मा यदाऽभिव्यक्तया स्वशक्त्या युज्यते तदा चेतनो भवति, अन्यथा विषमूर्च्छित इव न चेतते। गुरुर्यथा सुप्तान्

साम्यं विवेचयतः। "यथा द्वैतदर्शनेऽपीश्वरो मोहं मायातत्त्वमपेक्ष्य सर्गे प्रवर्तते, कर्मसाम्यं चापेक्ष्यानुग्रहे, न चाशक्तोऽनीश्वरः" (पृ० १४७) इति वदन् शिवदृष्टिवृत्ति-(पदसंगति)कार उत्पलभट्टो द्वैतदर्शने कर्मसाम्यस्यानुग्रहे (शक्तिपाते) हेतुत्वं प्रदर्शयति। एतेनाद्वैतदर्शनेऽनुग्रहे न कर्मसाम्यापेक्षेति सूच्यते। "भुक्त्वा भोगानि तेषां तु कर्मसाम्ये शिवः स्वयम्" इति स्वच्छन्दसंग्रहवचने च कर्मसाम्ये सति शिवः स्वयं जीवानां कर्म विपाचयतीति प्रतिपाद्यते।

१. अद्वैतवादिभिर्मलपरिपाककर्मसाम्यनिरपेक्षः स्वतन्त्रः शक्तिपातः साध्यत इति स्तव० क्षेम० (पृ० १२४-१२५), त० सा० (पृ० ११५-११६), सा० प० टी० (पृ० ४१-४२) इत्यत्रापि द्रष्टव्यम्। प्रसङ्गेऽस्मिन् "भक्तिरेका प्रशस्यते" (शि० स्तो० ११।१८), "भक्तिरेव परां काष्ठां प्राप्ता मोक्षोऽभिधीयते" (त० वि० १३।२१४) इत्यादीनि वचनान्यपि दृष्टिपथमायान्ति। "अनयैव दिशा नेयं मतङ्गकिरणादिकम्" (तन्त्रा० १३।२८४) इत्युक्त्वाऽभिनवगुप्तोऽपि ततः—"पुराणेऽपि च तस्यैव प्रसादाद् भक्तिरिष्यते" (१३।२८५) इति वक्ति। ज्ञानं भक्तिः प्रत्यभिज्ञा च अजिते (I. १३१), कालोत्तरे (पृ० १४८), ई० प्र० वि० वि० (I. २४-३२) च विव्रियन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



शिष्यान् प्रबोधयति, एवमेव शिवो मोहनिद्रायां सुप्तान् जीवान् स्वशक्त्या चेतयते। यथा भेषजसामर्थ्यादशक्ता जना बलशालिनो भवन्ति, तथैव शिवशक्तियोगेन जीवेषु दृक्क्रियात्मकमैश्वर्यं प्रादुर्भवति। तेन मलपरिपाके सति स मोक्षं लभते, तदभावे च भोगान् भुङ्क्ते। नित्यव्यापकचिच्छक्तिनिधिरपि जीवो भोगमोक्षार्थं पाशवं शाम्भवं च बलमपेक्षते। "सुतीव्रशक्तिपातेन कुरुते तान् स केवलान्" इति हि स्वच्छन्दसंग्रहे प्रोच्यते। परमेश्वरोऽनुगृह्णातीति च सर्ववीरे। कैवल्यनिरोधकादस्मात् प्रविततादृ बन्धाद् दीक्षैव[1] मोचयति शैवं धाम च नयति। "शक्तिपातानन्तरभाविन्या दीक्षया पवित्रितैः शोधितैः सिद्धान्तः सेव्यते" (श्लो० १२) इत्येवं रत्नत्रयव्याख्याने दीक्षायाः शक्तिपातानन्तरभावित्वं वर्ण्यते। "यदा शिवाभिलाषो वै जायते च नृणां सदा।.... मुक्तास्तदैव ते दीक्षां प्राप्नुवन्ति गुरोस्ततः॥" इति नन्दिशिखावचनमप्यत्रानुगुणम्। अतोऽधुना शक्तिपातविवेचनान्तरं दीक्षा विविच्यते।

## दीक्षाया महत्त्वम्

"शिवाज्ज्ञानं प्रवर्तते" इति स्वायम्भुववचने शिवशक्तिवाचकं ज्ञानपदमवबोधरूपं दीक्षारूपं च द्विविधमपि ज्ञानमवबोधयतीति शतरत्नसंग्रहकारः (पृ० ५)। ननु दीक्षायाः कथं ज्ञानरूपत्वमिति चेत्, उच्यते। यथा सवितुर्गभस्तिरर्थप्रकाशको दाहमपि कुर्वन् प्रकाशरूपतां न जहाति, उभयरूपोऽपि प्रकाश इत्युच्यते, तथैव दानक्षपणलक्षणाऽपि दीक्षा ज्ञानरूपतां न जहाति। तेनोभयरूपं ज्ञानमिति मन्तव्यम्। चर्यादिचतुष्टयेऽपि दीक्षाया अधिकारसम्पादकतया तस्या महत्त्वातिशयो मन्तव्यः[2]।

---

१. तन्त्रालोके शक्तिपाताह्निके दीक्षया प्रातिभेन ज्ञानेन वा मोक्ष इति विचारः सविशेषं प्रस्तुतो नन्दिशिखाकिरणादिप्रामाण्येन (१३।१६२-२५१)। स्वपरामर्शात्मकस्य प्रातिभज्ञानस्य महिमा ई० प्र० वि० वि० (I. १५-१६, II. ३३९), तन्त्रा० (IV. १२, VIII. ९९-१२४) इत्यत्र ख्याप्यते। गुरोरभावेऽपि प्रातिभज्ञानवन्तं रक्ता देवी दीक्षयति (तन्त्रा० ४।६०-६४) इत्यभिनवगुप्तः। "संविद्व्यापार एवैका युक्तिः सर्वत्र साधनी। भोगे वाऽप्यथवा मोक्षे तेनास्यामादृतो भवेत्॥" इति मुकुटसंहितावचनमपि च प्रातिभं ज्ञानमेव संविद्व्यापाराख्यं भोगमोक्षयोः कारणं कथयति। सैषा स्थितिः परा०अभि० (पृ० २५४-२५८) इत्यत्र निर्वाणदीक्षा-पदेन व्याख्याता, स्प० नि० (पृ० ५०-५३), स्प० प्र० (पृ० ११७) इत्यत्रापि च। दीक्षयैव मोक्ष इति च रौरवे (I. १८४), स्वच्छन्दे (VI. ११२-११३), तन्त्रालोके (IX. १२) च द्रष्टव्यम्। एतेषु तन्त्रालोके ज्ञानमेव दीक्षेति च वर्ण्यते।

२. "येषामध्यवसायोऽस्ति न विद्यां प्रत्यशक्तितः। सुखोपायमिदं तेषां विधानमुदितम्" (क्रिया० १।२) इति मतङ्गे दीक्षाया महत्त्वं वर्ण्यते। मुद्रा-मण्डल-मन्त्र-क्षेत्र-द्रव्य-सावकाख्यानि षडङ्गानि भवन्ति दीक्षाया इत्यपि तत्रैव (क्रि० १।४)। एतेषां विस्तरश्च सम्पूर्णे पटले प्रथमे दृश्यते। मतङ्गे क्रियापादे ५-९ पटलेषु, मृगेन्द्रे क्रियापादे ७ पटले, कालोत्तरे ८ पटले, नेत्रतन्त्रे ४ अधिकारे, मालिनीविजये ४-९ अधिकारेषु, तन्त्रसारे (पृ० १४३-१८३), तन्त्रालोके १५-२६, २९-३० आह्निकेषु चास्या विस्तरो

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



अत एव स्वायम्भुवसूत्रे—"अस्मात् प्रविततात् बन्धात् परसंस्थानिरोधकात्। दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि ॥" इत्येवं तस्य महिमा वर्ण्यते, "ज्ञानादीनामुपायानां दीक्षा कारणमिष्यते। चतुर्णामङ्गता प्रोक्ता तत्स्वरूपविभागतः ॥" इति च श्रीपराख्ये। "दीक्षया मुच्यते देही त्रिविधाद् भवबन्धनात्" इति वरुणपद्धतिवचनम्, "ज्ञानादिभिर्न मोक्षोऽस्ति तस्माद् दीक्षैव मोचनी", "दीक्षया मुक्तिरिष्यते", "नहि दीक्षासमं किञ्चित्", "न दानैर्न तपोयज्ञैः", "कृत्वा तु नैष्ठिकीं दीक्षां विमुक्ता निवसन्ति ये" इत्यादीनि वचनानि, "तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा। सर्वज्ञः स शिवः" इति किरणागमवचनम्, "तत्त्वैरेभिर्निबद्धात्मा सर्वधर्मैश्च संयुतः। नान्येन शक्यते मोक्तुं वर्ज्य दीक्षां शिवात्मिकाम् ॥" इति सर्वज्ञानोत्तरसूत्रं च दीक्षाया महिमानं ख्यापयन्ति। एवं च मलपरिपाकवशात् शक्तिपातक्रमेण दीक्षया मोक्षं याति जीवात्मा, न तु ज्ञानादिभिरुपायैः, तेषां दीक्षाङ्गत्वेन श्रवणात्, योगादेः शिवविषयस्य दीक्षया विनाऽनुपपत्तेः, मलस्य च द्रव्यत्वेन चक्षुःपटलादिवज्ज्ञानमात्रेण निवृत्त्यभावात्, चक्षुर्वैद्यव्यापारेणेव दीक्षाख्येनेश्वरव्यापारेणैव निवृत्तिसिद्धेश्च। अत एव पौष्करे—"दीक्षैव मोचयेत् पाशान् शिवत्वं च ददात्यणोः" इति, षट्सहस्रिकायां च—"दीक्षैव मोक्षदा पुंसां चिदभिव्यक्तिकारिणी" इत्युच्यते। "तत्र दीक्षैव भोगे च मुक्तौ चायात्युपायताम्" इति तन्त्रालोकेऽपि (१५।१)। दीक्षाऽपि ज्ञानरूपैवेति त्वन्यत्। मालिनीविजये च—"न चाधिकारिता दीक्षां विना योगेऽस्ति शाङ्करे" (४।६) इत्युक्त्वा "क्रियाज्ञानविभेदेन सा च द्वेधा निगद्यते" (४।७) इति तस्याः क्रियाज्ञानभेदेन द्वैविध्यमुच्यते।

## दीक्षालक्षणम्

"दानं नाम स्वसत्तैव या सा ज्ञानक्रियात्मिका ॥ सा शक्तिस्तस्य संस्पर्शाद् व्यक्तीभूता सुनिर्मला। पत्युर्दानं तदेवोक्तं न स्वयं व्यज्यते पशोः ॥" (४।५८-५९) इति मतङ्गपारमेश्वरवचनम्, "दीयते ज्ञानसद्भावः क्षीयते च मलत्रयम्। दीयते क्षीयते चेति दीक्षाशब्दो द्विधोच्यते ॥" एतदनुकारीणि च बहूनि वचनानि दीक्षाशब्दं निर्वचयन्ति। "दीक्षा परमविश्लेषः पाशच्छेदो निरोधनम्। परा शुद्धिर्बलं व्यक्तिर्मुक्तिः परमनिष्कृतिः ॥ पर्यायाः शिवगीतेषु तन्त्रेष्वित्यादयो मुने।" (क्रिया० ८।१०१-१०२) इति च दीक्षाशब्दस्य पर्याया मृगेन्द्रागमे वर्ण्यन्ते। नेत्रतन्त्रे च—"सा च दीक्षा समुद्दिष्टा दानक्षपणलक्षणा" (१९।१६१) इत्येवं स्वातन्त्र्यशक्तिरेव दीक्षेति प्रतिपाद्यते। सेयं दीक्षा एकस्य बहूनां वा सहैव कर्तुं शक्यते, "एकस्य दीक्षा कर्तव्या द्वयस्याथ त्रयस्य वा" इति पौष्करोक्तेः। लयभोगावज्ञात्वा दीक्षा न विधेयेति च षट्सहस्रिकायाम्।

---

द्रष्टव्यः। तन्त्रालोके १५ आ० वामदीक्षा, २८-२९ आ० कुलक्रमदीक्षा च वर्ण्यते। कुलरत्न-रौरवागम-लक्ष्मीकौलार्णव-हंसपारमेश्वरवचनेषु चात्र संगृहीतेषु दीक्षाविषयो द्रष्टव्यः। अत्राधिवास-शिवहस्त-मन्त्रसन्धान-नाडीसन्धान-स्वप्नविवेचन-द्विजत्वापादनादयो विषया व्यावर्ण्यन्ते। दीक्षाप्रसङ्गेन क्रियापादे स्नानार्चनकलान्यासाग्निकार्यविद्याव्रतमन्त्रसिद्धिविधिमालासनादयो विषया उच्चाटनादीनि कर्माणि लिङ्गमूर्तिप्रतिष्ठादिकं च प्रदर्श्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



"निरीक्षणं मन्त्रदृशा प्रोक्षणं चार्घ्यवारिणा। ताडनं चास्त्रराजेन नेत्रेणाप्यायनं तथा॥ गुण्ठनं कवचेनापि" इति त्रिशिरोमतप्रोक्तो दीक्षाविषयः पाञ्चरात्रसात्वतसंहितायामपि —"निरीक्ष्य ताड्य सम्प्रोक्ष्य दर्भैरालभ्य पूर्ववत्" (१९।३७) इत्यत्र दृश्यते, "निरीक्षणं नेत्रमन्त्रेण, ताडनमस्त्राभिमन्त्रिततिलसिद्धार्थैः, प्रोक्षणमस्त्राम्भसा, दर्भैरालभनम्" (पृ० ३८२) इति च तत्रत्यं भाष्यम्।

## मलक्षयकरी दीक्षा

"तत्रापि कार्ममेवैकं मुख्यं संसारकारणम्" इति प्रत्यभिज्ञाकारिकां विवृण्वन्नभिनवगुप्तः—"नहि दीक्षासमं किञ्चित्" इति ललितावचनं समुद्धृत्य, ततः—"कृतमपि फलाय न स्याद् दीक्षोपर्यूषरोप्तबीजमिव" इति गुरुभिरुक्तं वचनम्, "अव्याहतस्य भगवन् .... अवाप्य दीक्षां ज्ञानादृतेऽपि ननु केवलतामुपैति" (श्लो० ३२) इति भक्तिस्तोत्रवचनमवधूतसिद्धोक्तं समुद्धरति। स्वायम्भुवेऽपि—"धर्माधर्मक्षयकरी दीक्षा" इति स्मर्यते। "अनेकभविकं कर्म दग्धं बीजमिवाणुभिः। भविष्यदपि संरुद्धं येनेदं तद्धि भोगतः॥" इति च किरणसूत्रे, [1]"सितासितौ दीर्घह्रस्वौ धर्माधर्मौ दिनक्षपे। क्षीयेते यदि तद्दीक्षा व्याप्त्या ध्यानेन योगतः॥" (६।७४-७५) इति तन्त्रालोकवचनेऽपि च दीक्षया कर्मक्षयः प्रतिपाद्यते। "दीक्षानलप्लुष्टमलस्य जन्तोः" इति, "यथा प्रदीप्तज्वलने तूलराशिः समर्पितः। दग्धो निर्वाति स तत्र न भूयः स्थूलतां व्रजेत्॥ एवं वै मण्डलं प्राप्य दीक्षामन्त्रसमुद्भवम्। न पुनर्जन्मतां याति दीक्षितो मनुजोत्तमः॥" इति च वचनं तमेव विषयं पोषयति।

## दीक्षाधिकारी

"उक्तं ज्ञानोत्तरे चैतद् ब्राह्मणाः क्षत्रिया विशः। नपुंसकाः स्त्रियः शूद्रा ये चान्येऽपि तदर्थिनः॥ ते दीक्षायां न मीमांस्याः" (२३।२०-२१) इत्येवं ज्ञानोत्तरप्रामाण्येन तन्त्रालोके सर्वेषामधिकारः प्रदर्शितः। "दीक्षोत्तरेऽपि च प्रोक्तमन्नं ब्रह्मा रसो हरिः।

---

१. "यदि नाम प्राणापानरूपौ सितासितौ परस्परव्यावृत्त्या वर्तमानौ दीर्घह्रस्वादिशब्दव्यपदेश्यौ शुभाशुभौ पक्षौ क्षीयेते अपोहात्मकविकल्परूपताघट्टनेन निर्विकल्पात्मपरसंविद्रूपत्वेन परिस्फुरतस्तदेव व्याप्त्या ध्यानेन योगेन च दीक्षा। ज्ञानयोगक्रियात्मिकया दीक्षया निर्यन्त्रणमेव मुक्तिर्भवेदित्यर्थः। अत्र समुद्धृता वीरावलीश्लोका अपि द्रष्टव्याः। प्राणापानाविमौ सोमसूर्यात्मना कामविषात्मना च व्याख्यायेते शास्त्रेषु। अत्राद्यन्तकोटिनिभालनात्मिकां मध्यनाडीं वह्न्यात्मना व्याख्याय मानमेयमातृस्वरूपां त्रिपुटीं निष्पादयन्ति योगतन्त्रशास्त्राणि। तन्त्रा० (III. १२५, ३३२-३३४), स्प० प्र० (पृ० १०८-११०), प्र० हृ० (पृ० ८७-८९), वि० भै० (पृ० १६, ३०,५०-५८, १३३-१४१), ई० प्र० वि० (II. २७१, ३००), ई० प्र० वि० वि० (III. ३३४-३३६, ३४२-३५३), स्वच्छन्द० (II. १४५-२४१, III. १६८-२४१), तन्त्रा० (III. ३४८-४३८; IV. ३, १०-२०२; V. १, ३१,४२; VII. १२९) इत्यादिषु त्रिपुटीविषयकः प्राणापानविषयकश्च प्रपञ्चो द्रष्टव्यः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



भोक्ता शिव इति ज्ञानी श्वपचानप्यथोद्धरेत् ॥" इति श्वपचानामप्यधिकारश्च स्पष्टं व्याक्रियते तत्रैव (२८।६५)। अत एव नेत्रतन्त्रोद्योते कालोत्तरप्रामाण्येन—"एवं ज्ञात्वा महासेन श्वपचानपि दीक्षयेत्" इति प्रतिपाद्यते। "यथोक्तं कालपादादौ दीक्षयेत् श्वपचानिति" (पृ० २०) इति मालिनीवार्त्तिके कालोत्तरैव कालपादापदेन प्रोक्ता।

"वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित्। संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः॥" इति भैरवकुलवचनं तु सिद्धान्तवामादिमार्गेषु दीक्षिता अपि भैरवादिमार्गेषु पुनः संस्कार्या इति निर्दिशति। एतेषु हि—"दीक्षाध्वा निर्भयो भोगः शास्त्रे भैरवसंज्ञके" इति दिशा कश्चन विशेषः प्रदर्श्यते। अत्र भैरवपदं कुल-कौल-क्रम-त्रिकादीनामुपलक्षकम्। भैरवागमाश्च—"भैरवागमेषु दक्षिणस्रोतःसमुत्थेषु स्वच्छन्द-चण्डत्रिशिरोभैरवादिषु" (भा० १, पृ० २२५) इत्येवं नेत्रतन्त्रोद्योते स्मृताः।

## दीक्षाभेदाः

स्वच्छन्दोद्योते क्षेमराजो [1]दीक्षाभेदानेवं प्रतिपादयति—"तदेवं चतुर्थपटले कलादीक्षोक्ता, अस्मद्दर्शितयुक्त्या एकतत्त्वदीक्षा च। इह (पञ्चमे पटले) तु त्रिपञ्चनव-षट्त्रिंशद्भेदाश्चतस्रस्तत्त्वदीक्षाः, पददीक्षा च नवतत्त्वदीक्षावत्, वर्णमन्त्रभुवनदीक्षाश्च तिस्रः कलादीक्षावत्, दशमे (पटले) च वितता भुवनदीक्षा भविष्यतीत्येता एकादश अध्ववैचित्र्येण दीक्षाः। ज्ञानदीक्षा [2]चोद्घातयुक्त्या द्वादशीति। एताः सबीज-निर्बीजसद्योनिर्वाणभेदात् पुत्रकविषये षट्त्रिंशद् भवन्ति। आचार्ये तु सबीजैव द्वादश-भेदा। साधके शिवधर्मिलोकधर्मिभेदाद् द्विविधे पूर्ववच्चतुर्विंशतिभेदा। समयिनि तु अध्वन्यासस्यानुक्तत्वाज्ज्ञानक्रियाभ्यां हृदादिग्रन्थिभेदनतो द्विविधा—इति चतुःसप्ततिरिह संक्षेपतो दीक्षाभेदाः। तत्रापि सकलनिष्कलाघोरैश्वर्याद्यनुष्ठानभेदाल्लोकधर्मिसाधकस्य चावान्तरवैचित्र्याद् भौतिकनैष्ठिकाचार्यभेदाच्च बहुप्रकारा भवन्ति" (५।८८; पृ० ७२-७३) इति। अत्र दीक्षाविषयकः सौगतमतनिरासोऽपि दर्शनार्हः।

१. शिवदृष्टिश्लोकस्य—"पञ्चतत्त्वदीक्षाविधौ दीक्षाशास्त्रे" (२।९०) इति व्याख्यान-दर्शनात् कश्चनैतन्नामको दीक्षाशास्त्रग्रन्थस्तत्र स्मृत इति प्रतिभाति। "नादाख्यं यत्परं बीजम्" (१।५) इति, "पृथिव्यापस्तथा तेजो वायुराकाशमेव च। पञ्चैतानि च तत्त्वानि यैर्व्याप्तमखिलं जगत् ॥" (८।१-२) इति च कालोत्तरवचनं पञ्चतत्त्व-दीक्षाविधिप्रकरणे तन्त्रालोकादिषु (११।१५-४०) बहुधा व्याख्यायते। अत्र हि पञ्चमन्त्रतनुत्वमेषां तत्प्रामाण्येनैव वर्ण्यते। सर्वं सर्वात्मकमिति शिवदृष्टिप्रतिपादितं सिद्धान्तम्, एको भावः सर्वभावस्वभाव इति शम्भुभट्टारकवचनं चाश्रित्य शास्त्रेष्वेक-तत्त्वदीक्षाविधिरपि वर्ण्यते। सर्वोऽयं विषयः कालोत्तरस्वच्छन्दादिषु तन्त्रालोका-दिषु च दीक्षाप्रकरणे वर्ण्यते। दीक्षाभेदाः शतरत्नधृतयोः षट्सहस्रिका-क्रियाकरण-मण्डनयोश्च द्रष्टव्याः।

२. "संनिरुद्धे तु वै प्राणे मूर्ध्नि गत्वा निवर्तते। स उद्घात इति प्रोक्तो ज्ञातव्यो योगिभिः सदा॥" (७।३०१-३०२) इति स्वच्छन्दे। मतङ्गे योगपादे (७।१-४) तत्रत्यटिप्पण्यां च किरणादिप्रामाण्येन वर्णितमुद्घातलक्षणं तत्रैव द्रष्टव्यम्।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तन्त्रालोकेऽपि (१६।१६२-१९३) दीक्षाभेदा वर्णिताः। तथाहि तत्रत्यौ द्वौ श्लोकौ—"पञ्चाशीतिशती या चत्वारिंशत्समुत्तरा कथिता। तां सप्तत्या भित्त्वा दीक्षाभेदान् स्वयं कलयेत् ॥ पञ्चकमिह लक्षाणां च सप्तनवतिः सहस्रपरिसंख्या। अष्टौ शतानि दीक्षाभेदोऽयं मालिनीतन्त्रे ॥" (१६।१८५-१८६) इति।

[1]"हौत्री दीक्षा तु सिद्धान्ते तन्त्रे योजनिका स्मृता। त्रिके समावेशवती कुले स्तोभात्मिका मता ॥ सामरस्यमयी कौले दीक्षा पञ्चविधोदिता।" इति भैरवकुल-वचने पञ्चविधा दीक्षा वर्ण्यते। "सिद्धान्ते दीक्षितास्तन्त्रे दशाष्टादशभेदिनि। भैरवीये चतुष्षष्टौ तान् पशून् दीक्षयेत् त्रिके ॥ सिद्धवीरावलीसारे भैरवीये कुलेऽपि। पञ्चदीक्षा-क्रमोपात्ता दीक्षाऽनुत्तरसंज्ञिता ॥" (२२।४०-४२) इति च तन्त्रालोके। "दीक्षाविधौ च ये प्रोक्ताः प्रत्ययाः स्तोभपूर्वकाः। सन्धानस्यैव ते देवि कलां नार्हन्ति षोडशीम् ॥ न सन्धानं विना दीक्षा न सिद्धीनां च साधनम्। न मन्त्रो मन्त्रयुक्तिश्च न योगाकर्षणं तथा ॥" इति च लक्ष्मीकौलार्णवे दृश्यते।

## अभिषेकः

योग्यतानुरूपं समयी, पुत्रकः, साधकः, आचार्यश्चेति चतुर्विधा दीक्षिता भवन्ति। [2]तत्र सर्वेषामभिषेक इत्येकः पक्षः, आचार्यस्यैवेत्यपरः। अभिनवगुप्तस्तु साधकाचार्ययोरभिषेकं त्रयोविंशाह्निके एकोनत्रिंशाह्निके च वर्णयति। त्रयोविंशाह्निके हि स सामान्याभिषेकविधिं सपरिकरं कामिक-सिद्धयोगीश्वरीमत-कचभार्गव-देव्यायामल-पूर्वशास्त्र-योगचार-ज्ञानोत्तर-सिद्धातन्त्र-ऊर्मिशासन-ब्रह्मयामल-मतङ्ग-त्रिकसार-प्रामाण्येन प्रतिपादितवान्[3]। प्रसङ्गेऽस्मिन् देव्यायामलशास्त्रे केचन वर्ज्याः परिगणिताः, अन्यत्र तु ज्ञानवान् गुरुरुच्यते, ज्ञानमूलो गुरुः प्रोक्त इत्येवं दीक्षाभिषेकयोर्ज्ञानस्यैव माहात्म्यमङ्गीकृतम्। गुरुपदमत्र आचार्योपलक्षकम्। कुलाचार्याभिषेकविधिस्तन्त्रा-लोके एकोनत्रिंशाह्निके (श्लो० २२५-२३५) वर्णितः। अत्र वीरावलीप्रामाण्येनान्तरा-भिषेकक्रमोऽपि तेन व्याख्यातः। त्रयोदशाह्निकेऽपि तेनान्तरोऽभिषेकक्रमो वाजसनेय-तन्त्रप्रामाण्येनोपदिष्टः। सर्ववीरब्रह्मयामलादावपि तस्य निरूपणं विद्यत इति चोक्तम्। अत्रत्य आन्तराभिषेकविधिर्विनैव दीक्षां प्रातिभेन ज्ञानेनापि मुच्यते जीव इति नन्दिशिखादिप्रतिपादितं मतं पुष्णाति। दीक्षित आचार्योऽभिषेकानन्तरमेव गुरुपदवी-मारोहतीत्यधुना गुर्वविविच्यते।

१. पञ्चविधा दीक्षेयं तन्त्रालोके (१३।३०२) विवेके च वर्णिता। तत्र ज्ञानज्ञेयमयं कौलमिति त्रिशिरोमते। वेध-क्षोभ-आवेश-सन्धानादिपदानामर्थास्तन्त्रालोक(२९। १९६-२११, २३७-२४७)-नरेश्वरविवेक-(पृ० २६४)-शिवसूत्रविमर्शिन्या-(१।१६, १९)दिषु, दीक्षासम्बन्धी शेषविचारश्च तन्त्रालोके (२६ आ०) द्रष्टव्याः।

२. अयं विषयः सात्वतसंहिताया उपोद्घाते (पृ० ५७-५८) विवेचितोऽस्माभिः।

३. कालोत्तरे ९ पटले, मतङ्गे क्रियापादे १० पटले, मृगेन्द्रे क्रियापादे ८ पटले, मालिनीविजये १०-११ अधिकारयोः, नेत्रतन्त्रे ५ अधिकारे, स्वच्छन्दे (४।४४८-४५०) चाभिषेकविधिर्वर्ण्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


## गुरुः, तस्य चरणौ पादुका च

गृणाति प्रकाशयति विश्वव्यवहारमिति निरुक्त्या सर्वानुग्राहकः परमशिवभट्टारकापरपर्यायः स्वात्मरूपो महान् प्रमाता एव मुख्यो गुरुरुच्यते। "गुरुरुपायः" (२।६) इति शिवसूत्रे स एव वर्ण्यते। तस्य चरणौ ज्ञानक्रियालक्षणं स्वातन्त्र्यं चर्यते गम्यते प्राप्यते बुद्ध्यते भक्ष्यते चाभ्यां विश्वमिति चरणावित्युच्येते। "भोग्यभोक्तृषु भावेषु···· कर्मणा चरणाख्येयं न तु पादतया प्रिये" इति कुब्जिकामतवचनेन तदेव प्रतिपाद्यते। तृतीयस्तु चरणः साक्षाद् गुरुः स्वलक्षण एव। "सितो वामेऽरुणो दक्षे" इत्यादिके कुब्जिकामतवचने सितारुणलक्षणयोर्गुरोश्चरणयोर्गुरोश्च ध्यानं वर्ण्यते। अयमेव सकलनिष्कलात्मा सर्वविधूननावस्थायां निर्वाणरूपस्तुरीयः पादः। लौकिको व्यवहारस्तु सकलेन निष्कलेन च द्वाभ्यामेव चरणाभ्यामुपकल्प्यते। तदुच्यते—"शुक्लोऽङ्घ्रिः शुक्लमाविष्टो रक्तं रक्तोऽङ्घ्रिराश्रितः। पित्रोरङ्घ्रिद्वयेनेदममुना जायतेऽखिलम् ॥" (म० म० प०, पृ० ४)। एतद्धि परमगुरोर्लक्षणम्।

मानवगुरोर्लक्षणं तु—"गुरोर्लक्षणमेतावदादिमान्त्यं[1] तु योजयेत्" इति श्रीकण्ठीसंहितावचने, "यस्माद् दीक्षा मन्त्रशास्त्रं तत्त्वज्ञानं स वै गुरुः" इत्यानन्दशासनवचने, "कौलदीक्षा कौलशास्त्रं तत्त्वज्ञानं प्रकाशितम्। येनासौ गुरुरित्युक्तः" इत्यूर्मिकौलशास्त्रे, "सर्वलक्षणहीनोऽपि [2]ज्ञानवान् गुरुरुच्यते" इति च कचभार्गवे वर्ण्यते। चतुष्पात्संहिताभिज्ञ इत्याचार्यलक्षणमपि देवीयामलवर्णितं गुरुलक्षणतयैव पर्यवस्यति। संहितापारगस्यैव सेकः कार्य इति स्वायम्भुववचनमपि तमेनं विषयमनुमोदयति। अर्थरत्नावलीधृते मन्त्रराजे च नवभिः श्लोकैर्भैरवागमे कीदृशो गुरुरपेक्षित इति वर्ण्यते।

"स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः" (२।१०) इति मालिनीमतवचने गुरुः शिवसमः प्रोक्तः। गुरोर्गुरुतरेति त्रिशिरोभैरववचने, गुरुवक्त्रप्रयोगेणेति स्वच्छन्दसंग्रहवचने च गुरुवक्त्रगतायाः शक्तेर्माहात्म्यं वर्ण्यते। "शिवाद् गुरुतरा भक्तिर्यस्य नित्यं गुरौ सदा" इति शतरत्नसंग्रहस्थं तन्त्रवचनम्, गुरवे दक्षिणां दद्यादिति स्पन्दप्रदीपिकास्थं नारदसंग्रहवचनम्, सेव्यन्त गुरव इति परिमलोद्धृतं हंसभेदवचनम्, गुरुपूजामकुर्वाण इति स्कन्दयामलवचनम्, स गुरुर्मोचयेत् पशूनिति वीरावलीवचनं च गुरोर्माहात्म्यं वर्णयन्ति। सिद्धयोगीश्वरीमतानुसारमध्वसन्धानमजानन् गुरुः शिष्यं मोचयितुमसमर्थः।

---

१. सिद्धामतप्रामाण्येन विषयोऽयं तन्त्रालोके तद्विवेके च (३।२२३-२२५, ११।८१-८२) प्रपञ्च्यते, "यो न वेदाध्वसन्धानं स गुरुर्नैव मोचयेत्" (तन्त्रा० २३।५) इति च।

२. ज्ञानमूलो गुरुः प्रोक्त इति दीक्षोत्तरेऽपि वर्ण्यते। स च सप्तसत्रीं प्रवर्तयेदिति च तत्रैवोपदिश्यते। तत्र का नामेयं सप्तसत्री ? सा च तन्त्रालोकस्थे—"दीक्षा व्याख्या कृपा मैत्री शास्त्रचिन्ता शिवैकता। अन्नादिदानमित्येतत् पालयेत् सप्तसत्रकम् ॥" (२३।२२-२३) अस्मिन् श्लोके प्रदर्श्यते। "रुद्रश्च, रुद्रशक्तिश्च गुरुश्चेति त्रयं समम्" (३।५६) इति मालिनीवचने च गुरोर्माहात्म्यं वर्ण्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## गुरुपादुका

"स्वप्रकाशशिवमूर्तिरेकिका तद्विमर्शतनुरेकिका तयोः। सामरस्यवपुरिष्यते परा पादुका परशिवात्मनो गुरोः॥" (श्लो० १) इत्येवं चिद्विलासस्तवे गुरुपादुका स्तूयते। "क्रमसंकोचगुलिका तद्विकासैकमूलिका। तत्तत्स्वरूपा वीरादिवीरान्ता पातु पादुका॥" इति च श्रीपूर्वे। "वागुरामूलवलये सूत्राद्याः कवलीकृताः। तथा कुलार्णवज्ञानं पादुकायां प्रतिष्ठितम्॥" (१२।३) इति कुलार्णववचने च कुलार्णवज्ञानं गुरुपादुकायां प्रतिष्ठितमिति प्रोच्यते। तत्प्रतिपादनमात्रोपक्षीणव्यापारे पादुकोदये तन्त्रे महेश्वरानन्देन गुरुपादुका सविशेषं वर्णिता, परिमले च—"परापरात्मनः स्वात्मनः परानन्दमयी स्वव्यतिरेक-कवलनोद्युक्ता परा शक्तिः पादुकेति गीयते" (पृ० ९६) इत्येवं वर्णिता परा पादुका पूर्वोपवर्णितगुरुचरणाभिन्नैव।

## शिष्यः

अद्य संक्रमित इति स्वायम्भुववचनं शिष्यस्य मुख्यं कर्तव्यं निर्दिशति। "यत्ते कुर्युर्न तत् कुर्याद् यद् ब्रूयुस्तत् समाचरेत्" इति वीरावलीवचनं च शिष्याय स्पष्टमादेशं श्रावयति। सिद्धयोगीश्वरीमते दीक्षाभिषेकनैमित्तिकविध्यनन्तरमपरस्मिन् दिने गुरुपूजन-मवश्यं विधेयमित्युपदिश्यते। "परेऽह्नि गुरोः कार्यो यागस्तेन विना यतः। न विधिः पूर्णतां याति कुर्याद् यत्नेन तं ततः॥ येन येन गुरुस्तुष्येत् तत्तदस्मै निवेदयेत्।" (२९। २८४-२८५) इति तन्त्रालोकेऽपि। पुस्तकाधीतविद्यानां दीक्षावर्जितानां दोषाः सिद्धामत-प्रामाण्येन तन्त्रालोके (४।६६; २६।२३) वर्णिताः। "आमोदार्थी यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत्। विज्ञानार्थी तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत्॥" (२२।४५-४६) इत्यपि मतप्रामाण्येनैव तत्र प्रतिपाद्यते। "किन्तु गुर्वाज्ञया गच्छेत्तं गुरुं न परित्यजेत्। न सिद्धि-स्तद्गुरुत्यागात् कोटिजापाद् भवेदपि॥" इति वचनं चात्र स्मर्तव्यम्। "गुरूणां भूयसां मध्ये यतो विज्ञानमुत्तमम्। प्राप्तं सोऽस्य गुरुर्दीक्षा नात्र मुख्या हि संविदि॥" (तन्त्रा० २२।४६-४७) इति च तन्त्रालोककारः[१]।

---

१. गुरुशिष्यविषयः—स्प० प्र०, पृ० १२७; त० सा०, पृ० १९१; स्वच्छन्द० I. १५-२०, II २५९-२६१; नेत्र० II. १२४; तन्त्रा० II २१२; III. ४४-८७; VIII. १३८-१४३, २००-२११; IX. १३-२७, २३५, २५४, २७७; X. २६०, २६४, २७०, ३०४-३१५; XI. ११६-१५४, १६०, १६४, १६६, १७०; मो० का०, श्लो० ९६-१००; कालो०, पृ० १५६ इत्यत्रापि द्रष्टव्यः। अत्र स्वच्छन्दमृत्युता (तन्त्रा० VIII. २३४-२३७), शास्त्रव्याख्यानम् (तन्त्रा० XI. १६४), कालवञ्चनम्, मृत्युलिङ्गानि, मृतितत्त्वविचारश्च (तन्त्रा० XI. १००-१५४), प्रमेयत्रयोदशकम् (स्वच्छन्द० II. १४५) इत्येते विषया विशेषतोऽवधेयाः। मतङ्गे योगपादे सप्तमे पटले पुरसंक्रमणम्, मृत्युभयादिनिवर्तनम्, देहत्यागविधिः, शिवपदप्राप्तिश्चेति, चर्यापादे च समयिपुत्रक-साधकाचार्याणां लक्षणम्, समयाचाराः, शास्त्रव्याख्यानम्, अन्त्येष्टिश्राद्धादयश्च वर्ण्यन्ते। एते च विषयाः प्रायः सर्वेष्वागमग्रन्थेषु चर्यापादेषु दृश्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## भोगमोक्षौ

"तत्र दीक्षैव भोगे च मोक्षे चायात्युपायताम्" (तन्त्रा० १५।१) इत्ययं सिद्धान्तो नैकत्र प्रतिपादितो दृश्यते। तत्र सपरिकरा दीक्षा, दीक्षितानामभिषेकः, अभिषिक्तो गुरुश्चेति सर्वमस्माभिर्वर्णितम्। अधुना भोगमोक्षौ वर्ण्येते।

तत्र सद्योज्योतिषा शिवाचार्येण भोगकारिकायां मोक्षकारिकायां परमोक्षनिरासकारिकायां च तावेतौ विस्तरेण वर्णितौ, अन्यत्रापि चानयोर्बहुविधं रूपमुपदृश्यते। तत्रादौ भोगः समुपवर्ण्यते ससाधनः।

### भोगः

"त्रिबन्धिचित्कलायोगभोगविश्लेषमोक्षदम्। सर्वकालक्रमार्थज्ञम्" (श्लो० १) इति भोगकारिकामङ्गलपद्ये भोगमोक्षौ सूचितौ। त्रयो बन्धा मलकर्ममायालक्षणास्ते विद्यन्ते येषां ते त्रिबन्धिनः, तेषां त्रिबन्धिनां सकलाख्यानां चिदात्मनां सोऽयं कलायोगः सूक्ष्मदेहारम्भककलादिपृथिव्यन्ततत्त्वात्मकैस्तत्तद्भुवनजदेहरूपैश्च मायीयैरवयवैः सम्बन्धः, तेन भोगं तद्विश्लेषणेन मोक्षं च शिव एव ददातीति तस्यार्थः। अयमेवार्थस्तत्त्वसंग्रहेऽप्युच्यते—"मूर्तिमधिष्ठाय हरः पुरुषाणां परहितैकदृक् शम्भुः। कुरुते च भुक्तिमुक्ती रुद्धबलत्वात् स्वतोऽसमर्थानाम्॥" (श्लो० ५०-५१) इति। ताविमौ रुरुसिद्धान्तसंसिद्धौ भोगमोक्षाविह विवेच्यौ।

तत्र—"भोगोऽस्य वेदना पुंसः सुखदुःखादिलक्षणा। तां समर्पितचैतन्यः पुमानभ्येति कर्मतः॥" इति शतरत्नधृते वचने को भोगः, कुतश्च भोग इति प्रश्नद्वयस्योत्तरं विद्यते। [1]भोगो नाम वेदना संवित्तिरनुभवः। स च भोगोऽस्य पुरुषस्य सुखदुःखादिलक्षणा वेदना। एवं च सुखवेदना, दुःखवेदना, मोहवेदना चेति त्रिप्रकारो भोगः। तां त्रिप्रकारामपि भोगरूपां वेदनां कलाभिव्यक्तचैतन्यः पुमान् कर्मवशात् प्राप्नोति। कर्मतश्च स्थूलरूपाणि शरीराणि, विषयाः शब्दादयः, करणानि बुद्ध्यादीनि—एतानि सर्वाणि भोक्तुः पुरुषस्य भोगसाधनाय प्रभवन्ति[2]। "कर्मणा तु शरीराणि" इति सर्वज्ञानोत्तरेऽप्युच्यते। "बुद्धिर्विषयाकारा सुखादिरूपा समासतो भोग्यम्। भोग्ये भोगो भोक्तुश्चिद्व्यक्तिर्भोग्यनिर्भासा॥" (श्लो० १३) इत्येवं च तत्त्वसंग्रहे भोग्यभोगयोः स्वरूपं निदर्श्यते। "भोक्तुर्भोगश्चितेर्व्यक्तिर्भोग्यच्छायानुरञ्जिता॥" (श्लो० ७३) इति

१. मतङ्गे विद्यापादे २६ पटले भोगपदार्थो विस्तरेण विवेचितः, भोगकारिकायां च। ई० प्र० वि० वि० (III. ३५९-३६९) इत्यत्र चाद्वयदृष्ट्या गोनासदृष्टान्तेन भोगपदार्थो विविच्यते।

२. "पुरुषस्य भोगहेतोः प्रधानतो विंशतिर्भवेत् त्र्यधिका" (श्लो० २४) इत्यत्र तत्त्वप्रकाशव्याख्याकारः कुमारः—"भोगस्तु भोगायतनं भूतात्मकं शरीरम्, भोगसाधनानीन्द्रियाणि, भोग्यान् शब्दादिविषयान् विना न संभवतीति भोगार्थमेषां जन्म" इति वक्ति। भूतानां तन्मात्राणां कर्मेन्द्रियाणां ज्ञानेन्द्रियाणामन्तःकरणानां च सैषा भोगाङ्गता भोगकारिकासु (श्लो० १३-७१) प्रतिपादिता।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



च भोगकारिकायाम् । भोगैकरसिकः पुमान् मायाद्यवनिपर्यन्ते तत्त्वभूतात्मवर्त्मनि स्थितो भोगान् भुङ्क्ते । अत्र तत्त्वशब्देन तत्त्वस्य भुवनानि लक्षणयोच्यन्ते । भूतशब्देन कलादिक्षित्यन्तानि भुवनजानि भोगसाधनानि भौवनशरीराणि लक्ष्यन्ते । आत्मशब्देन आत्मनः साक्षादुपकारकत्वाद् भावप्रत्ययसन्तानो गृह्यते । भावा अष्टौ धर्मादयः । प्रत्ययाश्च चत्वारः सिद्ध्यादयः । सर्वोऽयमर्थः—"वसुधाद्यस्तत्त्वगणः[1] प्रतिपुंनियतः कलान्तोऽयम् । पर्यटति कर्मवशतो भुवनजदेहेष्वयं च सर्वेषु ॥" (श्लो० २४-२५) इति तत्त्वसंग्रहकारिकया उपसंहृतः । "वसुधादिकलाप्रान्ता भोगसाधनसंहतिः । नियता प्रतिभोक्तारं परिज्ञेया मनीषिभिः ॥" (श्लो० १०२) इति च भोगकारिका ।

मलिनत्वादीशेनाधिकारावस्थेन शिवेनानन्तादिद्वारेण नुन्नानां भोगाभिमुखीकृतानामात्मनामञ्जनान्मलादेव हेतोः संसारमण्डले कर्मसंस्कारपाकानुगुणं भोगलोलिका भोगेच्छा जायते । ईश्वरोऽत्रानन्त एव, तस्यैव मायाक्षोभकत्वात् । यदुक्तं किरणे—"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" इति । तदिच्छया क्षुब्धं यज्जगद्बीजं मायाख्यम्, तस्मात् प्रसूतैरसाधारणैः सूक्ष्मदेहात्मकैः साधारणभुवनादिरूपैः साधारणासाधारणभुवनजदेहात्मभिश्च साधनैर्यो भोगो निष्पाद्यते, स च बुद्धिवृत्त्यनुरञ्जनात्मकः । बुद्धिवृत्त्या सुखदुःखमोहाध्यवसायरूपया आत्मचैतन्यस्य यदनुरञ्जनं स एव भोग इत्यर्थः । अतिवाहयत्यात्मनां कर्म भोगेन नाशयतीत्यातिवाहिकः [2]सूक्ष्मदेहः । तत्स्थमेव करणमिन्द्रियवर्गश्चेष्टते । अविभुत्वेन निराश्रये चेष्टानुपपत्तेः सूक्ष्मदेहस्थभूततन्मात्राधार एव करणवर्गश्चेष्टत इत्यभिप्रायः । किञ्च, तत्सूक्ष्मदेहस्थं करणं पुरुषार्थप्रदकर्मवशात् तस्यैव पुंसो भोगसिद्धये योनेर्योन्यन्तरं प्रयाति । अयं चातिवाहिको देहो योगिप्रत्यक्षगम्य इत्येवं पूर्वोक्त एवार्थो भोगकारिकयोरपि व्याख्यातः (श्लो० ७-८) ।

## मोक्षः

दीक्षानलप्लुष्टमलस्य जन्तोः शिवशक्तिसम्पर्काद् स्वीयं दृक्क्रियात्मकं सामर्थ्यं व्यक्तिमायाति, तन्न कदापि निवर्तते । यथा रसविद्धं ताम्रं हेमत्वमापन्नं पुनस्ताम्रतां न याति, तद्वदात्मापि शिवत्वमापद्य भूयः पशुत्वं न यातीति तदभिप्रायः । तदुक्तं स्वच्छन्दे—"रसवह्निसमायोगात् ताम्रं कालिकया युतम् । विशोधितं च तत्त्वज्ञैर्हेमत्वं प्रतिपद्यते ॥ न भूयस्ताम्रतां याति तथात्मा तु कथञ्चन । गुरुणा तन्त्रविदुषा यस्माद् वै निर्मलः कृतः ॥ न भूयो मलतां याति शिवत्वं याति निर्मलः ।" इति । "अनेन

---

१. वसुधाद्यस्तत्त्वगण इतः पूर्वं २-२४ श्लोकेषु व्याख्यातः । षडध्वप्रकरणान्तर्गते तत्त्वाध्वविचारेऽस्य विस्तरो भविष्यति ।

२. "पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥" (४०) इति सांख्यकारिकायां महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तं सूक्ष्मशरीरव्याप्तिः प्रदर्श्यते । शैवानामातिवाहिको देहस्तु वसुधादिकलान्तत्रिंशत्तत्त्वानां समाहारभूतः स्वीक्रियते । मृगेन्द्रे (विद्या० १२।३२-३४) विवरणमस्य द्रष्टव्यम् । पुर्यष्टकटिप्पणी (पृ० १३२, टी० ३) चात्र द्रष्टव्या ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



क्रमयोगेन परां केवलतां गतः। अनाद्यशुद्धिशून्यत्वात् प्राप्नोति न भवान्तरम् ॥" इति स्वायम्भुववचनमप्यत्रानुगुणम्। अनेन पुनरावृत्त्यभावरूपो मोक्षोऽत्र स्पष्टं प्रतिपाद्यते। "यथा नीता रसेन्द्रेण धातवः शातकुम्भताम्। पुनरावृत्तये न स्युस्तद्वत् त्वन्मतचोदिताः॥" इति हि भगवानवधूतसिद्धः। रौरवेऽपि—"यथा प्रदीप्तज्वलने तूलराशिः समर्पितः। दग्धो निर्वाति स तत्र न भूयः स्थूलतां व्रजेत्॥ एवं वै मण्डलं प्राप्य दीक्षामन्त्रसमुद्भवम्। न पुनर्जन्मतां[1] याति दीक्षितो मनुजोत्तमः।" इत्येवमयमेवार्थं उदाहरणान्तरेण समर्थ्यते। सेयमवस्था शास्त्रेषु जीवदवस्थायां जीवन्मुक्तिपदेन तदनन्तरं च मुक्तिपदेनोच्यते। तदत्र पूर्वं प्रतिपादितोऽमलावस्थो जीव एव जीवन्मुक्त इति, मुक्त इति चाभिधीयते।

## जीवन्मुक्तः

"यस्य जाग्रे प्रलीयन्ते सर्वे भावा सुषुप्तवत्। पर्याप्तं तस्य विज्ञानं त्रिपदं तेन लङ्घितम् ॥" इति निश्वासकारिकावचनम्, "यस्तु जाग्रदवस्थायां नियम्य सकलेन्द्रियान्। तुर्यावस्थागुणोपेतस्तां विना भावयेत् पुनः॥ स जीवन्मुक्त इत्युक्तो देहान्ते मुक्त उच्यते।" इति सर्वज्ञानोत्तरवचनम्, "न हृष्यत्युपकारेण नापकारेण तप्यति। यः समः सर्वभूतेषु जीवन्मुक्तः[2] स कथ्यते॥" इति वचनान्तरं चास्यैव महिमानं गायन्ति। "हेलया क्रीडया वापि आदराद् वाथ तत्त्ववित्। यस्य सम्पातयेद् दृष्टिं स मुक्तस्तत्क्षणाद् भवेत्॥" इति श्रीकुले, "स मुक्तो मोचयेत् परान्" इति निशाटने, "स मुक्तो मोचयेत् प्रजाः" इति कुलरत्नमालायां च स एवार्थो वर्ण्यते।

---

१. सेयमवस्थाऽपश्चिमजन्मनाम्ना क्वचन शास्त्रेषूच्यते। शिवसूत्रविमर्शिन्यामुद्धृते कस्यचनागमस्य जलं हिमं चेति वचनेऽपश्चिमजन्मता निर्दिष्टा। यथा जलहिमयो रसतदाश्यानताभावः, एवं शिवतच्छक्त्यात्मकजन्तोश्चिद्रसतदाश्यानतासंवेदनात् परशाक्तस्फारपूतहृदयानां पश्चिमं जन्मान्तरं नास्तीति तदर्थः। स मोक्षमधिगच्छतीति भावः। अत्रापश्चिमजन्मताऽपुनर्भवतासूचिका। अपश्चिमजन्मानः प्रमातारः पर० योग० (श्लो० ९) इत्यत्र स्मृताः। तत्रत्यः (पृ० १९२) पश्चिमजन्मेति शब्दस्तु अस्मिन्नेव जन्मनि मोक्षाधिगमादन्तिमजन्मवानित्यर्थकः। शब्दोऽयं नैकेषु स्तोत्रादिग्रन्थेषु मोक्षपर्यायितयैव प्रयुज्यते। स्पन्दप्रदीपिकोद्धृते मोक्षधर्मवचने (पृ० ८८) मोक्षो भवान्तपदेनोक्तः। शैवागमसंमतो मोक्षविचारः सर्वदर्शनसंग्रहे (पृ० ६१, ६४, ७७-७९, ८१), शैवदर्शनबिन्दौ (पृ० २५), तन्त्रा० (III. २३९), परमार्थ० (पृ० १५९, १७४, १८७-१८८), स्पन्द० राम० (पृ० १५६), वि० भै० (पृ० ११९-१२०), रौरव० (I. १८४-१८५), मतङ्ग० (विद्या० १७।६६-६९) च द्रष्टव्यः।

२. जीवन्मुक्तस्य जीवन्मुक्तेर्मुवतस्य च स्वरूपम्—स्प०प्र० (पृ० ११५-११७), ई०प्र०वि० (II. २५८, ३०४-३०८), म० प० प० (पृ० १३०, १३६, १६८), ई० प्र० वि० वि० (I. २५. III. १८३, ३९३-३९९, ४०१-४०३), तन्त्रा० (VIII. २२१-२३७), स्वच्छन्द० (III. ३११-३२१), मतङ्ग० (I. ३५७, ३९८, ५६१-५७३), शिव० विम० (पृ० ६४-६९) इत्यत्रापि द्रष्टव्यम्। लकुलीशपाशुपतदर्शने स सिद्ध इति युक्त इति वा नाम्ना प्रोच्यते (शै० बि०, पृ० ५३)।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स जीवन्मुक्तश्च—"शिवार्कशक्तिदीधित्या समर्थीकृतचिद्दृशा। शिवं शक्त्यादिभिः सार्धं पश्यत्यात्मा गतावृतिः॥"[1] इति निश्वासकारिकापद्धत्या शक्त्यादिभिः सहितं शिवं साक्षात्करोति। आदिपदेनात्र शिवशक्त्याऽभिधीयमान-चिदचिद्रूप-समूह-तत्तत्कृत्यपञ्चक-तत्साध्यभोगमोक्षादयो गृह्यन्ते। बुद्ध्यादिविषयत्वं हि शिवस्य न भवति, तस्य पाशागोचरत्वात्। तदुक्तं मोक्षकारिकायाम्—"अन्तःकरणवृत्तिर्या बोधाख्या सा महेश्वरम्। न प्रकाशयितुं शक्ता पाशत्वान्निगडादिवत्॥" (श्लो० १०६) इति।

शिवापरोक्षज्ञानानन्तरं शास्त्रात्मकं ज्ञानमनपेक्षणीयं भवतीति—"उल्काहस्तो यथा कश्चिद् द्रव्यमालोक्य तां त्यजेत्। ज्ञानेन ज्ञेयमालोक्य पश्चाज्ज्ञानं परित्यजेत्॥" इति श्लोकेनानेन वर्ण्यते। "यदा[2] मनः परे तत्त्वे लब्धलक्ष्यं निलीयते। तदा ह्यशेष-विज्ञानं विनाशमुपगच्छति॥" इति निश्वासकारिकानुसारं हि जीवन्मुक्तावस्थायामशेष-विज्ञानं विनाशमापद्यत इति का वार्ता शास्त्रस्य। मनःशब्देनात्र चतुर्विधमनोमध्ये स्वलीनावस्थं मनो गृह्यते। मनसश्चतस्रोऽवस्थाश्च संसृष्टश्च स्वलीनश्चेत्यादिना निश्वासकारिकासु प्रपञ्चिताः।

"इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत्। संपश्यन् सततं युक्तो जीवन्मुक्तो न संशयः॥" (श्लो० ३०) इति स्पन्दकारिकायाम्, "बौद्धज्ञानेन तु यदा बौद्धमज्ञानजृम्भितम्। विलीयते तदा जीवन्मुक्तिः करतले स्थिता॥" (१।४४) इति तन्त्रालोके, "विकल्पक्षीणचित्तस्तु आत्मानं शिवमव्ययम्। पश्यति भावशुद्ध्या यो

१. श्लोकोऽयं मोक्षकारिकायामपि (श्लो० १११) दृश्यते। तत्र हि बुद्ध्युपारूढः सर्वेश्वरो भवति न वेति विचारः प्रवर्तते १०१-१११ श्लोकेषु। "मनसस्तु व्यतीतोऽयं भगवान् ध्यायते कथम्" (योग० ६।६ ) इत्यादिना मतङ्गेऽपि प्रश्नोऽयं चर्चितः।

२. "यदा मनः परे तत्त्वे लब्धलक्ष्यं प्रवर्तते" इति निश्वाससूत्रव्याख्यानावसरे शतरत्नसंग्रहकारः—"मनःशब्देन चतुर्विधमनोमध्ये स्वलीनावस्थं मन उच्यते" (पृ० ८४) इति वदति, तदनु निश्वासकारिकाभिश्च तच्चतुर्विधं मनो विवृणोति। सर्वमेतद्वचनजातमत्र प्रथमे भागे संगृहीतम्। तदनुसारं स्वलीनः, संश्लिष्टः, गतिरागतिः, विक्षिप्तश्चेति मनसश्चातुर्विध्यं प्रदर्शितम्। स्वलीने मनसि न मनो नापि मन्तव्यो न च मन्ता विभाव्यते। स्वलीनः खलु सुषुप्तिवद् विषयैर्मुक्त एकीभूतो राजते। संश्लिष्टो विषयान् गृह्णन्नपि ज्ञेयतत्त्वमधिगच्छति। अज्ञानाद् ज्ञानं गच्छति, ज्ञानाच्च पुनरज्ञानमित्येवं यः स्वदौर्बल्यवशाच्चलते, स गतिरागतिरित्युच्यते। इन्द्रियार्थपरायणस्त्रिकालमाकुलो विक्षिप्त इत्याख्यायते। एतेषु स्वलीनो गुणातीत उत्तमः, संश्लिष्टः सात्त्विको मध्यमः, गतिरागती राजसोऽधमः, चतुर्थो विक्षिप्तश्च तामसोऽधमाधमो भवति। स्वलीनस्य मनसः सुखमात्मसाक्षिकं भवति। योगविदो जना एनामेव परां योगावस्थामाहुः। "मनो यत्रैव विश्रान्त्या पूर्णभावमुपाश्नुते। अतः परं हि किं नाम शुभक्षेत्रं भविष्यति॥" इति च विज्ञानेन्दुकौमुद्याम्। मनसो माहात्म्यं मतङ्गे (विद्या० २६।५१-५६) च द्रष्टव्यम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



जीवन्मुक्तो न संशयः ॥" इति निशाटने, "सर्वं शुद्धं निरालम्बं ज्ञानं स्वप्रत्ययात्मकम् । यः पश्यति स मुक्तात्मा जीवन्नेव न संशयः ॥" इति, "निरस्य सदसद्वृत्तीः संश्रित्य पदमान्तरम् । विहाय कल्पनाजालमद्वैतेन परापरम् ॥ यः स्वात्मनिरतो नित्यं कालग्रासैकतत्परः । कैवल्यपदभाग् योगी स निर्वाणपदं लभेत् ॥" इति च कालिकाक्रमे, "ब्रह्मपदे कमलशरीरस्तदुत्थप्राणिरूपेण सर्वत्र सर्वदा विचरति" इति ई० प्र० वि० वि० धृते शिवसूत्रे—सर्वेऽष्वेतेष्वद्वैतवादप्रतिपादकेषु ग्रन्थेष्वपि यथायथं जीवन्मुक्तस्वरूपं वितन्यते ।

जीवन्मुक्तस्य कृतकृत्यस्य नित्यादिकृत्यान्तरं नास्तीति देवीकालोत्तरसूत्राभ्यां निरूप्यते—"नात्र पूजा नमस्कारो न जपो ध्यानमेव च । केवलं ज्ञेयमित्युक्तं वेदितव्यं न किञ्चन ॥" (श्लो० १८) इति, "न ध्यानं न जपः पूजा न होमो नैव साधनम् । अग्निकार्याधिकारश्च नैतस्यास्ति महेश्वर ॥" (श्लो० ६२) इति च । "यावत् तत् परमं शान्तं न विजानन्ति सुन्दरि । तावत् पूजाजपध्यानहोमलिङ्गार्चनादिकम् ॥ विदिते तु परे तत्त्वे सर्वाकारे निरामये । क्व पूजा क्व जपो होमः क्व च लिङ्गपरिग्रहः ॥" इति प्रभाकौलेऽपि पठ्यते । "नात्र शुद्धिर्न चाशुद्धिः" इत्यादीनि च रहस्यशास्त्रवचनानि मालिनीविजयेऽष्टादशे पटले द्रष्टव्यानि । "उत्सृज्य लौकिकाचारमद्वैतं मुक्तिदं श्रयेत् । स समं सर्वदेवानां तथा वर्णाश्रमादिके ॥ द्रव्याणां समतादर्शी स मुक्तः सर्वबन्धनैः ।" इत्यानन्दभैरवेऽपि जीवन्मुक्तस्य कृत्यान्तरं नास्तीति समर्थ्यते । किञ्च, "तीर्थे श्वपच-गृहे वा नष्टस्मृतिरपि परित्यजन् देहम् । ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥" (श्लो० ८३) इति परमार्थसारदृशा, "हिमवति गङ्गाद्वारे वाराणस्यां कुरौ प्रयागे वा । वेश्मनि चण्डालादेः शिवतत्त्वविदां समं मरणम् ॥" इति निर्वाणयोगोत्तरपद्धत्या च जीवन्मुक्तस्य तीर्थे श्वपचगृहे वा समं मरणं भवति । कथं नाम समं मरणमित्यस्य समाधानमपि—"पुण्याय तीर्थसेवा निरयाय श्वपचसदननिधनगतिः । पुण्यापुण्यकलङ्क-स्पर्शाभावे तु किं तेन ॥" (श्लो० ८६) इति परमार्थसारश्लोक एव प्रदर्शितम् ।

एष जीवन्मुक्तो वासनावशेन विषयज्ञानयुक्तोऽपि शिवशक्त्या स्वरूपज्ञाननिष्ठ एव भवतीति निश्वासकारिकया वर्ण्यते—"यथा वायुः सुशीघ्रोऽपि मुक्त्वाकाशं न गच्छति । ज्ञेये निक्षिप्तचित्तस्तु विषयस्थो न मुञ्चति ॥" इति । देहिनां चित्तमिन्द्रियार्थे यथा नित्यं गच्छति, तथाऽस्य जीवन्मुक्तस्य चित्तमतीन्द्रिये निर्मले नैराकृते पदे याति । क्षीरक्षयाद् यथा वत्सो मातुः स्तनान्निवर्तते, तथैव रागक्षयाज्जीवन्मुक्तानां मनो विषयेभ्यः शीघ्रं निवर्तते । "सकृद्विभातोऽयमात्मा" इति वचनानुसारं गोदोहमिषुपातं नयनोन्मी-लनमात्रं वा कालं सकृत् परपदे युक्तो जीवन्मुक्तः पुनर्भवं नाप्नोति । निश्वासकारिका-प्रतिपादितोऽयमर्थः—"गोदोहमिषुपातं वा नयनोन्मीलनात्मकम् । सकृद्युक्तः परे तत्त्वे स मुक्तो मोचयेत् परान् ॥" इति निशाटनवचनेन समर्थ्यते । "यस्मिन् काले तु गुरुणा निर्विकल्पं प्रकाशितम् । तदैव किल मुक्तोऽसौ यन्त्रं तिष्ठति केवलम् ॥" इति कुलरत्न-मालावचनमपि तदभिप्रायकमेव ।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तदवस्थायामपि [1]मलस्यावस्थानमनुमानेन गम्यत इति किरणसूत्रेणानेन प्रतिपाद्यते—"विषसंबन्धिनी शक्तिर्यथा मन्त्रैर्निरुद्धयते। तदा न तद्विषं क्षीणमेवं पुंसो मलक्षयः ॥" इति। मलक्षयवदनेकभविकं संचितं कर्मापि तस्य क्षीयत इत्यनेकभविकं कर्मेत्यादिना[2] प्रदर्श्यते।

नन्वशेषपाशविनाशिनी दीक्षाऽभ्युपगता, तथा च स्वसत्ताभिव्यक्तौ जातायां तस्मिन्नेव काले शरीरस्य पातः प्राप्नोतीति "अशेषपाशविश्लेषः" इत्यादिना समुपस्थापिताऽऽशङ्का—"जातायां घटनिष्पत्तौ यथा चक्रं भ्रमत्यपि। पूर्वसंस्कारसंसिद्धं तथा वपुरिदं स्मृतम् ॥" इति सूत्रेण निरस्यते। सुप्रभेदेऽपि—"हिङ्गुत्यक्ते तु तत्पात्रे गन्धस्तत्र न नश्यति। कुलालचक्रं कर्मान्ते यथा भ्रमति वै तथा ॥" इत्युदाहरणान्तरमुखेन सोऽयमर्थः प्रदर्श्यते। देव्यामतसूत्रे च जीवन्मुक्तस्य देहावसानस्थितिरेवं वर्णिता—"भग्ने घटे यथा दीपः सर्वतः संप्रकाशते। देहपाते तथा चात्मा भाति सर्वत्र सर्वदा ॥" इति। सुप्रभेदेऽपि—"घटगुप्तो यथा दीपो घटनाशे तु दीप्यते। घटागुप्तो यथा भानुर्मुक्तौ चापि तथा भवेत् ॥ स्वभावज्ञानतो मुक्तिः स जीवन्मुक्त एव हि। देहनाशे परा व्याप्तिर्घटनाशे तु दीपवत् ॥" इति। "प्रधानं घट आकाश आत्मा नष्टे घटेऽपि खम्। न नश्येत् तद्वदेवासावात्मा शिवमयो यतः ॥" इति त्रिशिरोमतेऽपि। "पशुः पशुत्वसंबन्धान्न मुक्तः पशुरुच्यते" इति पौष्करवचनं च मुक्तस्य पतित्वमापादयति।

## मुक्तः

देहपाते सति जीवन्मुक्तो मुच्यते। स एवामलात्मा जीवो मुक्त इत्यभिधीयते। तद्यथा—"अनाख्ये तु निरालम्बे अग्राह्ये मानवर्जिते। निस्तत्त्वे योजितो मुक्त इति शास्त्रस्य निश्चयः ॥" इति। "जगतस्तत्त्वसंबोधादज्ञानं विनिवर्तते। अज्ञानविनिवृत्तौ च रागादीनामसंभवः ॥ रागाद्युपशमात् पुंसां पुण्यपापपरिक्षयः। तत्क्षयाच्च शरीरेण न पुनः संप्रयुज्यते ॥ अशरीरं च संक्लेशैः सर्वैरेव न बाध्यते। क्लेशमुक्तः प्रसन्नात्मा मुक्त[3] इत्यभिधीयते ॥" इति च शिवधर्मोत्तरे। आत्मलाभरूपं प्राप्तस्य क्वावस्थान-

---

१. शतरत्नसंग्रहे (पृ० ९०-९१) विषयोऽयं नानाविकल्पोद्भावनपुरस्सरं व्याख्यातः। "न मूलात् कृन्तनं छेदः पाशानामिह विद्यते" इति च खेटपालः। अद्वैतमतेन मलस्वरूपं तु १३७ पृ० २ टि० निर्दिष्टस्थलेषु द्रष्टव्यम्।

२. एतच्च कर्मप्रकरणे पूर्वं व्याख्यातम्।

३. परमः (शिवः) अनादिसिद्धः। मुक्तात्मनां तु तत्प्रसादलब्धशिवत्वयोगितया ततो वैषम्यम्। तदुक्तमाचार्यैः—"मुक्तात्मानोऽपि शिवाः किन्त्वेते यत्प्रसादतो मुक्ताः। सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः ॥" (त० प्र०, श्लो० ६) इति श० र० सं० (पृ० ३) इत्यत्र प्रतिपाद्यते। "मुक्तात्मनां विद्येश्वराणां च यद्यपि शिवत्वमस्ति, तथापि परमेश्वरपारतन्त्र्यात् स्वातन्त्र्यं नास्ति" (पृ० ६६) इति च सर्वदर्शनसंग्रहे। "शिव एव तनुक्षये" (विद्या० २६।७२), "पतिरेव न संशयः" (विद्या० २६।७३), "सदाशिवसमाः सर्वे न च ते कारणेश्वराः" (योग० ५।६२) इति च मतङ्गे।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मिति स्वायम्भुवसूत्रेण प्रदर्श्यते—"भवोद्भवपदातीतो निष्कम्पार्चिरिव स्थितः। मुक्तौ व्यक्तशिवत्वोऽसौ कृतकृत्यो यतस्ततः ॥" इति। भवः संसारस्तस्मिन् उद्भवपदानि जन्मस्थानानि, तदतीतः। यद्वा भवपदं सकल-प्रलयाकल-विज्ञानाकलानां पदम्, उद्भवपदमनन्तादिपदम्, तदतीतः। अथवाऽपरमोक्षस्य षट् पदानि सन्ति—भवोद्भवपदं शान्त्यतीतं शान्तितत्त्वं नादाख्यम् ऐशं विद्याख्यमिति। तत्र सर्वोत्तरं षष्ठं भवोद्भवपदमतिक्रम्य मुक्तस्तिष्ठतीति भवोद्भवपदातीतपदस्यार्थः। पदान्येतानि शिवतत्त्वविलासे परिगणितानि—"भवोद्भवपदं त्वेकं शान्त्यतीतमतः परम्। शान्तितत्त्वं च नादाख्यमैशं विद्याख्यमेव च ॥ उदाहृतानि मुक्तानां पदान्येवं क्रमेण षट् ।" इति।

## मुक्तिः (मोक्षः)

सोऽयममलावस्थो मुक्तो जीवः शरीरपातानन्तरं [1]मुक्तिमधिगच्छति। द्वैतदर्शने शिवत्वसदृशस्वकीयशिवत्वावाप्तिरेव मुक्तिरित्यभिधीयते, न चाद्वैतवादवत् तदैक्यम्, इन्द्रादिपदप्राप्तिवत् तद्देशगमनं वेति—"पशुभावाद् यदातीत्य पतिभावेन तिष्ठति। तत् तस्य गमनं नाम सर्वगे गमनं कुतः ॥" इति सूत्रेण वर्ण्यते। स्वायम्भुवेऽपि —"दग्धसंसारबीजस्य या पुंसः पश्चिमार्थतः। सा गतिस्तस्य विज्ञेया न देशान्तरसंस्थितिः ॥" इति।

मुक्तौ भोक्तृत्वादिकमपि तस्य नास्तीति स्वायम्भुवे वर्ण्यते—"शिवधामार्पितस्यास्य भोगभोक्तुर्न जातुचित्। भोक्तृत्वमधिकारित्वं पतिकृत्यानुकारिता ॥" इति। अस्यायमर्थः—शिवस्य धाम शिवधाम, तत्समत्वमर्पितमभिव्यक्तं यस्य तस्य भोगभोक्तुः पुरुषस्य कदाचिदपि भोक्तृत्वं भोगक्रियाकर्तृत्वं यत् सकलस्य दृष्टं तन्नास्ति। अधिकारित्वं मायागर्भाधिकारित्वं यत् प्रलयाकलस्य दृष्टम्, तदपि नास्ति। पतिकृत्यानुकारिता पतीच्छाप्रणिहितव्यवहारित्वमिति यावत्, सापि सकल-प्रलयाकल-विज्ञानाकलेषु त्रिष्वपि दृष्टा तस्य नास्ति। तस्य स्वतन्त्रत्वेन परप्रेर्यत्वं नास्तीति भावः। तथा च सर्वज्ञानोत्तरे—"शिववच्छाश्वतः शुद्धः सृष्टिधर्मविवर्जितः। सत्यं सत्यं पुनः सत्यं त्रिसत्यं समयः कृतः ॥ अतः परतरं नास्ति विज्ञेयं कुत्रचिद् गुह।" इति।

मुक्तश्च जीवः शिवसायुज्यलक्षणां मुक्तिमधिगच्छति, "प्रयाति शिवसायुज्यम्" इति रौरवोक्तेः। "शिवे संयोजितं रूपं सायुज्यमिति कथ्यते" इति हि सुप्रभेदे पठ्यते। अत्र सायुज्यशब्देन शिवसादृश्यमुच्यते, न तु तादात्म्यादिसंबन्धः। यथोक्तमभियुक्तैः— "नात्मच्छेदोऽपवर्गो न च पशुशिवयोरैक्यमत्राऽपवर्गो नाविद्याग्रासहानिर्न च गुणविलयो नापि पाषाणमुक्तिः। यद् बोधानन्दरूपं त्रिमलविगमने व्यक्तमात्मस्वरूपं तत्सायुज्येन वाच्यं शिवसदृशविभोश्चैष तन्त्रापवर्गः ॥" इति। "मनोवस्थाविनिर्मुक्तं विज्ञानं मुक्तिलक्षणम्" इति च देवीकालोत्तरे। सेयं मुक्तिरेकेनैव जन्मना समर्ज्यत इति— "अनायासेन यत्रोक्ता मुक्तिरेकेन जन्मना" इति शिवधर्मे, "इहैकभविको मोक्ष एष

१. मृगेन्द्रे (विद्या० ५।६-७) साधिकारमुक्तित्रयं प्रतिपाद्यते, यो यत्राभिलषेदिति सूक्ष्मस्वायम्भुववचनं च तत्र वृत्तौ प्रमाणीक्रियते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तावत् परीक्ष्यताम्। अनेकभविका मुक्तिर्भवतां केन वार्यते ॥" इति च शिवधर्मोत्तरे प्रतिपाद्यते। अवधूतसिद्धेनापि भक्तिस्तोत्रे (श्लो० ३०) एकभविका मुक्तिः प्रकटीकृता। मुक्तिरियं शास्त्रेषु कैवल्य-निर्वाण-अपवर्ग-मोक्षादिपदैरभिधीयते। शैवशास्त्रेषु च बाहुल्येन मोक्षपदप्रयोगो भवतीति तदधुना ससाधनो विविच्यते।

## मुक्ति(मोक्ष)साधनानि

"मलादिपाशविच्छित्तिः सर्वज्ञानक्रियोद्भवः॥ मोक्षः, तत्कारणं शम्भुः, स्वशक्तिः करणं प्रभोः। पश्वात्मा मोच्यमानत्वात् कर्मकारकमिष्यते॥" (श्लो० ४४-४५) इत्येवं ससाधनो मोक्षो मोक्षकारिकायां[1] वर्ण्यते। "शिवादेवाऽऽत्मनां मोक्षः" इति दीक्षोत्तरे, "न मोक्षं याति पुरुषः स्वसामर्थ्यात् कदाचन। मुक्त्वा प्रसादं देवस्य शिवस्याशिवहारिणः॥" इति च पौष्करे पठ्यते। "पाशज्ञानान्न मुक्तिः स्यात् पशुज्ञानात् तथैव च। सर्वतश्च यतो मुक्तिः पतिज्ञानेन जायते॥" इति च स्वायम्भुवे। पाशज्ञानात् पशुज्ञानाद्वा न मोक्षः, अपि तु पतिज्ञानादेवेति सिद्धान्तो मोक्षकारिकासु—"अस्त्वात्मनीनो मोक्षो हि" (श्लो० ४६) इत्यादिना, "विदार्य शक्तिशूलेन पाशजालमणोः शिवः। सर्वज्ञानक्रियारूपं व्यनक्ति" (श्लो० ७२) इत्यन्तेन ग्रन्थेन वितानितः। ईश्वरः सर्वेषामणूनां किं साक्षान्मोक्षहेतुरुत केषाञ्चिद् व्यवधानेनेति प्रश्नोऽपि तत्रैव—"निष्कलान् सकलानष्टौ" (श्लो० ७३) इत्यादिना, "एवं सर्गेष्वतीतेषु भविष्यत्सु च शङ्करः। पुंसो मोचितवानन्यान् मोचयिष्यति चापरान्॥" (श्लो० ९५) इत्यन्तेन ग्रन्थेन समाहितः।

मोक्षे च सर्वज्ञादिगुणाभिव्यक्तिरूपा परमेश्वरसमता सिद्धान्तशैवैः स्वीक्रियते, समुत्पत्ति-संक्रान्ति-आवेशपक्षाश्च प्रत्याख्यायन्ते। तद्यथा परमोक्षनिरासकारिकायाम्—"समता च समुत्पत्तिसंक्रान्त्यावेशपक्षतः। अभिव्यक्तिः परा गीता बुद्धिवाचामगोचरा॥" (श्लो० ७) इति। न केवलं स्वयूथ्यानामेते पक्षाः, अन्येषां दार्शनिकानामपि मोक्षविषयका विचाराः—"यां सांख्ययोगविद्वांसो गतिं मोहात् प्रपेदिरे। वेदान्तज्ञानविद्वांसो गतिमिच्छन्ति वैदिकीम्॥ पाञ्चरात्ररता ये च ये च योगिमहेश्वराः। प्रमाणाग्नेयकर्तृत्वविशिखामलकारकाः। प्रवदन्ति मलासिद्धा ये चान्ये मोक्षवादिनः॥" इति

---

१. मोक्षस्य पाशागम्यत्वे पाशान्तःपातिना शास्त्रेण कथं शिवज्ञानं जायेतेति प्रश्नो मोक्षकारिकासु (श्लो० ११२-११७) समाहितः। "नवशब्दान् परित्यज्य दशमो मोक्षदायकः" इत्यत्र शब्दस्य मोक्षसाधनत्वं वर्ण्यते। पाशात्मकस्तद्भिन्नश्च शब्दः कालपादाप्रामाण्येन शिवदृष्टौ विव्रियते। "पत्युर्दानं तदेवोक्तं न स्वयं व्यज्यते पशोः" (विद्या० ४।५९) इति मतङ्गवचने ईश्वर एव मोक्षकर्ता, न स्वयं पुरुष इति साध्यते। "सदाशिवपदं योगाच्चर्यातो वाथ दीक्षया। प्राप्यते चित्तभेदेन मोक्षो वाथ चतुष्टयात्॥" (विद्या० २६।६३) इत्यत्र च ज्ञानयोगक्रियाचर्याणां समेषां मोक्षकारणत्वं वर्ण्यते। कर्मणां मोक्षसाधनत्वमस्माभिः सात्वतसंहितायां उपोद्घाते (पृ० ८) प्रतिपादितम्। मोक्षविषयकः परपक्षनिरासः परमोक्षनिरासकारिकासु मृगेन्द्रे च विद्यापादे द्वितीये पटले द्रष्टव्यः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



रौरवसूत्रव्याख्यानमुखेन ग्रन्थेऽस्मिन् प्रतिक्षिप्ता इति ते तत्रैव द्रष्टव्याः। एते च पक्षाः संक्षेपतो मोक्षकारिकायामपि समालोचिताः (श्लो० ११८-१४२)।

## मोक्षभेदाः

शास्त्रान्तरेषु वर्णितश्चतुर्विधो मोक्षः—"सालोक्यं चैव सामीप्यं सारूप्यं सायुज्यकं तथा" इत्येवं सुप्रभेदेऽपि वर्ण्यते। अत्र चर्या-क्रिया-योगानां विद्यातत्त्वादिक्रमेण शिवसालोक्य-सामीप्य-सारूप्यसम्पादकता, ज्ञानस्य च शिवसायुज्यप्रदता प्रतिपाद्यते। तदुक्तं शिवज्ञानबोधसंग्रहे—"अत्र चर्याक्रियापादं योगपादं तथैव च। ज्ञानपादं क्रमाच्चैव शिवेन परिभाषितम्॥ एतच्चतुर्विधं मार्गं सालोक्यादिफलप्रदम्।" इति। "शिवे संयोजितं चित्तं सायुज्यमिति कथ्यते" इति च सायुज्यस्य लक्षणं स्मर्यते। सिद्धान्तशैवमते शिवसायुज्यप्राप्तिरेव हि मोक्ष इत्यनुपदमेव चर्चितम्।

शतरत्नसंग्रहधृते मतङ्गे सप्तप्रकारो मोक्षः प्रतिपाद्यते। तत्र प्रथमं मोक्षः परापरभेदेन द्विविधः। तयोरपरमोक्षः षड्विधः, परस्त्वेकविधः। तद्यथा—"मोक्षः सप्तप्रकारोऽयं विभागेनोपवर्णितः। एभ्यो ह्येकः परः सूक्ष्मः कार्यकारणगोचरः॥ अतीतः परिपूर्णश्च स्वतन्त्रः सर्वतोमुखः। एको निरीश्वरः स्वस्थः षडन्ये सेश्वराः मताः॥ संरुद्धशक्तयश्चान्ये स्थूलभेदाः प्रकीर्तिताः।"[1] इति।

मृगेन्द्रे तु—"विनियोगफलं मुक्तिर्भुक्तिरप्यनुषङ्गतः। परापरविभागेन भिद्येते ते त्वनेकधा॥" (विद्या० २।९) इत्येवं भोगमोक्षयोरुभयोरपि परापरभेदेन द्वैविध्यं वर्णितम्। तदेतदेवं व्याख्यातं नारायणकण्ठेन—"भुक्तिमुक्ती परापरविभागेन बहुधा भिद्येते। तत्र परा मुक्तिः पातालादिकलान्ताध्ववर्तिविचित्रैश्वर्यसम्पन्नतत्तद्भुवनाधिपत्यम्, तत्तद्भुवनवासित्वमात्रं चापरा। एवं परा मुक्तिः परमेश्वरसाम्यम्, अपरा तु मन्त्रमन्त्रेश्वरत्वम्। आसां च यथा बहुभेदत्वं तथाग्रे वक्ष्यामः" (पृ० ६०) इति।

## अद्वयदृष्ट्या भोगमोक्षौ

सिद्धान्तशैवमतेन भोगमोक्षौ विवेचितौ। [2]कुल-कौल-क्रमादिमतान्यनुसरन्तोऽद्वैतदार्शनिकास्तु भोगमोक्षयोर्भिन्नामेव व्याख्यां व्यातेनिरे। ते हि—"यत्रास्ति भोगो नहि तत्र मोक्षो यत्रास्ति मोक्षो नहि तत्र भोगः। शिवापदाम्भोजयुगार्चकानां भुक्तिश्च मुक्तिश्च करस्थितेव॥" इत्यशेषकुलवल्लरीवचनमनुसरन्तः स्वस्वसम्प्रदायानुसारं स्वात्मदेवतां तर्पयन्तो भोगमोक्षयोरविरोधमापादयन्ति। "श्रीब्रह्मयामलेऽप्युक्तं सुरा शिवरसो बहिः। तां विना भुक्तिमुक्ती नो पिष्टक्षौद्रगुडैस्तु सा॥" इति ब्रह्मयामल-

१. मतङ्गपारमेश्वरागमः साम्प्रतं सम्पूर्णो मुद्रित इति तदीये द्वितीये भागे योगपादे (५।६३-६९) विषयोऽयं स्वयमेवाधिगन्तव्यः। मतङ्गवृत्तिस्तु तत्रत्या नोपलब्धा।

२. कुल-कौल-क्रमादिपद्धत्या बन्धमोक्षविचारः—स्प० नि० (पृ० २४-२६, ५०-५३, ७१-७४), प्र० हृ० (पृ० ४९, ५१, ६३, ७१-७४, ७७-९०, १००-१०२), शि०वि० (पृ० २०), परमार्थ० (पृ० ७२, ११८-१२०), ई० प्र० वि० (II. २८२-२९९), म० म० प० (पृ० २७), ई० प्र० वि० वि० (III. ३५५-३९९), तन्त्रा० (I. ५४, ६२, १८२; III. १७-३९; IX. ५६) इत्यत्रापि द्रष्टव्यः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



वचनम्, "मधुरसरसवोणावेणुगीतादिवाद्यश्रवणजनितहर्षः शब्दमात्रैकशेषः । तदनुभवविरामप्रस्फुरद्बोधमूर्तिर्भवविभवविमुक्तो मुक्तिमाप्नोति सम्यक् ॥" इति विषयपञ्चिकावचनं च ते प्रमाणयन्ति, "तस्या भोक्त्र्याः स्वतन्त्राया भोग्यैकीकार एव यः । स एव भोगः सा मुक्तिः स एव परमं पदम् ॥" इति च प्रबोधपञ्चदशिकादिशा भोगमोक्षयोर्लक्षणं वर्णयन्ति ।

"नान्यत्र गमनं स्थानं मोक्षोऽस्ति सुरसुन्दरि । अज्ञानग्रन्थिभेदो यः स मोक्ष इति कथ्यते ॥" इति सर्वज्ञभैरवे, "बद्धोऽथवाऽविद्यया जीवो मुक्तिस्तस्य हि तत्क्षये" इति धातुसमीक्षायाम्, "अज्ञानपङ्केऽपि तथा निरस्ते कालेन कैवल्यमुपैति देही" इति स्वात्मसंबोधे च मोक्षस्वरूपं वर्ण्यते । "अमाने शून्यनिर्भासे कस्योत्क्रान्तिः[1] क्व च क्रमेत् । यदि सर्वंगतो देवो वदोत्क्रम्य क्व यास्यति ॥" इति वीरयामले, "उत्क्रान्तिर्विद्यते तत्र" इत्यादिना "तस्मादुत्क्रान्तियोगोऽयं भ्रान्तिरेषा तमोमयी" इत्यन्तेन ग्रन्थेन च ऊर्मिकौले उत्क्रान्तिपक्षः प्रतिक्षिप्तः । "नान्यत्र गत्या मोक्षोऽस्ति सोऽज्ञानग्रन्थिकर्तनात् । तच्च संविद्विकासेन श्रीमद्वीरावलोपदे ॥" इति वीरावलीवचनम्, "मोक्षस्य नैव किञ्चिद् धामास्ति न चापि गमनमन्यत्र । अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः ॥" (श्लो० ६०) इति परमार्थसारवचनं चात्रानुगुणम् ।

"त्वदन्यन्नास्तीति प्रभवदविकल्पाद्वयमतेः स्थिरीकारो मोक्षः" इत्यद्वयोल्लासे, "मोक्षः सर्वप्रकाशनात्" इति योगसंचरे, "स्वेच्छाशास्त्रं स्वस्वभावश्च मोक्षः" इति संविदुल्लासे, "मोक्षः शङ्कापहानितः" इति रात्रिकुले च तदनुगुणमेव मोक्षस्वरूपं वर्ण्यते । अन्ये वीराश्च—"वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता" इत्यात्मसप्ततिपद्धत्या, "बन्धनं बन्धकृद् बध्यस्त्रिष्वप्येको न भिद्यते । स्वविकल्पकृतैर्बन्धैर्बध्यते त्वनिशं जगत् ॥" इति स्वस्वभावसम्बोधनदृशा च बन्धमोक्षयोः सत्ताऽवास्तवोति वदन्ति । "प्राणिनां पतनं येन तेनैवोत्पतनं स्मृतम् । अज्ञस्तु बद्ध्यते येन ज्ञाता तेनैव मुच्यते ॥" इति कुलयुक्तियुक्त्या च सर्वानेतानर्थान् द्रढयन्ति । यदत्र वक्तव्यं तत् संस्कृतिप्रकरणे विवेचयिष्यते ।

तदेवं ज्ञानेन दीक्षया वा मोक्ष इति पक्षो द्वैताद्वैतदृष्ट्या विवेचितः । कथं नाम क्रियात्मिकया दीक्षया मोक्षः सम्भवतीति तत्प्रदर्शनार्थं षडध्वशुद्धिप्रक्रियाऽधुना समुपस्थाप्यते ।

## षडध्वशोधनम्

[2]"अध्वानस्तत्त्वभुवनकलार्णपदमन्त्रकाः । यैरमी पुरुषा बद्धाः संसरन्ति भवाद् भवम् ॥" इति सिद्धान्तहृदये दृश्यते । "पाशः स्यादध्वपञ्चकम्" इति च तत्रैवा-

१. "उत्क्रान्तिगत्यागतीनाम्" (२।३।१९) इति वेदान्तसूत्रे उत्क्रान्तिपक्षः समर्थ्यते । शैवागमेषु तन्नाङ्गीक्रियते । उत्क्रान्तिपक्षनिरासस्तन्त्रा० VIII. २२१-२३७ इत्यत्रापि प्रपञ्च्यते ।

२. एते षडध्वानस्तत्त्वप्रकाशकुमारदेवव्याख्यानेऽर्थपञ्चकं पाश इति श्लोक(५)व्याख्याने नानाग्रन्थप्रामाण्येन विवृताः ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



ध्वपञ्चकस्य पाशत्वं प्रतिपाद्यते । "तत्त्वाध्वा च पदाध्वा च वर्णाध्वा भौवनात्मकः । मन्त्राध्वा च कलाध्वा च विशन्त्येकं परं शिवम् ॥" इति [1]स्वायम्भुववचने च तेषां परशिवे लयो वर्ण्यते । "मुक्तानां शिवताव्यक्तिकारणं विश्वमेव हि । शिवताव्यक्तिमार्गत्वात् ते सर्वेऽपि कलादयः ॥ अध्वशब्देन कथ्यन्ते ते सर्वे बन्धना अपि ।" इति [2]स्वच्छन्दतन्त्रवचने च तेषामध्वशब्दवाच्यता निरुक्ता । तदेतेषां षडध्वनां व्याख्यानं पर्यन्तपञ्चाशिका-विरूपाक्षपञ्चाशिका-चिद्गगनचन्द्रिका-सौभाग्यहृदय-स्वच्छन्द-विज्ञानभैरवप्रामाण्येन महार्थमञ्जरीपरिमलकारेण (पृ० ६८-७१) कृतम्, अस्माभिश्च तत्र तत्र[3] तदाधारेण शिवपुराणशैववैष्णवागमप्रामाण्येन च तद् विवृतम् । तत्र वर्णपदमन्त्राध्वानः शब्दात्मकाः, कलातत्त्वभुवनाध्वानोऽर्थात्मका इति शब्दार्थविभागेन ते व्याख्याताः । तन्त्रालोके (६-१२ आह्निकेषु), तन्त्रसारे (पृ० ४५-११२) च पुनरभिनवगुप्तो देशाध्वा कालाध्वा चेति द्विविधविभागमुखेन तानेतान् वितनोति । तत्रत्यः क्रमोऽत्र मनाग् विविच्यते ।

## कालाध्वा देशाध्वा च

"यावान् समस्त एवायमध्वा प्राणे प्रतिष्ठितः । द्विधा च सोऽध्वा क्रियया मूर्त्या च प्रविभज्यते ॥" (तन्त्रा० ६।२१-२२) इत्येवं प्रथमं देशकालभेदेनाध्वा द्विधा विभज्यते । तत्र क्रियया कालाध्वा, मूर्त्या च देशाध्वा भवति । यदुक्तमीश्वरप्रत्यभिज्ञायाम्—"मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ । क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः ॥" (२।१।५) इति । कारिकामिमां तन्त्रालोककार एवं विशदयति—"तत्र क्रियाभासनं यत् सोऽध्वा कालाह्व उच्यते । वर्णमन्त्रपदाभिख्यमत्रास्तेऽध्वत्रयं स्फुटम् ॥ यस्तु मूर्त्यवभासांशः स देशाध्वा निगद्यते । कलातत्त्वपुराभिख्यमन्तर्भूतमिह त्रयम् ॥" (तन्त्रा० ६।३४-३५) इति । "त्रिकद्वयेऽपि प्रत्येकं स्थूलं सूक्ष्मं परं वपुः । यतोऽस्ति तेन सर्वोऽयमध्वा षड्विध उच्यते ॥" (तन्त्रा० ६।३६) इत्यत्र कालाध्वनो देशाध्वनश्च स्थूल-सूक्ष्मपरत्वं निर्वर्ण्यते । "अमूर्तायाः सर्वगत्वान्निष्क्रियायाश्च संविदः । मूर्तिक्रियासाधनं यत् स एवाध्वा महेशितुः ॥ अध्वा क्रमेण यातव्ये पदे सम्प्राप्तिकारणम् ।" (तन्त्रा० ६।२९-३०) इति च तत्राध्वपदनिरुक्तिः प्रदर्शिता । अत्र—"पदानि मन्त्रारब्धानि मन्त्रा वर्णैकविग्रहाः । वर्णाः स्वनिष्ठा इत्येषां स्थूलसूक्ष्मपरात्मता ॥" इति वचनानुसारं [4]पदमन्त्रवर्णानां स्थूलसूक्ष्मपरत्वम्, "भुवनव्यापिता तत्त्वेष्वनन्तादिशिवान्तके" (४।९५) इति, "कलान्तर्भाविनस्ते वै निवृत्त्याद्यास्तु ताः स्मृताः" (४।९७) इति च स्वच्छन्दवचनानुसारं भुवनतत्त्वकलानां स्थूलसूक्ष्मपरत्वमवगन्तव्यम् ।

## कालाध्वा

तत्र कालाध्वा स्पष्टं प्राणे प्रतिष्ठितः । अयं च कालस्तत्त्वमध्यस्थितात् कालाद् भिद्यते । तद्यथा—"एष कालो हि देवस्य विश्वाभासनकारिणो । क्रियाशक्तिः सम-

१. षडध्वनां परशिवे लयः स्वायम्भुवोक्तो मृगेन्द्रक्रियापादे (पृ० १७९) द्रष्टव्यः ।
२. स्वच्छन्दवचनमेतन्महार्थमञ्जरीपरिमले (पृ० ७०) स्मर्यते ।
३. विज्ञानभैरवव्याख्याने (पृ० ६५-६९), तन्त्रयात्रायां (पृ० १४-३४) च ।
४. अन्यत्र मन्त्र-पद-वर्णानां स्थूल-सूक्ष्म-परत्वं वर्ण्यत इति विभावनीयम् ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्तानां तत्त्वानां च परं वपुः ॥"[१] (तन्त्रा० ६।३८-३९) इति। अत एवाग्रे महता प्रबन्धेन प्राणापानादिषु पञ्चसु प्राणेषु कालस्थितिं निर्वर्ण्य—"प्राणचारेऽत्र यो वर्णपद-मन्त्रोदयः स्थितः। यत्नजोऽयत्नजः सूक्ष्मः परः स्थूलः स कथ्यते॥" (तन्त्रा० ६।२१६) इत्यादिना षष्ठे सप्तमे चाह्निके वर्णमन्त्रपदानामुदयः सभेदोपभेदो वर्णितोऽभिनवगुप्तेन। तत्र प्रथमं तदनुसारं वर्णाध्वा विविच्यते।

## वर्णाध्वा

"एको नादात्मको वर्णः सर्ववर्णाविभागवान्। सोऽनस्तमितरूपत्वादनाहत इहोदितः॥ स तु भैरवसद्भावो मातृसद्भाव एव सः। परा सैकाक्षरा देवी यत्र लीनं चराचरम्॥" (तन्त्रा० ६।२१७-२१८) इति परवर्णस्वरूपं निर्वर्ण्य "ह्रस्वार्णत्रयम्" (६।२१९) इत्यादिना, "हृद्येष प्राणरूपस्तु सकारो जीवनात्मकः। बिन्दुः प्रकाशो हार्णश्च पूरणात्मतया स्थितः॥" (६।२२३) इत्यन्तेन ग्रन्थेन परवर्णोदयं निर्वक्ति। "शिवो हकार इत्युक्तः सकारः शक्तिरव्यया" इति च हंसपारमेश्वरे। अस्यामेवा-वस्थायाम्—"अनुत्तरविसर्गात्मशिवशक्त्यद्वयात्मनि। परामर्शो निर्भरत्वादहमित्युच्यते विभोः॥" (तन्त्रा० ३।२०३-२०४), "हृद्यकारो द्वादशान्ते [२]हकारस्तदिदं विदुः। अहमात्मकमद्वैतं यः प्रकाशात्मविश्रमः॥" (तन्त्रा० ६।२३८), "प्रकाशस्यात्मविश्रान्ति-रहंभावो हि कीर्तितः" (अ० प्र० सि० २२) इत्यनया दिशाऽहंरूपेण प्रकाशस्यात्म-विश्रान्तिरनुभूयते।

ततः [३]सूक्ष्मवर्णोदयमुक्त्वा सः—"एकाशीतिमिमामर्धमात्राणामाह नो गुरुः॥ यद्वशाद् भगवानेकाशीतिकं मन्त्रमभ्यधात्। [४]एकाशीतिपदा देवी शक्तिः प्रोक्ता शिवा-

---

१. अस्य श्लोकस्य व्याख्यानमत्रत्येष्वेव ३९-४५ श्लोकेषु द्रष्टव्यम्। अस्य परापरादयो भेदाः स्वच्छन्दे वर्ण्यन्ते—"अपरः षोडशो यावत् कालः सप्तदशः परः। परापरस्तु यः कालः स प्रियेऽष्टादशः प्रभुः॥" (४।३२९) इति, "कालो द्विधाऽत्र विज्ञेयः सौरश्चाध्यात्मिकः प्रिये" (७।२) इति च। अस्य प्रपञ्चस्तत्रैव द्रष्टव्यः।

२. अकारहकारयोः स्वरूपं तन्त्रालोके तृतीयाह्निके (पृ० ७५-८३, १९५, २१०) इत्यत्र द्रष्टव्यम्। तत्रैव तयोरनिच्छत्वमनच्कत्वं च प्रतिपाद्यते (पृ० १६७-१६९, २०७-२१०)। कुलगुह्वर-नवशतीशास्त्रवचनमप्यत्र द्रष्टव्यम्। सर्वमेतदत्राप्यग्रे वर्णयिष्यते।

३. सूक्ष्मवर्णोदयप्रक्रियायां दिनरात्रिक्रमे त्रैयम्बकसन्तानगुरुपक्षः श्रीसन्तानगुरुपक्षश्च तन्त्रा० (६।८८-८९) इत्यत्र वर्ण्यते। वर्णोदयक्रमः संकेतपद्धतितन्त्रसद्भावादिग्रन्थे-ष्वपि प्रतिपादित इति नि० उ० (पृ० ६३-६७) इत्यत्र तत्परिशिष्ट(पृ० ४०२)-साहाय्येन च ऋजुविमर्शिन्यादिषु द्रष्टव्यः।

४. "एकाशीतिपदा देवी ह्यत्रान्तर्भावयिष्यते" (तन्त्रा० ३।१९७) इत्यनेनाप्येकाशीति-पदानां वर्णेष्वेवान्तर्भावोऽभिनवगुप्तस्याभिप्रेत इति गम्यते। "एकाशीतिपदा देवी" (विद्या० ७।३१) इति मतङ्गेऽपि वर्ण्यते, किन्तु तत्र क्रियापादे (१।५८-११७) व्योमव्यापिमन्त्राङ्गत्वेन ८१ पदानां विस्तरेण विनियोगः प्रदर्श्यते। व्याख्यातानि चेमानि पदानि तत्रैव उपोद्घाते (पृ० ८३-९१) नानागमप्रामाण्येन।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



त्मिका ॥ श्रीमातङ्गे'' (६।२२६-२२८) इति वक्ति। अत्र जयरथः—''तेन कादीनां त्रयस्त्रिंशदर्धमात्राः, ह्रस्वानां दश, दीर्घाणां द्वात्रिंशत्, प्लुतानां षडित्येकाशीतिरर्धमात्राणामिति।....अस्याः परस्या मन्त्रमातुरेकाशीतिमात्रासद्भावात्। एकाशीतिकमिति। तावत्संख्याकपदारब्धत्वात्'' (पृ० १८४) इति व्याचख्यौ। ''तत एव परामर्शो यावत्येकः समाप्यते। तावत्तत्पदमुक्तं नो सुप्तिङ्नियमयन्त्रितम् ॥'' (६।२२९-२३०) इत्यत्राभिनवगुप्तोऽपि सिद्धान्तशैवागमसंमतान्येकाशीतिपदानि संकेतयति। तदनन्तरं स क्षकारं व्याख्याय (६।२३४-२३६) वर्णानां पञ्चाशत्संख्यां पूरयति। स्थूलवर्णोदयव्याख्यानावसरे (६।२४१-२४९) स वर्गाष्टकवर्गनवकपक्षौ वर्णपञ्चाशिका-एकोनपञ्चाशिकापक्षौ च निर्दिश्य प्रकरणमेतदुपसंहरति।

सप्तमे च चक्रोदयाह्निके तेन बीज-पिण्ड-पद-मालामन्त्राणां विद्यानां चोदयक्रमो निर्दिष्टः। ''एकाशोतिपदोदारशक्त्यामर्शात्मकस्ततः। [1]विकल्पः शिवतादायी पूर्वमेव

---

१. विकल्पं न समाश्रयेदित्यूर्मिकौलवचने विकल्पपदेन मनसोऽस्थिरत्वं सूच्यते। शङ्कापर्यायतया तद् व्याख्यातुं शक्यते। शिवसूत्रविमर्शिनीधृतकालिकाक्रमे सुखदुःखादिविज्ञानान्येव विकल्पपदेनोक्तानि। अविद्यावृततया नानाविधविकल्पैः संकुल आत्मा शिवात्मकं स्वात्मस्वरूपं नैव प्रत्यभिजानाति।

क्षुत्तृट्प्रभृतयोऽनुभावा मानसा विकल्पा भवन्ति, अन्यथा तत्पृष्ठभाविनो बुभुक्षेयमित्यादिकस्य विकल्पस्योदयो न भवेत्। सविकल्पकमानसप्रत्यक्षविषयत्वेऽपि तेषां न कश्चिद् दोषः, तस्य वस्त्वात्मकत्वेन प्रमाणत्वाभ्युपगमात्। एवं शिवोऽपि मानसप्रत्यक्षगोचरो भवति, किन्तु शक्तिद्वारेणेति विशेषः। एवं च समनस्कममनस्कं चेत्युभयविधमपि रूपं भवति।

''सर्वो विकल्पः संसारो नान्यो बन्धो विकल्पतः'' इति नारदसंग्रहवचने संकल्पस्य बन्धरूपत्वमुच्यते। बन्धनमित्यादिके स्वस्वभावसंबोधनश्लोकेऽपि जगत् स्वविकल्पकृतैर्बन्धनैर्बद्धचत इति कथ्यते। अत एवात्मसप्ततौ वस्तुतो न बन्धः, बन्धाभावान्मोक्षोऽपि नास्ति, एतावुभावपि विकल्पघटिताविति वर्ण्यते। अत एव च विकल्पयोनयः शब्दा विकल्पाः शब्दयोनय इत्युच्यते। वागेवास्या इति संवित्प्रकाशश्लोकेऽपि वाचं विना न विकल्पस्योद्भवः सम्भवतीति स्पष्टमेवोच्यते।

संवित्प्रकाशे तु विकल्पः संशुद्धाद् विज्ञानाद् भिन्नो नास्ति, अत एव स्वात्मनि निर्विकल्पात्मना सर्वोऽपि विकल्पोऽवतिष्ठत इति प्रतिपाद्यते। सर्वो विकल्प इति नारदसंग्रहवचनस्य चैवं व्याख्यानमत्र क्रियते यत् सृतेरसत्त्वं शुद्धायाः संविदश्च सत्त्वमङ्गीकर्तव्यमिति। अत एव यस्मिन् काले गुरुणा निर्विकल्पं प्रकाशितम्, तदैव किल शिष्यो मुच्यत इत्येवं कुलरत्नमालायां निर्विकल्पस्य शुद्धसंवित्स्वरूपत्वमेव स्वीक्रियते। निर्विकल्पः सिद्ध्यति, सविकल्पास्तु क्लिश्यन्त इति च (त्रिक)-सारशास्त्रे। विकल्पोज्झितचित्ता वीरा मानवा भावशुद्ध्याऽव्ययं शिवं पश्यन्ति, जीवन्मुक्ताश्च भवन्तीति निशाचारे। एवं च विकल्पः शिवतादायीत्यत्र शुद्धो विकल्पः शिवतादायीति योजनीयम्। सोऽयं शुद्धो विकल्पस्तन्त्रा० (I. ८९, ११६-



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



निरूपितः ॥" (७।३७-३८) इति तत्राप्येकाशीतिपदानामुल्लेखो विद्यते, किन्तु वर्णैर्मन्त्राणामिव मन्त्रैः पदानां कथं नाम समुत्पत्तिर्भवतीति न दृश्यते, प्रत्युत सूक्ष्मवर्णोदयप्रकरणे (६।२२६-२२७) एकाशीतिपदं मन्त्रमिति ब्रुवन् मतङ्गशास्त्रं च प्रमाणयन् स पदानामेव मन्त्रजनकत्वं निर्दिशतीवेति क्रमस्यास्य निर्धारणे कारणानि मृग्यानि। अस्माभिश्च तावता वर्णाध्वविवेचनानन्तरं पदाध्वा विवेचयिष्यते। ततः प्रागन्यत्रोपलब्धा वर्णाध्वसंबद्धा सामग्री संकल्यते।

संकेतपद्धत्यादिनानाग्रन्थसाहाय्येन मातृकास्वरूपविमर्शोऽस्माभिः (नि० षो० उपोद्घाते, पृ० ६२-६९) कृतः, प्रकाशविमर्शात्मकयोरकारहकारयोः स्वरूपं च किञ्चिदिव विवेचितम्। अत्रानुत्तरतत्त्वव्याख्यानमुखेन वर्णस्वरूपं विचार्यते।

### अनुत्तरतत्त्वम्

"नौम्यनुत्तरनाथस्य रश्मिचक्रमहं सदा। अनाहतहतोत्तीर्णो महाविषमचिद्गतिः। [1]वीरसंघट्टनोद्युक्तो रावो देव्या विराजते॥" इत्यादिष्वनुत्तरनाथः[2] स्तूयते। "न सन्न चासत् सदसन्न च तन्नोभयोज्झितम्। दुर्विज्ञेया हि सावस्था किमप्येतदनुत्तरम्॥" इति भर्गशिखावचने तच्चतुष्कोटिविनिर्मुक्तं भण्यते। परात्रिंशिकाव्याख्यायां महता डम्बरेण तद् बहुधा व्याख्यायते। "अनुत्तराद्या प्रसृतिर्हान्ता शक्तिस्वरूपिणी। प्रत्याहृताशेषविश्वाऽनुत्तरे सा विलीयते॥" (तन्त्रा० ३।२०४-२०५) इति दिशाऽनुत्तरादेव परमतत्त्वात् सर्वं प्रसरति, तत्रैव च विलीयते। "अथ ब्रह्म परं शुद्धमादिवर्णत्वमागतम्" इत्यागमवचनेऽपि तदेवोच्यते। अनुत्तरात् सविसर्गाज्जगत उत्पत्तिर्विज्ञानभैरवेऽपि—"वर्णस्य सविसर्गस्य" इत्यत्र वर्णिता, "अबिन्दुं सविसर्गं च अकारं जपतो महान्। उदेति देवि सहसा ज्ञानौघः पारमेश्वरः॥" इति च तत्रैवोक्तम्। "यदत्राद्यमवर्णाख्यं स शिवः परमेश्वरः" इत्यादिनाऽद्वयसम्पत्तिवार्त्तिकेऽपि शब्दब्रह्मात्मना तत् स्तूयते। "पराक्षरतरोर्धातुर्नानाशक्तेर्विवर्तगाः। शक्तयो वर्णदेहेषु वक्त्राद्वर्णत्व-

१२१; III. २, ११५-११८, १२४, ३१०; ७।३१-३८), ई० प्र० वि० (I. ३०४-३२४), म० म० प० (पृ० २३), ई० प्र० वि० वि० (I. ४१, ११२-११८; II. २७३), ने० उ० (II. १८२) इत्यादिषु बौद्धादिमतान्तरसमालोचनपुरस्सरं व्याख्यातः।

१. "वीरो नाम विविधमीरयति विश्ववैचित्र्यमिति भगवान् शब्दराशिभट्टारक एव" (पृ० ६८) इति म० म० प०। "इदन्तारिपोरहमि समराङ्गणे प्रलयप्रतिपादनपरा वीराः" (पृ० ७६) इति च यो० हृ० दी०। परापञ्चाशिकायां च—"अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः। पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम्॥" (श्लो० ५०) इति।

२. अनुत्तरपदस्यार्था अनुत्तरतत्त्वं च शैवदर्शनबिन्दौ (पृ० १५०-१६१) इत्यत्र वर्ण्यन्ते। शि० स्तो० वि० (पृ० ४९), स्प० नि० (पृ० ६७-७४), वि० भै० वि० (पृ० ७६-८१), प० त्रि० वि० (पृ० १९, २८-२९, ९८, १२०-१२५, १२९, १५६, १६७-१८४, १९२, १९८, २७२), त० सा० (पृ० १४१), म० म० प० (पृ० १७०), तन्त्रा० (II. ७४, III. ३३७) इत्यत्रापि च।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मागताः ॥" इति च कालपरायां वर्ण्यते । "ककारादिक्षकारान्ता वर्णास्ते शिवरूपिणः" इति मातृकाहृदयवचनेऽपि वर्णानां शिवस्वरूपत्वं निगद्यते ।

तदेतस्मादनुत्तरात् तत्त्वादखिलवर्णोत्पत्तिप्रक्रिया तन्त्रालोके तृतीयाह्निके वितत्य प्रदर्शिता तन्त्रसारे संगृहीताऽत्र प्रदर्श्यते । तथा हि—

"तत्र मुख्यास्तावत् तिस्रः परमेश्वरस्य शक्तयः—अनुत्तरः, इच्छा, उन्मेष इति । तदेव परामर्शत्रयम् अ इ उ इति । एतस्मादेव त्रितयात् सर्वः शक्तिप्रपञ्चश्चर्च्यते । अनुत्तर एव हि विश्रान्तिरानन्दः, इच्छायामेव विश्रान्तिरीशनम्, उन्मेष एव हि विश्रान्तिरूर्मिर्यः क्रियाशक्तेः प्रारम्भः । तदेव परामर्शत्रयम् आ ई ऊ इति । अत्र च प्राच्यं परामर्शत्रयं प्रकाशभागसारत्वात् सूर्यात्मकम्, चरमं परामर्शत्रयं विश्रान्तिस्वभावाह्लादप्राधान्यात् सोमात्मकम् । इयति तावत् कर्मांशस्यानुप्रवेशो नास्ति ।

यदा त्विच्छायामीशने च कर्मानुप्रविशति यत्तदिष्यमाणमीश्यमाणमिति च उच्यते, तदाऽस्य द्वौ भेदौ । प्रकाशमात्रेण रश्रुतिः, विश्रान्त्या लश्रुतिः, रलयोः प्रकाशस्तम्भस्वभावत्वात् । इष्यमाणं च न बाह्यवत् स्फुटम्, स्फुटरूपत्वे तदेव निर्माणं स्यात् । न इच्छा ईशनं वा । अतोऽस्फुटत्वादेव श्रुतिमात्रं रलयोः, न व्यञ्जनवत् स्थितिः । तदेतद् वर्णचतुष्टयमुभयच्छायाधारित्वान्नपुंसकम्—ऋ ॠ ऌ ॡ इति ।

अनुत्तरानन्दयोरिच्छादिषु यदा प्रसरस्तदा वर्णद्वयम् ए ओ इति । तत्रापि पुनरनुत्तरानन्दसंघट्टाद् वर्णद्वयम् ऐ औ इति । सेयं क्रियाशक्तिः । तदेव च वर्णचतुष्टयम् ए ऐ ओ औ इति । ततः पुनः क्रियाशक्त्यन्ते सर्वं कार्यभूतं यावदनुत्तरे प्रवेक्ष्यति, तावदेव पूर्वं संवेदनसारतया प्रकाशमात्रत्वेन बिन्दुतयाऽऽस्ते—अं इति । ततस्तत्रैवानुत्तरस्य विसर्गो जायते—अः इति । एवं षोडशकं परामर्शानां बीजस्वरूपमुच्यते ।

तदुत्थं व्यञ्जनात्मकं योनिरूपम् । तत्रानुत्तरात् कवर्गः, श्रद्धाया इच्छायाश्चवर्गः, सकर्मिकाया इच्छाया द्वौ टवर्गस्तवर्गश्च, उन्मेषात् पवर्गः । शक्तिपञ्चकयोगात् पञ्चकत्वम् । इच्छाया एव त्रिविधाया य-र-लाः, उन्मेषाद् वकारः । इच्छाया एव त्रिविधायाः श-ष-साः, विसर्गाद् हकारः, योनिसंयोगजः क्षकारः । इत्येवमेष भगवाननुत्तर एव कुलेश्वररूपः । तस्य चैकैव कौलिकी विसर्गशक्तिः, ययाऽऽनन्दरूपात् प्रभृति इयता बहिः सृष्टिपर्यन्तेन प्रस्पन्दतो वर्गादिपरामर्शा एव बहिस्तत्त्वरूपतां प्राप्ताः ।

स चैष विसर्गस्त्रिधा[1]—आणवश्चित्तविश्रान्तिरूपः, शाक्तश्चित्तसम्बोधलक्षणः, शाम्भवश्चित्तप्रलयरूप इति । एवं विसर्ग एव विश्वजनने भगवतः शक्तिः ।" (पृ० १२-१७) इति ।

---

१. 'तत्त्वरक्षाविधानेऽतो विसर्गत्रैधमुच्यते" इत्यादिना संगृहीतोऽयमर्थोऽत्र द्वितीये भागे (पृ० ५७) । तन्त्रालोकेऽन्यत्रापि—"त्रिविधो विसर्ग इत्थं संघट्टः प्रोदितः शान्तः ॥ विसृजति यतो विचित्रः सर्गो विगतश्च सर्ग इति । श्रीतत्त्वरक्षणे श्रीनिगमे त्रिशिरोमते च तत्प्रोक्तम् ॥ कुण्डं शक्तिः शिवो लिङ्गं मेलकं परमं पदम् । ताभ्यां सृष्टिः संहृतिस्तद्विसर्गस्त्रिविधो गमे ॥" (२९।१४०-१४२) इत्यादिना विसर्गत्रैधं व्याख्या-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



**कामतत्त्वं विषतत्त्वं च**

अभिनवगुप्तस्तन्त्रालोके—"विसर्ग एवमुत्सृष्ट आस्थानत्वमुपागतः। हंसः प्राणो व्यञ्जनं च स्पर्शश्च परिभाष्यते॥ अनुत्तरं परं धाम तदेवाकुलमुच्यते। विसर्गस्तस्य नाथस्य कौलिकी शक्तिरुच्यते॥" (३।१४२-१४३) इत्यादिना विसर्गं व्याख्याय, तदास्थानदशैव हकार इति च प्रदर्श्य—"अत एव विसर्गोऽयमव्यक्तहकलात्मकः। कामतत्त्वमिति श्रीमत्कुलगुह्वर उच्यते॥" (३।१४६) इत्येवं विसर्गहकारयोः कामतत्त्वत्वम्, "काकचञ्चुपुटाकारं ध्यानधारणवर्जितम्। विषतत्त्वमनच्काख्यं तव स्नेहात् प्रकाशितम्॥" (३।१६९) इत्यत्र च सकारस्य विषतत्त्वत्वं व्याख्यातवान् कुलगुह्वरप्रामाण्येन। "अव्यक्ता नादमात्ररूपत्वादनुद्भिन्नवर्णप्रविभागा येयं हकला हकारार्धार्धभागः, तदात्मकोऽयं विसर्गः। .... काम इच्छा, तस्य तत्त्वं सर्वत्रैवाप्रतिहतस्वभावं पूर्णं रूपमुच्यते" (पृ० १४७-१४८) इति व्याख्याय जयरथोऽत्र नास्योच्चारयिता, नादाख्यम्, सुसूक्ष्मः, यत्तदक्षरम्, निन्दानन्द०, अतिसौख्य० इत्यादिवचनप्रामाण्येन विसर्गस्य तत्स्थूलरूपस्य हकारस्य च कामतत्त्वत्वं स्फुटीकृतवान्। "तत एव सकारेऽस्मिन् स्फुटं विश्वं प्रकाशते॥ अमृतं च परं धाम योगिनस्तत्प्रचक्षते। क्षोभाद्यन्तविरामेषु तदेव च परं पदम्॥ सीत्कारसुखसद्भावसमावेशसमाधिषु। तदेव ब्रह्म परममविभक्तं प्रचक्षते॥" (३।१६५-१६७) इत्यत्र च स्वयमभिनवगुप्तो विषतत्त्वात्मकस्य सकारस्य स्वरूपं वितताम। परात्रिंशिकायां पराबीजोद्धारे—"तृतीयं ब्रह्म सुश्रोणि" (श्लो० १०) इत्यत्र सकारस्य ब्रह्मरूपत्वं वर्णितम्। "तृतीयं ब्रह्म सकारः, यद्गीतम्—ॐ तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" (भ० गी० १७।२३) इति हि तत्र जयरथः (पृ० १६६)।

"यदेतत् कामतत्त्वं तु विषतत्त्वं तदेव हि" इति कुलगुह्वरवचनं विशदयन् तन्त्रालोककारः—"कामस्य पूर्णता तत्त्वं संघट्टे प्रविभाव्यते॥ विषस्य चामृतं तत्त्वं छाद्यत्वेऽणोश्च्युते सति॥" (३।१७०) इति भणति। अत्र विवेककारः—"कामतत्त्वस्य प्राणरूपत्वम्, विषतत्त्वस्य चापानरूपत्वम्, अत एवानयोर्हकारसकारात्मत्वम्" (पृ० १६८-१६९) इत्याह, सहौ, ऊर्ध्वे बिन्दू इति कुलगुह्वरोद्धरणद्वयेन च तत्समर्थितवान्। एवं वैशिष्ट्येऽप्यनयोः प्राणनरूपत्वमुभयत्रापि संभवतीत्यैक्यरूपेण निर्देशः, यदभिप्रायेण कामतत्त्वस्यैव विषतत्त्वत्वेन भगवतोऽभिधानम्। अतः कामतत्त्वस्य पूर्णता स्वात्ममात्रविश्रान्तेरनन्याकाङ्क्षिता नाम पारमार्थिकं रूपं परस्परसामरस्यात्मसंक्षोभावसरे सर्वैरेव साक्षात्क्रियते। विषतत्त्वस्याप्यणोः परिमितस्य देहादिमातुः

---

यते। अत्र निगम इति गम इति चैकस्यैव ग्रन्थस्य नामनी स्तः। "नित्यं विसर्गपरमः स्वशक्तौ परमेश्वरः। अनुग्रहात्मा स्रष्टा च संहर्ता चानियन्त्रितः॥" इति च त्रिकहृदये। "आनन्दशक्तिविश्रान्तमनुत्तरमिहोच्यते" (१।२४२) इत्यादिना तन्त्रालोके तद्विवेके च सिद्धातन्त्र-मालिनीमतप्रामाण्येन विसर्गोऽयं व्याख्यायते। तथा च सिद्धातन्त्रे—"स विसर्गो महादेवि यत्र विश्रान्तिमर्हति। गुरुवक्त्रं तदेवोक्तं शक्तिचक्रं तदुच्यते॥ तदेव सर्वमन्त्राणामुत्पत्तिस्थानमुत्तमम्॥" इति। "तस्मादनुत्तरो देवः स्वाच्छन्द्यानुत्तरत्वतः। विसर्गशक्तियुक्तत्वात् संपन्नो विश्वरूपकः॥" (३।१९५-१९६) इति च तन्त्रालोके।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्वाभाविकपूर्णदृक्क्रियावारके पारमित्यात्मनि छाद्यत्वे च्युते वेद्यवेदकविभागविगलनात् पूर्णे रूपे समुदिते सत्यामृतं विकासदशामयं तत्त्वं प्रविभाव्यत इति च श्लोकस्यास्य व्याख्यानम् (पृ० १६९-१७०)।

न केवलमस्य कामतत्त्वत्वं विषतत्त्वत्वं वा, यावन्निरञ्जनत्वमपीत्याह तन्त्रालोककारः—[1]"निरञ्जनं परं धाम तत्त्वं तस्य तु साञ्जनम्" (३।१७१) इति, "इच्छा कामो विषं ज्ञानं क्रिया देवी निरञ्जनम्। एतत्त्रयसमावेशः शिवो भैरव उच्यते॥" (३।१७२-१७३) इति च। एवमिच्छाज्ञानक्रियाणां कामविषनिरञ्जनतत्त्वानां च भैरवस्वरूपत्वमुक्त्वा स विषतत्त्वानुप्रवेशस्य फलमाह, तत्रैव च विवेककारो यदा शून्यमिति फलश्रुतिबोधकं कुलगुह्वरवचनमुद्धृतवान्।

स्पन्दप्रदीपिकोद्धृतायां भोगमोक्षप्रदीपिकायां सूर्यसोमात्मकौ प्राणापानावेव कामविषतत्त्वे, प्राणापानप्रशान्तिश्च निरञ्जनं तत्त्वमिति भणितम्। प्राणापानयोरुपशमे हि स्पन्दतत्त्वस्योदयो भवति, तस्मादेव च सहजो मन्त्रोदयोऽपि। तत्रोद्धृतबौधायनसंहितादिवचनेषु मन्त्रोदयो वैशद्येन प्रतिपाद्यते। ऋजुविमर्शिनीकारेण शिवानन्देन (पृ० १३८,२६२) कामराज-शक्ति-वाग्भवबीजानां कामविषमोक्षात्मकत्वं प्रतिपादितम्। अर्थरत्नावलीकारो विद्यानन्दश्च (पृ० १३९,२३१,२४६) उत्तरषट्क-मतोत्तरादिप्रामाण्येन कामस्य शिवशक्त्यात्मकत्वमुक्तवान्।

एवं सत्स्वपि बहुष्वर्थेषु हकारसकारयोः प्राणापानरूपत्वमेव प्राधान्येन योगशास्त्रेषु प्रथितम्। "सहौ पक्षादिनामानावधरोत्तरचारिणौ", "प्राण एव शिखा", "आत्मा त्वादित्यहंसोऽयम्", "शशिभास्करसंयोगात्" इत्यादिकेषु कुलगुह्वर-त्रिशिरोमत-देवीसंस्थानागम-वीरावलीवचनेषु, तन्त्रालोकादिषु च तत्र तत्रानयोर्वैशद्येन वर्णनं वर्तते। "हंसं शून्यं तथा प्राणं हकारं नामभिः स्मृतम्" इति तन्त्रराजभट्टारकवचने च हकारस्य पर्याया वर्ण्यन्ते। अस्माभिश्च विज्ञानभैरवभाषाव्याख्याने "व्रजेत् प्राणः" (श्लो० १५१) इति श्लोकव्याख्यायां तदुपोद्घाते (पृ० २७-३०) च शब्दाविमौ सुविचारितौ।

**एकारः**

"अनुत्तरानन्दचितो इच्छाशक्तौ नियोजिते॥ त्रिकोणमिति तत्प्राहुर्विसर्गामोदसुन्दरम्॥" (३।९४-९५) इत्येवं तन्त्रालोके, "त्रिकोणमेकादशमं वह्निगेहं च योनिकम्। शृङ्गाटं चैव एकारं नामभिः परिकीर्तितम्॥", "यदोल्लसति शृङ्गाटपीठात् कुटिलरूपिणी" (नि०षो० ४।१२), "त्रिकोणं भगमित्युक्तं वियत्स्थं गुप्तमण्डलम्। इच्छाज्ञानक्रियाकोणं तन्मध्ये चिञ्चिनीक्रमम्॥", "एकाराकृति यद्दिव्यं मध्ये षट्कारभूषितम्। आलयः सर्वसौख्यानां बोधरत्नकरण्डकम्॥" इत्यादिषु जयरथोद्धृतेषु वचनेषु च एकारस्य स्वरूपं निर्वर्ण्यते।

१. तन्त्रालोके—"निरञ्जनमिदं प्रोक्तम्" (३।१०५) इत्यत्र औकारस्य, "भवेद्योगी निरञ्जनः" (३।१०८) इत्यत्र च तज्ज्ञातुर्निरञ्जनत्वं वर्ण्यते। "बिन्दुनादात्मकैर्देहैः शान्तैश्च शिवसम्भवैः। अतीतस्तु भवेद् देवो निरञ्जनः परः शिवः॥" इति त्रिकसारवचने च निरञ्जनं तत्त्वं वर्ण्यते। तदेतदग्रे वर्णयिष्यते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



**बिन्दुः**

विसर्गहकारवद् वर्णान्तर्गतं बिन्दुमपि वैशिष्ट्येन वर्णयत्यभिनवगुप्तः। तथा हि—"अत्रानुत्तरशक्तिः सा स्वं वपुः प्रकटस्थितम्। कुर्वन्त्यपि ज्ञेयकलाकालुष्याद् बिन्दुरूपिणी॥ उदितायां क्रियाशक्तौ सोमसूर्याग्निधामनि। अविभागः प्रकाशो यः स बिन्दुः परमो हि नः॥ तत्त्वरक्षाविधाने च तदुक्तं परमेशिना। हृत्पद्ममण्डलान्तःस्थो नरशक्तिशिवात्मकः॥ बोद्धव्यो लयभेदेन बिन्दुर्विमलतारकः। योऽसौ नादात्मकः शब्दः सर्वप्राणिष्ववस्थितः॥ अधऊर्ध्वविभागेन निष्क्रियेणावतिष्ठते।" (३।११०-११४) इत्यादिना ग्रन्थेन बिन्दुस्वरूपं निर्वर्ण्य, सोमसूर्याग्निरूपं धामत्रयं प्रमाणप्रमेयप्रमातृरूपां त्रिपुटीं च प्रदर्श्य—"अत्र प्रकाशमात्रं यत् स्थिते धामत्रये सति॥ उक्तं बिन्दुतया शास्त्रे [1]शिवबिन्दुरसौ मतः। मकारादन्य एवायम्" (३।१३३-१३४) इत्येवं प्रकरणमेतदुपसंहरति।

"ककारादिसकारान्ताद् विसर्गात् पञ्चधा स च॥ बहिश्चान्तश्च हृदये नादेऽथ परमे पदे। बिन्दुरात्मनि मूर्धान्ते हृदयाद् व्यापको हि सः॥" (तन्त्रा० ३।२२२-२२३) इत्यत्र च स बिन्दोः पञ्चधात्वं निदर्शयति। सिद्धयोगेश्वरीमते च जयरथोद्धृते बिन्दोः पञ्चधात्वमेवं व्याख्यायते—"बाह्यात्मा तु भवेदेको ह्यन्तरात्मा द्वितीयकः। तृतीयो हृदयात्मा तु नादात्मा तु चतुर्थकः॥ एवमेते महावीरे पञ्चमः परमात्मकः। बिन्दुः पञ्चविधो देवि हृत्कण्ठे च ललाटके॥ नासान्ते च तथा चान्ते बिन्दुस्तेनैव व्यापकः।" (पृ० २१०) इति।

एवं वर्णाध्वा विचारितः। अन्ते च—"शब्दराशिः स एवोक्तो मातृका सा च कीर्तिता। क्षोभ्यक्षोभकतावेशान्मालिनीं तां प्रचक्षते॥" (३।२३२) इति तन्त्रालोकवचनमुद्धृत्य प्रकरणमेतदुपसंह्रियते।

## पदाध्वा

"एकाशीतिपदा देवी ह्यत्रान्तर्भावयिष्यते" (तन्त्रा० ३।१९७) इति, "एकाशीतिमिमामर्धमात्राणामाह नो गुरुः। यद्वशाद् भगवानेकाशीतिकं रूपमभ्यधात्॥" (तन्त्रा० ६।२२६-२२७) इति च पदानां वर्णेष्वन्तर्भावं करोति भट्टाभिनवगुप्त इत्यनुपदमेवोक्तम्[2]। अन्यत्र च सः—"मन्त्राणां च पदानां च तेनोक्तं त्रिकशासने। अभिन्नमेव स्वं रूपम्" (तन्त्रा० ११।४७) इत्येवं मन्त्राणां पदानां चाभेदं वर्णयति। तद्विपरीतमभिनवगुप्तोद्धृते मतङ्गेऽन्येषु च शैवागमशासनेषु [3]प्रणवव्योमव्यापिप्रभृतीन्येकाशीतिपदानि पृथक् परिगण्यन्ते, वर्णेभ्यः पदानाम्, पदेभ्यश्च मन्त्राणामुत्पत्तिरङ्गीक्रियते। कुमारेण—"अध्वपञ्चकं पाशः" (श्लो० ५) इति तत्त्वप्रकाश-

---

१. विषयोऽयं वर्णस्य सविसर्गस्येति श्लोकव्याख्यायां शिवोपाध्यायेनापि प्रतिपाद्यते।

२. अत्रैव १७६-१७८ पृष्ठानि तत्रत्या टिप्पणी चावलोक्यताम्।

३. एकाशीतिपदानामर्थो रौरवे (I. १८६) द्रष्टव्यः। मतङ्गपारमेश्वरं चात्र (क्रिया० १५८-११७) अवलोकनीयम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पाठान्तरं व्याकुर्वता गुरुदेवपद्धतिमनुसृत्य षडध्वनां विस्तृतः परिचयः समुट्टङ्कितः। गुरुदेवपद्धतिश्चेयमनन्तशयनसंस्कृतग्रन्थमालायामीशानशिवगुरुदेवपद्धतिनाम्ना चतुर्षु भागेषु मुद्रिता। तत्र तृतीये भागे (पृ० १४९-१७०) षडध्वनिर्णयो नाम सप्तदशः पटलो वर्तते। अत्रत्या सामग्री संक्षिप्ता कुमारटीकायां संगृहीता। एकाशीतिपदानां नामान्यस्मिन् पटले न सन्ति। तानि मन्त्रपादात्मके द्वितीयभागे (पृ० १७२-१७४) सन्ति। कुमारेण त्वेकाशीतिपदानां नामान्यन्यस्मादेव कस्माच्चिद् ग्रन्थाद् गृहीतानि। तेषु तेष्वागमेषु दीक्षाप्रकरणे षडध्वशोधनप्रसङ्गे[1] पदानामेषां नामग्राहमुल्लेखो विद्यते। सर्वेषामेषामध्ययनानन्तरमेव पदानामेकाशीतिसंख्याकानां[2] नामावली परिशुद्धा प्रस्तोतुं शक्येतेत्यधुना विरम्यतेऽस्माद् व्यापारात्।

## मन्त्राध्वा

मन्त्रस्वरूपविमर्शोऽस्माभिरन्यत्र (नि० उ० पृ० ६९-७५) कृतः। तदपेक्षया नूतनं किञ्चिदत्रोच्यते। "मननत्राणधर्माणो मन्त्राः" इति ह्याम्नायः। "मननात् त्राणधर्मासौ मन्त्रोऽयं परिकीर्तितः" इति संकेतपद्धतौ च। "चित्तं मन्त्रः" (३।१) इति शिवसूत्रे तस्याध्यात्मिकं स्वरूपं वर्ण्यते। अत एव—"संविद्देव्येव मन्त्रः" इति क्रमकेलौ प्रतिपादितम्, "देव्येव मन्त्रः" इति च भूतिराजेन प्रोक्तम्। "चिदग्निसंहार-मरीचिमन्त्रः संविद्विकल्पान् ग्लपयन्नुदेति" इति च स्तोत्रभट्टारके। तद्वदेव—"वर्णात्मको न मन्त्रो दशभुजदेहो न पञ्चवदनोऽपि। संकल्पपूर्वकोटौ नादोल्लासो भवेन्मन्त्रः॥" इति राजराजभट्टारके, "नास्ति नादात् परो मन्त्रः" इति नयसंगतौ, "मन्त्रः पदार्थोदयसंरम्भात्मा परामर्शः" (पृ० ९३) इति महार्थमञ्जरीपरिमले, "तद्विमर्शस्वभावा हि सा वाच्या मन्त्रदेवता। महासंवित् समासन्ना" इति च गम-शास्त्रे वर्ण्यते। "प्रमातृभूमिगता मन्त्राः" इति मतङ्गटीकायाम्, "मान्त्रीं शक्तिं मनसि महती देवतेत्याद्रियन्ते" इति च संविदुल्लासे मन्त्रमाहात्म्यं महीयते। "यस्माद् देवो जगन्नाथः कृत्वा मन्त्रमयीं तनुम्। मग्नानुद्धरते लोकान्" इति जयाख्यसंहिता-वचने, "अग्निरूपा मन्त्राः" इति, "मन्त्रा न मीमांस्या" इति च रौरवागमे स एवार्थः सूच्यते। "सर्वे वर्णात्मका मन्त्राः" इति तन्त्रसद्भावे, "मन्त्रा वर्णात्मकाः सर्वे" इति सर्ववीरे, "ते मन्त्रा वर्णरूपेण सबाह्याभ्यन्तरोदिताः" इति च सङ्कर्षणसूत्रे प्रोक्ता वर्णात्मका मन्त्राः "पशुभावे स्थिता मन्त्रा केवलं वर्णरूपिणः। सौषुम्णेऽध्वन्युच्चरिताः पतित्वं प्राप्नुवन्ति ते॥" इति हंसपारमेश्वरदिशा पशुभावे स्थिताः सन्तोऽपि सौषुम्णेऽ-ध्वन्युच्चरिताः पतित्वं प्राप्नुवन्ति।

तन्त्रालोके चक्रोदयाह्निके मन्त्रस्वरूपविवेचनावसरे—"बीजपिण्डादिकं सर्वं संविदः स्पन्दनात्मताम्॥ विदधत् परसंवित्तावुपाय इति वर्णितम्।"...एकानुसन्धान-

१. सात्वतादिपाञ्चरात्रसंहितासु जाग्रत्स्वप्नसुषुप्तितुर्याख्यानि पदानि प्रदर्श्यन्ते। सात्वत-संहिताया उपोद्घातोऽत्र द्रष्टव्यः (पृ० ३८-३९)।

२. इमान्येकाशीतिपदानि विदुषा एन० आर० भट्टमहोदयेन मतङ्गपारमेश्वरस्य द्वितीय-भागस्य उपोद्घाते (पृ० ८३-९१) नानागमप्रामाण्येन विवेचितानि। अन्यविध एकाशीतिपदानां प्रस्तारश्च स्वच्छन्दे (II. ५८) द्रष्टव्यः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



बलाज्जाते मन्त्रोदयेऽनिशम् ॥ तन्मन्त्रदेवता यत्नात् तादात्म्येन प्रसीदति ।'' (७।२-५) इत्युच्यते। अत्राभिनवगुप्तो योगिनीकौल-सिद्धामत-विंशतिकत्रिक-स्वच्छन्दतन्त्र-मालिनीतन्त्रप्रामाण्येन मन्त्रोदयं चक्रोदयं च व्याख्याय—''मन्त्रचक्रोदयज्ञस्तु विद्या-चक्रोदयार्थवित्। क्षिप्रं सिद्धयेदिति प्रोक्तं श्रीमर्द्धिशतिके त्रिके ॥'' (७।५६) इत्येवं प्रकरणमेतदुपसंहरति। एवं हि मन्त्रा वीर्यवत्तमा भवन्ति। मन्त्रवीर्यं च संवित्स्तोत्रे—''आदिमान्तिमगृहीतवर्णराश्यात्मिकाहमिति या स्वतः प्रथा। मन्त्रवीर्यम्'' इत्येवं व्याख्यातम्। ''चक्रशूलाम्बुजादीनां प्राणिनां सरितां नृणाम्। ....यो निवेशस्तु वर्णानां तद्वीर्यं तत्र मन्त्रगम् ॥'' इति त्रिकहृदये, ''अर्थस्य प्रतिपत्तिर्या ग्राह्यग्राहकरूपिणी। सा एव मन्त्रशक्तिस्तु वितता मन्त्रसन्ततौ ॥'' इति च त्रिकसारे मन्त्रवीर्यमेव व्याख्यायते। मन्त्रवीर्ये हि प्रबुद्धे—''किङ्करत्वं च गच्छन्ति मन्त्रा मन्त्राधिपैः सह'' इति त्रिकसारदिशा, ''दर्शयत्यात्मसद्भावमेवं मन्त्राहुतिं विना'' इति वैहायसीपद्धत्या च मन्त्राः साधकस्य वशिनो भवन्ति। अत एव सिद्धयोगीश्वरीमते मन्त्रवीर्यगोपन-मावश्यकमिति सुदृढं प्रतिपाद्यते। मन्त्रवीर्यगुप्त्यर्थमेव रहस्यमन्त्रान् बहिर्न प्रकाशयेदिति ज्ञानोत्तरे, ''स्वमन्त्ररक्षणं यत्नात् सर्वदा कारयेत् सुधीः'' इति च सिद्धामते प्रोच्यते। एवं वीर्यबलोपेता मन्त्रास्तन्त्रालोके (२३।२२-३९) देव्यायामलप्रामाण्येन महामन्त्रा इति परिभाष्यन्ते। मन्त्रवीर्ये हि प्रबुद्धे सति—''पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्धयति कदाचन'' इति श्रीकण्ठीसंहितापद्धत्या साधकमन्त्रयोर्भेदो विलुप्यते, गुरुदेवतामनूना-मात्मनश्चैक्यं चकासते।

मन्त्रा आदिमान्त्यविहीनाः सिद्धिदा न भवन्तीति सिद्धयोगीश्वरीमत-श्रीकण्ठी-संहितादिषु प्रतिपाद्यते। पुस्तकाधीतमन्त्राश्च निष्फला भवन्तीति सिद्धामतप्रामाण्येन तन्त्रालोके (२६।२२-२४) विस्तार्यते। एवमेव—''उच्चार्यमाणा ये मन्त्रा न मन्त्रांश्चापि तान् विदुः'' इति सर्वज्ञानोत्तरपद्धत्या केवलमुच्चार्यमाणा मन्त्रा न भवन्ति। ते हि—''पुण्ड्रेक्षोरिव मन्त्रस्य माधुर्ये हृदयस्पृशि। ऋजीषमानने तिष्ठत्यक्षरोच्चारलक्षणम् ॥'' इति संविदुल्लाससरण्या ऋजीषकल्पा भवन्ति। मन्त्रा हि—''मन्त्राः स्युर्भुवि पार्थिवाः। आप्ये आप्या यावदमी शिवे शिवमयाः'' इति योगसंचरदिशा तेषु तेषु तत्त्वेषु भाव्यमानास्तन्मया भवन्तीति तेषां शिवत्वसम्पादनाय यत्नो विधेयः।

तदेवंप्रभावस्य मन्त्रस्याराधनम्—''कुर्यान्मन्त्रात्मकं कायमष्टात्रिंशत्कलात्मकम्''[1] इति किरणागमपद्धत्या साधकेन भूतशुद्धयादिपद्धत्या दिव्यमष्टात्रिंशत्कलात्मकं देहं सम्पाद्य विधेयम्। त्रिक-कुल-क्रमयोगि मन्त्रकदम्बकं तन्त्रालोके सम्पूर्णे त्रिंशाह्निके त्रिशि-रोमत-त्रिकशासन-सिद्धयोगीश्वरीमत-मालिनीमत-तन्त्रसद्भाव-देवीपञ्चशतिका-देव्याया-मल-निश्वास-मुकुटोत्तर-श्रीसन्तानागमप्रामाण्येन लक्ष्मणगुप्त-भूतिराज-ओजराज-शम्भु-नाथादिभिर्व्याख्यातं तत्रैव द्रष्टव्यम्। एवमेव मन्त्रभूम्यां प्रवेश इत्यादयो विषया-

---

१. अष्टात्रिंशत्कलानां विवरणं रौरवे (I. १७९-१८०) द्रष्टव्यम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्त्रिशिरोमतप्रामाण्येन तत्र (५।८६-१३६) विवृताः[१]। पौष्करप्रदर्शिता मन्त्राणामुत्तमादयो भेदाः, "चण्डमन्त्रास्तु मन्त्रान्ते हुंफडन्ताः सदा मताः" इति हंसतन्त्रवर्णिताश्चण्डादयो मन्त्राश्चात्र संगृहीतेषु वचनेषु समवलोकनीयाः। "आनन्दप्रभृतेर्देवि मन्त्रमाराधयेत्तु यः। तस्यानन्दस्तु देवेशि मन्त्रेण सह जायते ॥" (७।१३२-१३३) इत्यत्र स्वच्छन्दोद्योते नन्दिशिखाप्रामाण्येन ज्ञानव्याप्त्या प्राणव्याप्त्या च मन्त्राराधनमुक्तम्[२]।

**मन्त्रजपः**

तन्त्रालोके चक्रोदयप्रकरण एव—"कुर्यात् प्राणसमं जप्यम्" इति सिद्धयोगीश्वरीमतप्रामाण्येन योगिनीकौलग्रन्थं च समुद्धृत्य जपविचारः प्रस्तुतः (७।४०-४१), एवमेव जप्ता मन्त्राः सिद्धिदा भवन्तीति चोक्तम्। "मालामन्त्रेषु सर्वेषु मानसो जप उच्यते। उपांशुर्वा" (७।४५) इत्यत्र विवेके स्वच्छन्दप्रामाण्येन मानसः, उपांशुः, शाब्द इति त्रिविधो जपो व्याख्यातः, "अधमस्तु जपः प्रोक्तः प्राणसंख्याविवर्जितः" (पृ० ४०) इति चोक्तम्। शाब्दो जप एव निगद इति, वाचिक इति च तत्र तत्रोच्यते। सोऽयं त्रिविधो जपोऽस्माभिरन्यत्र (नि० उ०, पृ० १०८) प्रदर्शितः। पाञ्चरात्रीये लक्ष्मीतन्त्रे तु—"वाचिकं क्षुद्रकर्मार्थमुपांशुः सिद्धिकर्मणि। मानसो मोक्षलक्ष्मीदो ध्यानात्मा सर्वसिद्धिकृत् ॥" (३९।३५) इत्येवं जपस्य चातुर्विध्यं वर्ण्यते। शैववैष्णवशाक्तागमेषु जपस्य योगाङ्गता चर्च्यते। अत्र वर्णितो ध्यानात्मा जपो योगाङ्गतयैव नेयः। अस्य विवरणं सात्वतसंहिताया उपोद्घाते 'सात्वतीयो योगः' (पृ० ४३-४८) इति प्रकरणे द्रष्टव्यम्। द्वितीयभागसंगृहीतेषु पराख्य-पौष्कर-सिद्धनाथपादवचनेष्वपि त्रिविधो जपो निर्दिश्यते, तस्योत्तममध्यमाधमभेदाश्च प्रदर्श्यन्ते। "जनिपालनधर्मेण जपेन" (श्लो० ५६) इति सुभगोदयवासनावचने जपस्य निरुक्तिः कृता, "एकस्य मन्त्रनाथस्य अन्तर्बाह्योदितस्य च। यदैक्यं तं जपं विद्धि" (१४।६९) इति जयाख्यावचने तस्य स्वरूपं प्रदर्शितम्, "शक्तौ नियोजयेन्मन्त्रं जपस्तु सफलीभवेत्" इति तत्त्वरक्षाविधानवचने, "विषुवत्कं जपं कुर्यात्" इति वैहायसीवचने च तस्य विधानमुक्तम्।

योगिनीहृदयवरिवस्यारहस्यादिषु त्रैपुरतन्त्रेषु यथा हृल्लेखायामवस्थाशून्यविषुवद्भावनमुखेनान्तरं जपस्वरूपं व्याख्यायते, तथैव स्वच्छन्दतन्त्रे [३]प्रणवपदैका-

१. तन्त्रालोके बहुरूपमन्त्रः (III. २४७), मन्त्रसंनिधानस्य एकादश हेतवः (X. २२२-२२३), मन्त्राः परामर्शात्मिका अपि लिपिबद्धा न सिद्धिदाः (X. ३३६), मन्त्रमाहात्म्यम् (XII. १७४), सप्तविधा मन्त्रमूर्तिरथवा विन्दुनादात्मिका व्याप्तिः (XII. १७९) इत्येते विषया अपि द्रष्टव्याः। बहुरूपमन्त्रः स्वच्छन्देऽपि (III. १०३, १२१) वर्ण्यते।

२. मन्त्रविषयकः प्रपञ्चः—स्प० नि० (पृ० ४५), प्र० हृ० (पृ० ९७-९८), शि० वि० (पृ० २१-२९), ई० प्र० वि० वि० (II. १७४) इत्यत्र, रौरवे (I. ९, II. १७), अजिते (I. १३२), कालोत्तरे (पृ० २४-२६, १०६-१२४, १४३-१४६), स्वच्छन्दे च प्रथमचतुर्थपञ्चमपटलेषु द्रष्टव्यः।

३. पदैकादशिकाविवरणं नेत्रतन्त्रेऽपि (II. २८४-३१३) समवलोकनीयम्।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



दशिकायां शून्यसामरस्यविषुवदादिभावनमुखेन तदुपर्वाणितम्। पदैकादशिका च—"अकारश्च उकारश्च मकारो बिन्दुरेव च। अर्धचन्द्रो निरोधी च नादो नादान्त एव च॥ शक्तिश्च व्यापिनी चैव समनैकादशी स्मृता। उन्मना च ततोऽतीता तदतीतं निरामयम्॥" (४।२५५-२५६) इत्येवं तत्र वर्णिता। अत्र हृदयादिनादान्तमपरम्, हृदयाद्युन्मनान्तं परं निष्कलमन्त्रमुच्चारयेदिति हि शैवक्रम इत्यादयो विषयाः प्रशान्तकालविषुवादिषु वैशिष्ट्यादीनि च तत्रैव क्षेमराजव्याख्याने द्रष्टव्यानि[1]।

## देशाध्वा

एवं क्रियाशक्तिमयः कालाध्वा विचारितः, अथ मूर्तिवैचित्र्यजो देशाध्वा निरूप्यते। तत्र समस्त एवायं मूर्तिवैचित्र्याभासनशक्तिजो देशाध्वा संविदि विश्रान्तः, तद्द्वारेण शून्ये बुद्धौ प्राणे नाडीचक्रानुचक्रेषु बहिः शरीरे यावल्लिङ्गस्थण्डिलप्रतिमादौ समस्तोऽध्वा परिनिष्ठितः। तदेनम्—"ज्ञात्वा समस्तमध्वानं तदीशेषु विलापयेत्। तान् देहप्राणधीचक्रे पूर्ववद् गालयेत् क्रमात्॥ तत्समस्तं स्वसंवित्तौ सा संविद् भरितात्मिका। उपास्यमाना संसारसागरप्रलयानलः॥" (तन्त्रा० ८।७-८) इति दिशा विलाप्य साधकः स्वसंविदाकारो भवेत्। अस्यार्थो दीक्षोत्तर-स्वच्छन्दशासन-त्रिशिरःशासन-देव्यायामलप्रामाण्येन वर्णितस्तत्रैव (८।९-१८) तद्विवेके च द्रष्टव्यः। तदस्मिन् देशाध्वनि स्थूल-सूक्ष्म-पराणां भुवनतत्त्वकलानां स्थितिः पूर्वं वर्णिता। तेनैव क्रमेण तन्त्रालोके (८-११ आ०) अध्वत्रयमेतद् वर्णितम्। वयं त्वत्र ग्रन्थान्तरसंवादाय पर-सूक्ष्म-स्थूलक्रमेण कलातत्त्वभुवनानां स्वरूपमुपस्थापयामः।

## कलाध्वा

तत्त्वेषु वर्गशो यदनुगामि रूपं तत्कला[2], एकरूपकलनासहिष्णुत्वात्। तद्यथा पृथिव्यां निवृत्तिः, निवर्तते यतस्तत्त्वसर्ग इति। जलादिप्रधानान्ते वर्गे प्रतिष्ठा, कारणतयाऽऽप्यायनपूरणकारित्वात्। पुमादिमायान्ते विद्या, वेद्यतिरोभावे संविदाधिक्यात्। शुद्धविद्यादिशक्त्यन्ते शान्ता, कञ्चुकतरङ्गोपशमात्। एतदेवाण्डचतुष्टयं[3] पार्थिव-प्राकृत-मायीय-शाक्ताभिधम्। पृथिव्यादिशक्तीनामत्रावस्थानेन शक्तितत्त्वं यावत् परस्पर्शो विद्यते, स्पर्शस्य च सप्रतिघत्वमिति तावति युक्तमण्डत्वम्। शिवतत्त्वे शान्त्यतीता, तस्योपदेशभावनार्चादौ कल्यमानत्वात्। स्वतन्त्रं तु परं तत्त्वम्, तत्रापि

---

१. योगमार्गनिरूपकः सततोदितो मन्त्रजपः (परा० अभि०, पृ० २७३-२७५), त्रिविधो जपः (स्वच्छन्द० I. २८३), षोढा जपः (ई० प्र०वि० वि०, II. २६१), सप्तविधो जपः (तन्त्रा० XI. ५८), जप आमर्शश्च (तन्त्रा० XI. ६२), कथा जपः (शि० वि०, पृ० ५५) इत्येते विषया अपि दर्शनार्हाः।

२. कलापदनिरुक्तौ पक्षान्तराणि तन्त्रालोके (११।४-७) समवलोकनीयानि।

३. अण्डचतुष्टविवरणं वि० प० (श्लो० १९-२१), प० सा० (पृ० ९), त० सा० (पृ० ६४), मालिनी० (पृ० १२), ई० प्र० वि० वि० (III. ३१६) इत्यत्र पश्यत। "अण्डं च नाम भुवनविभागस्थितिकारणम्। प्राहुरावरणं तच्च शक्त्यन्तं यावदस्ति हि॥" (११।१२-१३) इति चाण्डलक्षणं तन्त्रालोके।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



यदप्रमेयं तत्कलातीतम्। एवं च निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीता चेति पञ्च कला भवन्ति। इमाः कला अत्र पठिता विद्याकला च तत्त्वान्तःपातिन्या कलया विद्यया च भिन्नाः सन्ति, विद्याकलायां हि पुमादिमायान्तानां तत्त्वानां विलयो भवति, यत्र हि विद्यातत्त्वं कलातत्त्वं चान्तर्भूते स्तः। एताभ्यो मुख्याभ्यः पञ्च-कलाभ्यः सकलानां तत्त्वानां भुवनानां चोत्पत्तिर्भवति, तत्रैव च तानि विलीयन्ते। "कलास्ता बिन्दुवृत्तयः" (श्लो० ८५) इति तु रत्नत्रये वर्ण्यते।

## तत्त्वाध्वा

पति-पशु-पाशपद्धत्या पूर्वं तत्त्वानि विवेचितानि। अधुना षट्त्रिंशत्तत्त्वपद्धत्या तानि व्याख्यायन्ते। "यत् कतिपयकतिपयभेदानुगतं रूपं तत् तत्त्वम्" (पृ० ६९) इति तल्लक्षणमुच्यते तन्त्रसारे। "स्वस्मिन् कार्येऽथ धर्मौघे यद्वापि स्वसदृग्गुणे॥ आस्ते सामान्यकल्पेन तननात् व्याप्तृभावतः। तत् तत्त्वं क्रमशः पृथ्वीप्रधानं पुंशिवादयः॥" (९।४-५) इति च तन्त्रालोके। मतङ्गपारमेश्वरे च—"तत्त्वं यद्वस्तुरूपं स्यात् स्वधर्मप्रकटात्मकम्। तत्त्वं वस्तुपदं व्यक्तं स्फुटमाम्नायदर्शनात्॥ यदच्युतं स्वकाद् वृत्तात् ततं चात्मवशं जगत्। ततमन्येन वा न स्यात् तत् तत्त्वं तत्त्वसन्ततौ॥" (५।३-४) इति तत्त्वलक्षणं वर्णितम्। अन्यत्र तु—"आ महाप्रलयस्थायि सर्वप्राण्युपभोगकृत्। तत्त्वमित्युच्यते तज्ज्ञैर्न शरीरघटाद्यतः॥" इति तल्लक्षणमुच्यते। तत्त्वप्रकाशेऽपि—"आप्रलयं यत् तिष्ठति सर्वेषां भोगदायि भूतानाम्। तत् तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः॥" (श्लो० ७३) इति तदनुकारि लक्षणं दृश्यते। परमार्थसारटीकायां योगराजेन—"तन्यते सर्वं तन्वादि यत्र तत् तत्त्वम्, तननाद्वा तदाप्रलयम्, तस्य भाव इति वा तत्त्वम्" (पृ० ३१) इत्येवं तत्त्वपदस्य त्रिविधा व्युत्पत्तिः प्रदर्शिता। गुरु-देवाचार्येणापि—"ततत्वात् सन्ततत्वाच्च तत्त्वानीति ततो विदुः। ततत्वं देशतो व्याप्तिः सन्ततत्वं च कालतः॥ लक्षादियोजनव्यापि तत्त्वमा प्रलयात् स्थितम्। अन्यथा घट-कुम्भादिरपि तत्त्वं प्रसज्यते॥" इत्येवं तत्त्वलक्षणमुक्तम्।

### परतत्त्वम्

षट्त्रिंशत्तत्त्वात्मकं जगत्। अत्र च शिवतत्त्वमप्यन्तर्भूतम्। तदतीतं परतत्त्व-मित्यत्र प्रायः सर्वे तन्त्रागमसम्प्रदायाः समानाभिप्राया दृश्यन्ते। तथाहि—"भारूपं परिपूर्णं स्वात्मनि विश्रान्तितो महानन्दम्। [1]इच्छासंवित्करणैर्निर्भरितमनन्तशक्ति-परिपूर्णम्॥ सर्वविकल्पविहीनं शुद्धं शान्तं लयोदयविहीनम्। यत् परतत्त्वं तस्मिन् विभाति षट्त्रिंशदात्म जगत्॥" (श्लो० १०-११) इत्येवं परमार्थसारे परतत्त्व-स्वरूपं वर्ण्यते। "अनाश्रितादिभूम्यन्ता भूमिकाः प्रतिपद्यते" (श्लो० ६) इति पर्यन्त-पञ्चाशिकायामप्युच्यते। "तदीयस्पन्दविलासात्म षट्त्रिंशत्तत्त्वमयं जगत्" इति च शाम्भवदीपिका। तदिदं परतत्त्वं तत्त्वातीतमिति, शून्यमिति, अहमिति, परशिव

---

१. "इच्छासंवित्करणैर्निर्भरितमिति इच्छाज्ञानक्रियाशक्तिस्वभावमेव, न पुनः शान्तब्रह्म-वादिनामिव शक्तिविरहितं जडकल्पम्" (पृ० ३२) इति तत्रैव योगराजो व्याचष्टे।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



इति, निरञ्जन इति, भैरव इति च नामभिस्तत्र तत्र प्रसिद्ध्यति। तद्यथा—"मात्रा-धर्मात्रात् परमम्" इति ज्ञानामृतरसायनवचने, "तत्त्वं यतो भवेद् यत्कारणमापूरकं च तत्त्वस्य। कथिता व्यवस्थितिर्यन्निखिलानामेव तत्त्वानाम्॥" (श्लो० ७४) इति तत्त्वप्रकाशवचने च तत्त्वातीतं[1] परतत्त्वं वर्ण्यते। "स्वतन्त्रं परिपूर्णं च शिवाख्यं शून्यधाम तत्। तत्त्वानि यत्र लीयन्ते यस्मात् समुदयन्ति च॥" इति विमर्शदीपि-कायाम्, "निरालम्बो निरुत्साहः शून्यभूतः[2] शिवः स्वयम्" इत्यनुत्तरभट्टारके, "शिव-

---

१. प० सा० (पृ० ८१-१०२), ई० प्र० वि० (II. २०१, २८०), म० म० प० (पृ० ११), ई० प्र० वि० वि० (II. ३३९, ४०७-४३९) इत्यत्रापि विषयोऽयं द्रष्टव्यः। भावनाकरणादीनां तत्र निरवकाशतेति च तन्त्रा० (VII. १४७) इत्यत्र वर्ण्यते। सर्वदर्शनसंग्रहे रसेश्वरदर्शने रसस्य परब्रह्मसरूपत्वं साध्यते (पृ० ८३)। तत्त्वातीतस्य तत्त्वात्मकं स्वरूपं तत्र मतमतान्तरप्रदर्शनं चारुरुक्षोर्योग्यतानुरूपक्रमप्रदर्शनार्थमिति शिवदृष्टौ (पृ० २०५) द्रष्टव्यम्। तत्त्वातीतं सप्तत्रिंशमष्टात्रिंशं च तत्त्वम्—म० म० प० (पृ० ६७), ई० प्र० वि० वि० (II. २०४), तन्त्रा० ६।१८१, ११।२१-२८) इत्यत्र विव्रियते। कुलरत्नमालाप्रोक्तानि ३८ तत्त्वान्यत्रैव किल व्याख्यातानि।

२. क्षेमराजः स्पन्दनिर्णये सर्वालम्बनधर्मैश्चेति नागार्जुनोक्तं शून्यतालक्षणम्—"सत्यम्, यदि चिदानन्दघना स्वतन्त्रा पारमार्थिकी भित्तिभूता भूरभ्युपेयते, यथा विज्ञानभैरवादौ दिक्कालकलनातीतेत्यादिना पारमेश्वरीं पारमार्थिकीं भित्तिभूतां चिद्भूमिमवस्थाप्य शून्यभावनोक्ता, अन्यथा न शून्यमिति शून्यैवेयमुक्तिः" (पृ० २७) इत्येवं समालोच्य स्पन्दप्रदीपिकास्मृतमालोकमालावचनं च समुद्धृत्य वक्ति—"तत्तु सत्यम्, त्वादृशामविज्ञेयाऽविज्ञेयत्वाद्वक्तुमशक्येत्युच्यताम्। शून्यतेति तु कुतः? शून्यतापि च यावद्भाव्यते तावद्विकल्पोल्लिखितत्वादसौ विज्ञेयैव। यदि च त्वादृशां सा ज्ञातुमशक्या तदा तत्पदसाक्षात्काराभिज्ञसद्गुरुसपर्या कार्या, न तु शून्यतेति स्वमनीषिकयैव व्यवहृत्यात्मा परश्वागाधे महामोहे निक्षेप्तव्यः" (पृ० २८) इत्याह। शिवोपाध्यायस्तु विज्ञानभैरवव्याख्यायामालोकमालाप्रतिपादितमेव शून्यं चन्द्रज्ञान-विमर्शदीपिकाप्रामाण्येन समर्थयति। एतच्चोद्धरणद्वयमस्माभिस्तत्रैव (श्लो० १२४, १३१) व्याख्यातम्। शिवोपाध्यायोद्धृते वीरयामलेऽपि सर्वगतः शिवो देवः शून्यनिर्भासः प्रोक्तः। "अशून्यं शून्यकल्पं च तत्त्वं किमपि शाम्भवम्" इति संविदुल्लासवचनेऽपि शाम्भवं तत्त्वं शून्यकल्पमुच्यते। तन्त्रालोके तद्विवेके (१।७५-७७) च किरणशास्त्रप्रामाण्येन शिवतत्त्वस्य शून्यत्वं परिभाषितम्, "बिन्दुर्नादस्तथा शक्तिः शून्यत्वे परिकल्पिताः" इति चोक्तम्। तत्रैव ऊर्मिमहाशास्त्रे सोमानन्दादिभिश्च शिवदृष्ट्यादौ शिव एव शून्यत्वेन निर्दिष्टः (२।४८) इति, "शून्यमेवंविधं ज्ञेयं गुरुतः शास्त्रतः स्वतः" इति च किरणागमप्रामाण्येन प्रोक्तम् (४।४१)। सर्वालम्बनधर्मैश्चेति वचनं नागार्जुनकृतौ माध्यमिककारिकायां नोपलभ्यते। एवं चात्र प्रतिपादिता शून्यता तान्त्रिकदर्शनसंमतैवेति मन्तव्यम्। अत एव स्पन्दप्रदीपिकाकारेणापि (पृ० ९७)

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


तत्त्वं कथं शून्यम्''''शिवः शून्यः'' इति किरणागमे, ''शून्यनिर्भासः शिवः'' इति वीरयामले, ''अशून्यं शून्यकल्पं च शाम्भवं तत्त्वम्'' इति संविदुल्लासे च शून्यात्मकं परतत्त्वं निर्दिश्यते। ''विश्वात्म विश्वोत्तीर्णं च स्वतन्त्रं दिव्यलक्षणम्। [1]अहमित्युत्तमं तत्त्वम्'' इति विमर्शदीपिकावचने विश्वात्म विश्वोत्तीर्णं चाहमिति तत्त्वं व्यातन्यते। ''तत्त्वातीतः परः शिवः'' इति वातुलोत्तरे, ''शान्त्यतीतं परं तत्त्वम्'' (३।३२) इति मतङ्गे, ''शान्त्यतीतः परः शिवः'' इति स्वायम्भुवे च [2]परशिवो वर्ण्यते। ''शिववस्तु परं तस्मान्मन्त्रातीतो निरञ्जनः। सर्वज्ञः सर्वगः शान्तः सर्वात्मा सर्वतोमुखः॥'' इति चिन्त्यागमे, ''निरञ्जनः परः शिवः'' इति त्रिकसारे, ''परातीतो निरञ्जनः'' (११।१४),

---

विधिमुखेनैव व्याख्यातावुक्तौ श्लोकौ। ऊर्ध्वशून्यमित्यादिके वासुदेववचने च त्रिविधं शून्यं भाव्यते। त्रिशून्यं कालोत्तरे (पृ० १३७) महाशून्यं शून्यातिशून्यं वा ई० प्र० वि० वि० (II. ६३-६५, III. ३३१) इत्यत्रापि व्याख्यायते, वि० भै० (पृ० २७, ११०),स्व०उ०(७।७) इत्यत्र च।

१. विरूपाक्षपञ्चाशिकायाम्—''ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति। एतेऽहन्तायाः किल पर्यायाः सद्भिरुच्यन्ते॥'' (श्लो० ८) इत्येवमहन्तायाः पर्यायाः सूच्यन्ते, ''स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ। अहमिति स एव उक्तोऽहन्ता स्थितिरीदृशी तस्य॥'' (श्लो० १०) इति चाहन्तायाः स्वरूपं प्रदर्श्यते। विश्वाहन्ता परिमिताहन्ता चेति भेदद्वयवती सेयमहन्ता, सैव चेदन्तारूपेणापि प्रथत इति सम्पूर्णे ग्रन्थे विषयोऽयं वर्ण्यते, अहं प्राण इत्यादिके हंसभेदवचने च। ''अन्तर्गता हि प्रकाशव्यक्तिरिदमिति विश्राम्यति, बहिर्गता चाहमिति। एतद्द्वयं सर्वजनप्रसिद्धमनपह्नवनीयम्'' इति च शम्भ्वैक्यदीपिकायाम्। अविद्याकृतसंकोचेति षाड्गुण्यविवेकवचने, एतावतैव भेदोऽस्येति संवित्प्रकाशवचने, अहमिति पिशाच एष इति तपस्विराजवचने च परिमिताहन्तापुरस्कारेण विश्वाहन्ताभिव्यक्तिप्रक्रिया वर्णिता। कथं नाम परिमिताहन्ता विश्वाहन्तायां प्रविलाप्यत इति च विज्ञानभैरव-सुभगोदय-महार्थोदयपद्धत्या म० म० प० (पृ० १२७) इत्यत्र, तस्य विश्वशरीरता (पृ० ७३), विश्वोत्तीर्णता (पृ० १६६) च, ''स्वात्मैव देवता प्रोक्ता'' (पृ० ११७-११९) इति च तत्रैव प्रदर्श्यते। ''अहमित्यव्ययमव्यतिरिक्ते प्रकाशे वर्तते। तस्य भावोऽहमिति विमर्शस्वरूपमहन्ता'' (I. १०७), ''अहन्तैव हि संविदो लक्षणम्'' (I. २६५) इति च ई० प्र० वि० वि०।

२. तन्त्रालोके (१।१०६) सोऽयं परशिवः स्वसंवित्सत्तर्कपतिशास्त्रत्रिकक्रमात् परिवर्णितः। तत्र स्वसंवित् स्वानुभवः। सत्तर्को युक्तिः। पतिशास्त्रं भेदप्रधानं द्वैतशैवं मतङ्गादिशास्त्रम्। त्रिकं परादिशक्तित्रयविधायकं शास्त्रम्। क्रमः चतुष्टयार्थः। सोऽयं परमशिव उपरताधिकारोऽप्यनुपरताधिकार इति व्यासाक्षिण्यां वर्ण्यते, कलातीतः परः शिव इति च तन्त्रालोके (११।९), ''बिन्दुर्नादस्तथा शक्तिः शिवतत्त्वे व्यवस्थिताः'' (४।१९५) इति स्वच्छन्दे, षड्विधः शिव इति तन्त्रालोके (I. १००), स्वच्छन्दे (II. १७३) च। प्रधानं तत्त्वं शान्तः शिवः शक्तिश्चेति तन्त्रालोकविवेक- (१।२७४)धृतरत्नमालायाम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-JKS



इति स्वच्छन्दे "जिज्ञासारहितं स्थानं यत्र देवो निरञ्जनः" इत्यनुत्तरभट्टारके च [1]निरञ्जनः शिवो वर्ण्यते। "ह्रियते चार्प्यते तेजस्तज्ज्योतिर्भैरवात्मकम्" इत्येवमितिहासरहस्ये [2]भैरवो देवः परतत्त्वत्वेन निर्दिश्यते। "अद्वैतत्वात् सुरेशानि भैरवो गीयते भुवि" इति च लक्ष्मीकौलार्णवे। क्रमकेलौ कुलेश्वरो मन्थानभैरवः, त्रिशिरोमते च त्रिशिरोभैरवः परतत्त्वत्वेन व्याख्यातः।

तदिदं परतत्त्वमनिर्देश्यः शिव इति नन्दिशिखायाम्, [3]भगवान् शास्तेति पञ्चरात्रश्रुतौ, "अतो विश्वात्मको नाथः.... स एव च महार्थात्मा" इति पादुकोदये, भगवान्

---

१. अत्र १८१ पृष्ठस्था टिप्पणी द्रष्टव्या।

२. भैरवपदनिर्वचनं शिवतनुशास्त्रप्रामाण्येन तन्त्रा० (I. १३९-१४६) इत्यत्र, मया सर्वं रवयतीति विज्ञानभैरवश्लोकव्याख्याने च द्रष्टव्यम्। बोधभैरवस्य चत्वारः स्पन्दाः पूजारहस्ये विवृताः। भैरवस्य षट्चक्रेश्वरता च त्रिशिरोमतप्रामाण्येन तन्त्रालोके (१।११४) वर्णिता। तत्रैव—"एकवीरो....भैरवस्त्विति" (१।११०-१११) इत्यादिना परभैरवस्य स्वरूपं प्रदर्श्यते, "तस्माद्विश्वेश्वरो बोधभैरवः समुपास्यते। अवच्छेदानवच्छिद्भ्यां भोगमोक्षार्थिभिर्जनैः॥" (१।१२३) इति च प्रकरणमेतदुपसंह्रियते। स्वच्छन्दे च भैरवाष्टकम् (I. ६७; II. ६७), आमर्दकादयः श्मशानेशाश्च (I. ९७), नेत्रतन्त्रे (I. २०६) च सदाशिवतुम्बरुभैरवकुलेश्वरादिरूपेण भगवानेक एवेति। तत्रैव (I. २२३-२३८) भैरवागमसंमतं परतत्त्वं च विस्तरेण व्यावर्ण्यते।

३. "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥" (६।५।७४) इत्येवं षड्भिरेभिर्गुणैरन्वितो भगवानित्युच्यते विष्णुपुराणे। "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥" (६।५।७८) इति निरुक्त्यन्तरं च तत्रैव प्रदर्श्यते। "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि" (६।५।७९) इत्येवं च षण्णां गुणानामपि भगवच्छब्दवाच्यत्वं तत्रैव निरूप्यते। षण्णां गुणानां समष्ट्या व्यूहवासुदेवस्य, यथायथं शान्तेषु चतुर्षु गुणेषु प्रबुद्धयोश्च द्वयोर्द्वयोर्गुणयोः क्रमशः सङ्कर्षण-प्रद्युम्न-अनिरुद्धाख्यानां व्यूहानामित्येवं व्यूहचतुष्टयस्य प्रादुर्भावो भवति। सोऽयं विषयः पाञ्चरात्रागमेषु वैशद्येन प्रतिपाद्यते, अस्माभिश्च सात्वतसंहिताया उपोद्घाते (पृ० १९-२९) नानाग्रन्थप्रामाण्येन प्रदर्शितः।

शैवागमेषु तु—"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥" (वा० पु० १२।३३) इति दिशाऽन्यविधमेव षाड्गुण्यं माहेश्वरं वर्ण्यते। भक्तिस्तोत्रकारोऽवधूतसिद्धोऽपि गायति—"ऐश्वर्यमप्रतिहतं सहजो विरागस्तृप्तिर्निसर्गजनिता वशितेन्द्रियेषु। आत्यन्तिकं सुखमनावरणा च शक्तिर्ज्ञानं च सर्वविषयं भगवंस्तवैव॥" (श्लो० ३६) इति। "भेदः सर्वज्ञतादयो गुणाः स्वच्छन्दे (II. २७८), नेत्रतन्त्रे (I. १९६) च वर्णिताः। "भेदः सर्वज्ञतादीनां ज्ञानादीनां च नास्त्यमी। ज्ञानस्यैव धर्मतया चिद्रूपस्य स्थितिर्यतः॥" (पृ० १०३) इति वदन् स्पन्दप्रदीपिकाकार उत्पलवैष्णवः कक्ष्यास्तोत्र-षाड्गुण्यविवे-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



वासुदेव इति जाबालिसूत्रेषु, विष्णु-शिव-बुद्धादिरूपतया भगवानेक एवेति मायावामन-संहितायाम्, विष्णुरिति च सङ्कर्षणसूत्रेषु वर्ण्यते। रामश्च सकलविश्वावभासनक्रीडापरः परमात्मा त्रिशिरोभैरवप्रामाण्येन तन्त्रालोके (१।८६-८८) तद्विवेके च संतन्यते। तदेतस्य परतत्त्वस्य सच्चिदानन्दस्वरूपत्वम्—"प्रकाशमाना भासैव यद्भूतिस्तत्सदेव हि" इति सिद्धसन्तानवचनेन, "या चित् सत्तैव सा प्रोक्ता सा सत्तैव चिदुच्यते। यत्र चित्सत्तयो-र्व्याप्तिस्तत्रानन्दो विराजते॥ यत्रानन्दो भवेद् भावे तत्र चित्सत्तयोः स्थितिः।" इति रसान्वयोक्त्या च प्रज्ञायते।

अस्मादेव परतत्त्वात् षट्त्रिंशत्तत्त्वात्मकस्य[1] जगतः प्रादुर्भावो भवतीति तान्यत्र व्याख्यायन्ते। एतेषु पञ्चतत्त्वानि शुद्धानि, सप्त शुद्धाशुद्धानि, शिष्टानि चाशुद्धानीति शास्त्रेषु वर्ण्यन्ते। तदनुसारमेवात्र [2]शिवादिपृथिव्यन्तानि तानि निर्दिश्यन्ते।

## शुद्धतत्त्वानि

"शुद्धानि[3] पञ्च तत्त्वान्याद्यं तेषु स्मरन्ति शिवतत्त्वम्। शक्तिसदाशिवतत्त्वे ईश्वरविद्याख्यतत्त्वे च॥" (श्लो० २१) इत्येवं तत्त्वप्रकाशे शुद्धानि पञ्चतत्त्वानि प्रति-पाद्यन्ते। व्यापकमेकं नित्यं कारणमखिलस्य तत्त्वजातस्य। ज्ञानक्रियास्वभावं शिवतत्त्वं जगदुराचार्याः॥" (श्लो० २५) इति शिवतत्त्वस्य, "चिदचिदनुग्रहहेतोरस्य सिसृक्षोर्य आद्य उन्मेषः। तच्छक्तितत्त्वमभिहितमविभागापन्नमस्यैव॥" (श्लो० २७) इति शक्ति-तत्त्वस्य, "ज्ञानक्रियाख्यशक्त्योरपकर्षोत्कर्षयोरभावेन। यः प्रसरस्तं प्राहुः सदाशिवाख्यं बुधास्तत्त्वम्॥" (श्लो० २८) इति सदाशिवतत्त्वस्य, "न्यग्भवति यत्र शक्तिर्ज्ञानाख्योद्रिक्ततां क्रिया भजते। ईश्वरतत्त्वं तदिह प्रोक्तं सर्वार्थकर्तृ सदा॥" (श्लो० २९) इति ईश्वरतत्त्वस्य, "न्यग्भवति कर्तृशक्तिर्ज्ञानाख्योद्रेकमश्नुते यत्र। तत् तत्त्वं विद्याख्यं

---

कादिप्रामाण्येन तानेतान् द्विविधानपि षड्गुणान् समन्वयमुखेन व्याकरोतीति तत्रैव द्रष्टव्यम् (पृ० १०३-१०४)। महेश्वरपदार्थस्तत्प्रत्यभिज्ञा च सर्वदर्शनसंग्रहे (पृ० ७३-७६) विव्रियेते।

१. षट्त्रिंशत्तत्त्वात्मकं जगत्—प० सा० (श्लो० ११-३२), शुद्धाशुद्धभेदेन द्विधा विभक्तं विश्वम्—स्प० नि० (पृ० ४४-४६), संसारी जीवः—प्र० हृ० (पृ० ५९-६१), स्वशक्तिप्रचयो विश्वम्—शि० वि० (पृ० ५७), नरशक्तिशिवावेशि विश्वम्—परा० अभि० (पृ० ८०), जगत्सृष्टिवर्णनम्—स्वच्छन्द० (११।१९५-२००), म० म० प० (पृ० ५७-६०), रूपादिपञ्चवर्गात्मकं विश्वमिति सुबोधमञ्जरीवचनं चात्र द्रष्टव्यम्।

२. "व्युत्क्रमेणोपनेयोऽसौ शिवाय गमनं प्रति" इति स्वायम्भुवपद्धत्या तत्त्वसंग्रहे व्युत्क्र-मेण (पृथिवीतः शिवान्तं यावत्) तत्त्वानि वर्ण्यन्ते। स्वायम्भुवागममनुसृत्यैव हि सद्योज्योतिश्शिवाचार्यो ग्रन्थमेनं निर्मिमीते। भोगकारिकायामपि तेनायमेव क्रमः स्वीकृतः।

३. शुद्धानि पञ्च तत्त्वानि तन्त्रालोकेऽपि (९।४९-६०) व्याख्यातानि।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



प्रकाशकं ज्ञानरूपत्वात् ॥" (श्लो० ३०) इति च विद्यातत्त्वस्य[1] लक्षणं तत्र निर्दिश्यते। "चित्रशक्तिसहस्राढ्यं शिवतत्त्वं समातिकम्। विभक्तं पञ्चधा चैकं शक्त्युल्लास-विभेदतः॥" इत्यध्वसिद्धिवचने शिव एव पञ्चधा विभक्तो भवतीति प्रदर्श्यते। "पञ्चविंशतितत्त्वं च शिवतत्त्वाद् विनिर्गतम्" इति कालोत्तरे, "पञ्चत्रिंशत्तत्त्वी शिवनाथस्यैव शक्तितत्तेयम्" इति शिवतनुशास्त्रे च शिवतत्त्वादेव शिष्टानां तत्त्वाना-मुत्पत्तिर्वर्णिता। "शिवाद्यवनिपर्यन्तं सर्वं शिवमयम्" इति श्रीकण्ठीसंहितायां च। "अनादिभयमुक्तत्वात् सर्वज्ञोऽसौ शिवः" इति किरणागमे, "सर्वज्ञः सर्वकर्ता च शिवः शक्तिसमन्वितः" इति रौरवागमे, "सर्वव्यापकताभूमिर्ज्ञत्वकर्तृत्वसंमता। निजाभास-चमत्कारमयी शिवदशा स्मृता॥" इति विज्ञानेन्दुकौमुद्याम्, "प्रकाशः शिवः" इति विवेकाञ्जने, "आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः। सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे॥" इति शिवधर्मोत्तरे, "शिवः पशुपतिः प्रोक्तः" इति, "कूटस्थममृतं ब्रह्म ···· प्राहुः शिवतत्त्वं मनीषिणः" इति च सिद्धान्तहृदये, "मातृमध्यगः शिवो यागप्रियः" इति, "शिवादेवात्मनां मोक्षः" इति च ज्ञानोत्तरे शिवो वर्ण्यते। "शिव-श्चात्मनः समानजातीयः" इति च वृत्तिकारवचनम्।

"तत्त्वं वस्तुत एकं शिवसंज्ञं चित्रशक्तिशतखचितम्। शक्तिव्यापृतिभेदात् तस्यैते कल्पिता भेदाः॥" (श्लो० ३३) इत्येवं तत्त्वप्रकाशेऽपि वर्ण्यते। "पञ्चानामप्येषां नहि क्रमोऽस्तीह कालरहितत्वात्। व्यापारवशादेषां विहिता खलु कल्पना शास्त्रे॥" (श्लो० ३२) इत्यत्र च व्यापारवशादेकमेव शिवतत्त्वं पञ्चधा विभज्यत इति वर्ण्यते। तत्त्वप्रकाशकारेणात्रैव (श्लो० ३१) बिन्दुनादयोः सदाशिवतत्त्वे, विद्येशानामीश्वरतत्त्वे, मन्त्राणां विद्यानां च विद्यातत्त्वेऽन्तर्भावः प्रदर्शितः। चिदनुग्रहहेतोः स रूपाण्येता-न्यङ्गीकरोति, अत एव सर्वानुग्राहक इत्युच्यते (श्लो० ३४, २६)। सर्वानुग्राहकः शिवोऽनादिमलरुद्धशक्तीनामणूनां भुक्तये[2] मुक्तये च सामर्थ्यमादधाति। चिदनुग्रहस्त्वय-मेव यत् स शिवसमानतारूपं सायुज्याख्यं मोक्षं तस्मै प्रददाति। स च कर्मणोऽनादित्वाद् भोगमृते संसिद्धिं न यातीति तनुकरणभुवननिष्पत्तिं कुरुते।

**शुद्धाशुद्धतत्त्वानि**

"पुंसोऽज्ञकर्तृतार्थं [3]मायातस्तत्त्वपञ्चकं भवति। कालो नियतिश्च तथा कला च विद्या च रागश्च॥" (श्लो० २२) इति तत्त्वप्रकाशश्लोके शुद्धाशुद्धतत्त्वानि

१. प्रकरणेऽस्मिन् तत्त्वप्रकाशस्य टीकाद्वयमप्यवश्यं द्रष्टव्यम्।

२. अत्र—"शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः" इति किरणवचनम्, "कर्माण्यवेक्ष्य शम्भुर्मायां विक्षोभ्य शक्तिभिः स्वाभिः। प्रतिपुरुषं भोगार्थं वपूंषि करणानि चाधत्ते॥" (श्लो. ४०) इति तत्त्वप्रकाशवचनं च द्रष्टव्यम्। तन्त्रालोके च—"ईश्वरेच्छावशात् क्षुब्धभोगलोलिकचिद्गणान्। संविभक्तुमघोरेशः सृजतीह सितेतरम्॥" (९।६१) इत्येवमघोरेशः सितेतरसृष्टिकर्ता वर्ण्यते। "ईश्वरेच्छावशा-दस्य भोगेच्छा सम्प्रजायते। भोगेच्छोरुपकारार्थमाद्यो मन्त्रमहेश्वरः॥ मायां विक्षोभ्य संसारं निर्मिमीते विचित्रकम्।" (९।१४८-१४९) इति च तत्रैवोच्यते।

३. मायामाश्रित्यानन्तेशोऽशुद्धां सृष्टिमातनुत इति मायाप्रकरणे पूर्वमुक्तम्। "मायातत्त्व-सकाशात्तु सर्वमेतद् विनिर्गतम्" इति गह्वरोक्तः सृष्टिक्रमश्च तन्त्रालोकविवेके (२८।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



परिगण्यन्ते। अत्र कारणभूता माया, कार्यभूतं पञ्चकम्, तदुपहितः पुरुष सप्तम इति सप्तकत्वम्। तदुक्तं शैवरहस्ये—"माया कालो नियतिः कला च विद्याऽभिलाषकृत् पुरुषः। क्लृप्तानि सप्तधैवं शुद्धाशुद्धानि तत्त्वानि॥" इति। तत्र मायातत्त्वं पाशप्रकरणे प्रक्रान्ता मायैव। सैषा नानाविधशक्तिमयी माया[1] प्रथमं कालतत्त्वं जनयति। तच्च भाविभवद्भूतमयं जगत् कलयतीति [2]काल इत्युच्यते। शिवशक्तिकर्ममायात्मकचतुष्कजन्यः काल इति तत्र कुमारो भणति (श्लो० ४१)। तदनन्तरं मायातो नियतिर्भवति। "नियमयति येन निखिलं तेनेयं नियतिरित्युक्ता" (श्लो० ४२) इति च [3]नियतिपदनिरुक्तिः। तदनु मायातः कला निष्पद्यते। पशूनामाणवं मलमेकस्मिन् प्रदेशे संकुचय्य तेषां कर्तृशक्तिं व्यक्तीकरोतीति सा [4]कला प्रोच्यते। कालेन नियत्या च

२२४-२२६) द्रष्टव्यः। तन्त्रालोकेऽन्यत्रापि (९।१४९-१६९) माया वर्णिता, मतङ्गे (विद्या० ८ पटले) च। ई० प्र० वि० वि० (III. २९३) इत्यत्र मालिनीसारप्रामाण्येन मायातः कञ्चुकोत्पत्तिर्वर्णिता। "परमेश्वराद् गुहातः प्रवर्तते कञ्चुकस्त्रिविधः" इति च शिवतनुशास्त्रे कञ्चुकत्रैविध्यं सूच्यते। म० म० प० (पृ० ४८) इत्यत्र च क्रमोदयप्रामाण्येन कञ्चुकपञ्चकं व्यावर्ण्यते। स्वच्छन्दे (२।४३) तु मायादिनियत्यन्ता षट्तत्त्वी कञ्चुकपदेन प्रोक्ता। मायासहितं कञ्चुकषट्कं परमार्थसारे (पृ० १७), तन्त्रालोके (९।२०४) च स्वीक्रियते। "मायायामानन्त्यान्नोच्येत स्रोतसां संख्या" इति च बृहस्पतिपादः। "विचित्रानन्तकार्याणां दर्शनात् सम्प्रतीयते" (श्लो० ११५) इति च भोगकारिका। मायालक्षणम्—त० सं० (श्लो० २६), भो० का० (श्लो० ११४-१२०), शि० सू० (३।३) इत्यत्रापि द्रष्टव्यम्। "मायातोऽव्यक्तकलयोः" इति बृहस्पतिपादवचने, रौरवसंग्रहे, रौरवागमे च प्रतिपादितः सिद्धान्तस्तन्त्रालोके (९।४०) सम्यगालोचितः। ग्रन्थि-तत्त्व-शक्त्यात्मना त्रिप्रकारं मायायाः स्वरूपं तत्रैव (८।२९८-३२५) द्रष्टव्यम्।

१. मायातः प्रसूतेष्वेषु तत्त्वेषु शास्त्रभेदेन क्रमभेदो दृश्यते। तन्त्रालोके (९।४५-४८) तद्विवेके च क्रमभेदोऽयं सप्रमाणं प्रदर्श्यते, मालिनीविजयोक्तश्च क्रमस्तत्राङ्गीक्रियते (९।४९)। अस्माभिश्च तत्त्वप्रकाशोक्तः क्रमोऽत्र वर्णितः, तथापि नास्माकं तत्राग्रहः। मृगेन्द्रे विद्यापादे दशमे पटले, मतङ्गे च विद्यापादे ९-१४ पटलेषु कला-विद्या-राग-काल-नियतिक्रमेण तानि व्याख्यायन्ते।

२. कालतत्त्वस्वरूपम्—त० सं० (श्लो० २४-२५), भो० का० (श्लो० १०२-१०४), मृगेन्द्रे (विद्या० १०।१३-१४), मतङ्गे (विद्या० १२ पटले), ई० प्र० वि० (II. १२), तन्त्रा० (९।२०१-२०४) इत्यत्रापि द्रष्टव्यम्।

३. नियतितत्त्वलक्षणम्—मृगेन्द्रे (वि० १०।१४-१७), मतङ्गे (विद्या० १३ पटले), तन्त्रा० (९।२०२-२०४) च द्रष्टव्यम्। त० सं०, भो० का० इत्यत्र च नियतिलक्षणमन्वेषणीयम्।

४. कलातत्त्वलक्षणम्—त० सं० (श्लो० १७-२३), भो० का० (श्लो० ९७-१०१), मृगेन्द्रे (विद्या० १०।३-७), मतङ्गे (विद्या० ९ पटले), तन्त्रा० (९।१६७-१९१) इत्यत्र पश्यन्तु। विद्यादिचतुष्टयं कलाकार्यमिति च तन्त्रा० (९।२०३) इत्यत्र प्रतिपाद्यते।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सहितेयं कला भूततत्त्वपर्यन्तं जगत् कलयति। सेयं कलाऽभिव्यक्तकर्तृशक्तेः पुरुषस्य विषयानुभवार्थं विद्यातत्त्वं जनयति। सैषा विद्या स्वसामर्थ्येन पुरुषस्य ज्ञानशक्तेस्तिरोधानं संभिद्य विषयसमूहं दर्शयतीति सा [1]विद्येह संसारमार्गे पशोरात्मनः प्रकृष्टं करणम्। यदा सत्त्वरजस्तमोगुणात्मिका बुद्धिः सुखदुःखमोहनरूपेण परिणता भोक्तुरात्मनो भोग्या भवति, तदेयं विद्या करणं भवेत्। विषयग्रहणे तु बुद्धिरेव करणमिति विवेकः। "रागोऽभिष्वङ्गात्मा विषयच्छेदं विनैव सामान्यः। पुरुषप्रवृत्तिहेतुर्विलक्षणो बुद्धिधर्मेभ्यः॥ तत्त्वैरेभिः कलितो भोक्तृत्वदशां यदा पशुर्नीतः। पुरुषाख्यतां तदाऽयं लभते तत्त्वेषु गणनां च।" (श्लो० ४८-४९) इति च [2]रागपुरुषयोः स्वरूपमवगन्तव्यम्। तान्येतानि सप्त शुद्धाशुद्धतत्त्वानि समाख्यायन्ते।

**अशुद्धतत्त्वानि**

"अव्यक्तं मायातो गुणतत्त्वं तदनु बुद्ध्यहङ्कारौ। चेतो धीकर्मेन्द्रियतन्मात्राण्यनु च पञ्चभूतानि॥" (श्लो० २३) इत्येवमशुद्धानि तत्त्वानि परिगणितानि तत्रैव। शैवरहस्येऽपि—"अव्यक्तबुद्ध्यहङ्कृतिमनांसि चत्वारि शब्दमात्राद्यम्। श्रोत्राद्यं वागाद्यं वियदाद्यं पञ्चकं च पृथक्॥ तत्त्वचतुर्विंशतिकं त्रिगुणात्मतयैव केवलाशुद्धम्।" इत्येवं तानि परिगण्यन्ते। अव्यक्तं मायात इति तत्त्वप्रकाशश्लोके परिगणितस्य गुणतत्त्वस्याव्यक्ततत्त्वान्नात्यन्तिको भेद इति तत्त्वानामशुद्धानामुक्ता संख्या शुद्धैव।

"पुरुषस्य हि भोगार्थं कलैव तस्मात् प्रसूयतेऽव्यक्तम्[3]। अनभिव्यक्तगुणत्वादव्यपदेश्यं तदव्यक्तम्॥ अव्यक्ताद् गुणतत्त्वं प्रख्याव्यापारनियमरूपमिह। सत्त्वं रजस्तमोऽपि च सुखदुःखे मोह इत्यपि च॥" (श्लो० ५०-५१) इत्येवमव्यक्तस्य गुणतत्त्वस्य च वर्णनं विद्यते तत्त्वप्रकाश एव। तदनु—"भवति गुणत्रयतो धीर्विषयाध्यवसायरूपिणी

१. विद्यातत्त्वलक्षणम्—त० सं० (श्लो० १२-१५), भो० का० (श्लो० ९२-९६), मृगेन्द्रे (विद्या० १०।८-१०), मतङ्गे (विद्या० ११ पटले), तन्त्रा० (९।१९१-१९९) इत्यत्रापि प्रदर्श्यंते।

२. रागतत्त्वलक्षणम्—त० सं० (श्लो० १०-११), भो० का० (श्लो० ८९-९१), मृगेन्द्रे (विद्या० १०।११-१२, ११।९-१९), मतङ्गे० (विद्या० ११ पटले) तन्त्रा० (९।१९९-२०१) इत्यत्र च, पुरुषतत्त्वलक्षणं च—त० सं० (श्लो० २७-२९), भो० का० (श्लो० ६५-८२, १०५-१०७), मृगेन्द्रे (विद्या० १०।१८), मतङ्गे (विद्या० १४ पटले, पुंपाशेश्वरस्वरूपप्रतिपादके षष्ठे पटले च), तन्त्रा० (९।२०४-२१२), वि० प० (श्लो० ३६), रौरवे (II. १५२), स्प० प्र० (पृ० १०५, ११०) इत्यत्र द्रष्टव्यम्। क्षेत्री क्षेत्रज्ञ इति सुप्रभेदवचने चात्मशब्दपर्यायाः प्रोच्यन्ते।

३. अव्यक्तं गुणतत्त्वं च—त० सं० (श्लो० ९), भो० का० (श्लो० ८३-८८), मृगेन्द्रे (विद्या० १०।१९-२२), मतङ्गे (विद्या० १५-१६ पटलयोः), तन्त्रा० (९।२१३-२२६) इत्यत्र च द्रष्टव्यम्। अव्यक्ततत्त्वस्य पर्यायास्तन्त्रालोके (८।२७३) द्रष्टव्याः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



चेह । सापि त्रिविधा गुणतः प्रोक्ता कर्मानुसारेण ॥" (श्लो० ५२) इत्येवं बुद्धितत्त्वम्,[१] "स्यात् त्रिविधोऽहङ्कारो जीवनसंरम्भगर्वरूपोऽयम् । संभेदादस्य सतो विषयो व्यवहार्यतामेति ॥ सात्त्विकराजसतामसभेदेन स जायते पुनस्त्रेधा । स च वैकारिकतैजसभूतादिनामभिः समुच्छ्वसिति ॥" (श्लो० ५३-५४) इत्येवमहङ्कारतत्त्वं च तत्र वर्ण्यते । ततः—"तैजसतस्तत्र मनो वैकारिकतो भवन्ति चाक्षाणि । भूतादेस्तन्मात्राण्येषां सर्गोऽयमेतस्मात् ॥" (श्लो० ५५) इत्येवमहङ्कारात् षोडशकः सर्गः प्रवर्तते । [२]एष षोडशकः सर्गश्च तत्रैवं विव्रियते—"इच्छारूपं हि मनो व्यापारस्तस्य भवति संकल्पः । बुद्ध्यक्षाणि श्रोत्रं त्वग्दृग् जिह्वा च नासा च ॥ ग्राह्यास्तेषां शब्दः स्पर्शो रूपं रसश्च गन्धश्च । इत्येतेषां विषयाः क्रमेण पञ्चापि पञ्चानाम् ॥ शब्दादीनां ग्रहणं व्यापाराः कीर्तिताः क्रमेणैषाम् । वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाणि स्युः ॥ वचनादानविहरणोत्सर्गानन्दाश्च कर्मैषाम् । अन्तःकरणं त्रेधा बुद्धिरहङ्कारचेतसी चेति ॥ कर्मेन्द्रियबुद्धीन्द्रियभेदाद् बाह्यं पुनर्भवेद् दशधा । तन्मात्रेभ्यः खपवनतेजोऽम्भःक्ष्मेति पञ्चभूतानि ॥" (श्लो० ५६-६०) इति । अत्र तन्मात्रेभ्य इत्यादिना पञ्चतन्मात्रेभ्यः पञ्चभूतोत्पत्तिरपि प्रदर्शिता । तानि च पुनरेवं वर्ण्यन्ते—"तन्मात्राण्यविशेषाः

---

१. बुद्ध्यहङ्कारमनोरूपस्यान्तःकरणस्य स्वरूपम्—त० सं० (श्लो० ७-८), भो० का० (श्लो० २७-३६, ४२-४८) इत्यत्र द्रष्टव्यम् । अहङ्कारो बुद्धिर्मन इति क्रमो म० म० प० (पृ० ६१) इत्यत्र वर्ण्यते । ऋजुविमर्शिन्यां (पृ० १९५) च मनोबुद्ध्यहङ्कार इति क्रमो दृश्यते । अहङ्कारस्य सर्वानुस्यूतत्वं च म० म० प० (पृ० ८८) इत्यत्रैव प्रदर्श्यते । बुद्धितत्त्वस्य, भावप्रत्ययसर्गस्य, अहङ्कारस्य, प्राणापानादिवृत्तीनां च स्वरूपं मृगेन्द्रे (विद्या० १०-११ पटलयोः), मतङ्गे (विद्या० १७-१८ पटलयोः), तन्त्रा० (९।२२७-२३३) च यथायथं द्रष्टव्यम् । बुद्धेर्भावप्रत्ययसर्गो भो० का० (श्लो० ५४-६४), तुष्टयः सिद्धयश्च स्वच्छन्दे (१०।१०६९-१०७३), तन्त्रालोके (८।२७८-२८१) च वर्ण्यन्ते । अहङ्कारस्य करणस्कन्धात्मिका प्राणवृत्तिश्च भो० का० (श्लो० ३०-३३) इत्यत्रापि वर्णिता । तत्र टीकाकारेण कालोत्तरप्रामाण्येन प्राणस्य दश वृत्तयो व्यावर्णिताः । ताश्च कालोत्तरे (१०।५-१३) इत्यत्र द्रष्टव्याः । १५२ पृष्ठस्था टिप्पणी चावलोकनीया । भावा अष्टौ धर्मादयः, प्रत्ययाश्च चत्वारः सिद्ध्यादय इति चात्रावसेयम् ।

२. एष षोडशकः सर्गः—त० सं० (श्लो० ३-६), भो० का० (श्लो० १२-२६), मृगेन्द्रे (१२।१-१९) च वर्ण्यते । मतङ्गे चाष्टादशे पटले विद्यापादीयेऽहङ्कारादीनि सप्तदशतत्त्वानि विस्तरेण वर्णितानि । तन्त्रालोके (९।२३४-२८३) च खेटपालसांख्यादिमतमतान्तरसमालोचनपुरस्सरं सर्वमेतद् विशदीक्रियते । अत्र भो० का० (श्लो० ३७-४२), मृगेन्द्रे (विद्या० १२।१२-१९), मतङ्गटीकायाम् (विद्या० १८। ५८-६६), तन्त्रालोके (९।२४१-२४२) चेन्द्रियाणां भौतिकत्वं निरस्याहङ्कारिकत्वं साध्यते । रूपादिपञ्चवर्गोऽयमिति सुबोधमञ्जरीवचनम्, इन्द्रियाणां शुद्धाशुद्धात्मकं द्विविधं विभागं च सिद्धयोगीश्वरीमतप्रतिपादितं तन्त्रालोक(१७।११२-११४)-संगृहीतमवलोक्यताम् ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



शब्दादीनां प्रकीर्तिताः पञ्च। [1]भूतानि पञ्च तेभ्यो भवन्ति तान्येकगुणवृद्ध्या॥ अवकाशव्यूहनपाकसंग्रहधारणं क्रमादेषाम्। व्यापारा भूतानां व्योमादीनां समुद्दिष्टाः॥" (श्लो० ६१-६२) इति।

एवमत्र तन्मात्रपञ्चकभूतपञ्चकात्मना [2]दशविधं कार्यम्, बाह्याभ्यन्तरभेदेन त्रयोदशविधं करणं च प्रदर्शितम्। अथ तयोर्विनियोगस्तत्रैव प्रदर्श्यते—"कार्यमिदं दशधा यत् करणैः कार्यते समाविश्य। करणान्यसमर्थत्वात् कार्यं संश्रित्य चेष्टन्ते॥" (श्लो० ६३) इति। तदमीषां समेषां तत्त्वानां शुद्धत्वादिविभागहेतुरपि तत्रैव वर्णितः—"पञ्चानामाद्यानां चिद्रूपतयाऽन्वयः परेषां तु। मायाद्यानां द्वेधा सप्तानां कीर्तितः शैवे॥ अव्यक्तप्रभृतीनां गुणैश्च सुखदुःखमोहरूपतया। अन्वय इह निखिलानां दशके ह्यन्ते विशेषोऽयम्॥ शब्दादिकगुणसाम्ये तुल्यत्वेनान्वयोऽत्र विज्ञेयः। अङ्गाङ्गिभावविहितो भवति विशेषस्तु केषाञ्चित्॥" (श्लो० ६४-६६) इति।

एवमत्र [3]सृष्टिक्रमेण सर्वेषां तत्त्वानां स्थितिः कथिता, [4]संहारक्रमेण तु—"प्रतिलोमं परिणामाद् मायायां तानि लीयन्ते॥ मायायाः परतोऽध्वा शुद्धः शक्तौ निलीयते सकलः। परमात्मनि सापि शिवे तिष्ठत्यविभागमापन्ना॥" (श्लो० ६७-६८) इतीयं स्थितिस्तत्रैव वर्णिता।

अत्र दर्शितस्तत्त्वानां त्रिविधो विभागः शतरत्नसंग्रहेऽचिन्त्यागमप्रामाण्येन भङ्ग्यन्तरेण वर्णितः। तद्यथा—"चतुर्विंशतिसंख्यातमशुद्धं भोग्यकाण्डकम्। ततो हि मिश्र-

---

१. पञ्च महाभूतानि स्थूलानि—त० सं० (श्लो० २), भो० का० (श्लो० ५-१२), मृगेन्द्रे (विद्या० १२।१९-३२), मतङ्गे (विद्या० १९-२३ पटलेषु), तन्त्रालोके (९।२८३-३०५) च विवेचितानि। तन्त्रालोके (९।३०६-३१४) तत्त्वानां शिवादिधरण्यन्तानां व्याप्यव्यापकभावोऽपि प्रदर्शितः।

२. तत्त्वसंग्रहे (श्लो० ४-६), अन्येषु च ग्रन्थेषु प्रसङ्गेऽस्मिन् विषयोऽयं चर्च्यते।

३. सृष्टिक्रमेण तत्त्वविचारः परापञ्चाशिका(श्लो० १४-३०)-सौभाग्यसुधोदय(१।२६-४९)-योगिनीहृदय( पृ० १४१-१५९ )-म० म० प० ( पृ० ३७-६० )-परा० अभि० (पृ० ११३-११९)-शि० दृ० (पृ० २३-२५)-त० सा० (पृ० ६९-१०८)-प० सा० (पृ० ३०-७२)-रौरव० (I, ३, ५-१६, १७२-१७४, १९३)-मालिनीविजय(पृ० ४)-ई० प्र० वि० ( I. २९ )- ई० प्र० वि० वि० ( I. २५, III. २५५-३०४)-शिवधर्मोत्तर-सिद्धान्तागम-सिद्धान्तहृदय - चन्द्रज्ञान-तत्त्वगर्भ-स्वच्छन्दसंग्रहादिषु द्रष्टव्यः। तत्त्वानां कार्यकारणभावस्तत्र बौद्धमतसमीक्षा (तन्त्रा० VI. ७-४०), मालिनीपद्धत्या तत्त्वविचारः (तन्त्रा० VI. १२९), तत्त्वानां व्याप्यव्यापकभावः(तन्त्रा० VI. २४५), तत्त्वभेदोपसंहारः (तन्त्रा० VII. १०५), तत्त्वविज्ञानध्यानफलादिकम् (स्वच्छ० १२ पटले), ईश्वरं प्रति पशुं प्रति प्रमेयवृत्तान्तः (ई० प्र० वि० वि०, III. ३६७-३९३) इत्येते च विषया यथायथं द्रष्टव्याः।

४. तत्त्वसंग्रहे, भोगकारिकायाम्, विरूपाक्षपञ्चाशिकायां (श्लो० ४७-४९) च संहारक्रमेणैव तत्त्वानि वर्ण्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तत्त्वं च भोक्तृकाण्डं च सप्तकम् ॥ प्रेरकं शुद्धतत्त्वं च स्वतन्त्रं तच्छिवस्य तु ।" इति । अत्र प्रेरककाण्डं शुद्धम्, नादादिपञ्चकेन वैखर्यादिप्रेरकत्वाच्च, तद्भुवनवासिनां सर्वज्ञत्वात् सर्वकर्तृत्वाद् दुःखादिरहितत्वाच्च । भोक्तृकाण्डं शुद्धाशुद्धम्, तद्वासिनां किञ्चित्सर्वज्ञत्वेन शुद्धत्वम्, दुःखादियोगेनाशुद्धत्वं च । भोग्यकाण्डमशुद्धम्, तद्वासिनां सदा किञ्चिज्ज्ञत्वाद् दुःखादियुक्तत्वाच्च । तदुक्तम्—"अशुद्धं तु चतुर्विंशच्छुद्धाशुद्धं च सप्तधा । नित्यशुद्धं च पञ्चैते षट्त्रिंशत्तत्त्वरूपकम् ॥" (पृ० ५३-५४) इति ।

"नरशक्तिशिवावेशि विश्वम्" इति तन्त्रसमुच्चयवचने नरशक्तिशिवात्मकं तत्त्वत्रयं व्यावर्ण्यते, विज्ञानभैरवविवृतौ (पृ० ३) च । नरेश्वरपरीक्षायां तत्त्वत्रयमेतत् सद्योज्योतिषा विशदं व्याख्यायते, मृत्युञ्जयभट्टारकापराभिधे नेत्रतन्त्रेऽपि (I.४, II.२७७) तदेतदेव तत्त्वत्रयमङ्गीक्रियते । योगिनीहृदयदीपिकाधृते स्वच्छन्दसंग्रहे (लुप्ता० I. १६७-१८१), स्वच्छन्दतन्त्रे (११।४८-५०) चात्मविद्याशिवाख्यानि त्रीणि तत्त्वानि वर्णितानि, "मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात् । शक्तिशिवौ शिवतत्त्वम्" (११४९) इति च तानि विवृतानि सौभाग्यसुधोदये । शिवविद्यात्मविज्ञानं रौरवेऽपि (१।१) सूच्यते । मालिनीविजये च—"विज्ञानाकलपर्यन्तमात्मतत्त्वमुदाहृतम् । ईश्वरान्तं च विद्याह्वं शेषं शिवपदं विदुः ॥" (२।४७) इत्येवमात्मविद्याशिवाख्यं तत्त्वत्रयं व्याख्यायते । मालिनीविजये (१।१४-१६) तत्त्वानां हेयोपादेयविभागोऽपि वर्णितः । रत्नत्रये तु बिन्दुशक्तिशिवाख्यानि त्रीणि तत्त्वानि रत्नत्रयनाम्ना निर्दिशितानि । तदेतेषां तत्त्वत्रयवादिनां[1] मते शिष्टानां तत्त्वानामत्रैव यथायथमन्तर्भावो भवति । शैवदर्शनबिन्दौ (पृ० १६-१७) महामाया-पुरुष-शिवात्मकं तत्त्वत्रयम्, अत्रैव च षट्त्रिंशत्तत्त्वानामन्तर्भाव इति प्रदर्श्यते ।

## भुवनाध्वा

भवत्यस्मादिति भुवनमिति व्युत्पत्त्या भुवनशब्दो जगत्पर्यायः । शैवागमेषु २२४ संख्याकानि भुवनानि परिपठ्यन्ते । तानि च यथायथं पृथिव्यादिशिवान्तेषु[2] तत्त्वेषु

---

१. दीक्षाप्रकरणेष्वन्यत्र च पञ्चतत्त्वादिविधयोऽपि व्यावर्णिताः । प्रसङ्गेऽस्मिन् तन्त्रालोको (११।३४-४९) द्रष्टव्यः ।

२. अत एव मतङ्गे विद्यापादे शिवादिपृथिव्यन्ततत्त्वनिरूपकेषु तेषु तेषु पटलेष्वेव शिवादिपृथिव्यन्ततत्त्वेषु विद्यमानानि भुवनानि निरूपितानि । पृथिवीतत्त्वनिरूपके २३ पटले च शतरुद्राणाम्, सप्तलोकद्वीपसमुद्रपातालादीनाम्, नरकाणाम्, कालाग्निभुवनस्य च; अध्वसंख्यानिरूपके २४ पटले च देशपरिमाणपरिभाषां भुवनानां परिमाणं च निर्वर्ण्य सकलाध्वसंहारे २५ पटले कालपरिमाणपरिभाषां प्रदर्श्य कालानुसारं सकलाध्वोपसंहारो वर्णितः । भारते पुण्यानि स्थलानि तत्रैव (१९।३४-३९) द्रष्टव्यानि । जपसिद्ध्युचितानि क्षेत्राणि च स्वच्छन्दे (९।३६-३८) द्रष्टव्यानि । "संबाधः संकटम्, संमिश्रयोस्तयोर्यावती प्रवाहभूमिः । सरस्वतीचर्मण्वत्योरन्तरस्थो देशो ब्रह्मावर्तः । गङ्गायमुनाप्रवाहयोर्मध्यमन्तर्वेदी" इति तत्र क्षेमराजः । रौरवे

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्थितानि। तेषां प्रमाणं तन्त्रसारे[1] संक्षेपेणैवं वर्तते—"तत्र पृथिवीतत्त्वं शतकोटिप्रविस्तीर्णं ब्रह्माण्डगोलकरूपम्। तस्यान्तः कालाग्निर्नरका पातालानि पृथिवी स्वर्गो यावद् ब्रह्मलोक इति। ब्रह्माण्डबाह्ये रुद्राणां शतम्। न च ब्रह्माण्डानां संख्या विद्यते। ततो धरातत्त्वाद् दशगुणं जलतत्त्वम्। तत उत्तरोत्तरं दशगुणमहङ्कारान्तम्। तद्यथा—जलं तेजो वायुर्नभस्तन्मात्रपञ्चकाक्षैकादशगर्भोऽहङ्कारश्चेति। अहङ्काराच्छतगुणं बुद्धितत्त्वम्। ततः सहस्रधा प्रकृतितत्त्वम्। एतावत् प्रकृत्यण्डम्। तच्च ब्रह्माण्डवदसंख्यम्। प्रकृतितत्त्वात् पुरुषतत्त्वं च दशसहस्रधा। पुरुषान्नियतिर्लक्षधा। नियतेरुत्तरोत्तरं दशलक्षधा कलातत्त्वान्तम्। तद्यथा—नियतिः, रागः, अशुद्धविद्या, कालः, कला चेति। कलातत्त्वात् कोटिधा माया। एतावद् मायाण्डम्। मायातत्त्वात् शुद्धविद्या दशकोटिगुणिता। विद्यातत्त्वादीश्वरतत्त्वं शतकोटिधा। ईश्वरतत्त्वात् सादाख्यं सहस्रकोटिधा। सादाख्याद् वृन्दगुणितं शक्तितत्त्वम्। इति शक्त्यण्डम्। सा शक्तिर्व्याप्य यतो विश्वमध्वानमन्तर्बहिरास्ते, तस्माद् व्यापिनी। एवमेतान्युत्तरोत्तरमावरणतया वर्तमानानि तत्त्वान्युत्तरं व्यापकं पूर्वं व्याप्यमिति स्थित्या वर्तन्ते। यावदशेषशक्तितत्त्वान्तोऽध्वा शिवतत्त्वेन व्याप्तः। शिवतत्त्वं पुनरप्रमेयं सर्वाध्वोत्तीर्णं सर्वाध्वव्यापकं च" (पृ० ६४-६५) इति।

तत्र पृथिवीतत्त्वे वर्तमानानां १०८ भुवनानां नामानि गुरुदेवपद्धतिप्रामाण्येन कुमारेण तत्त्वप्रकाशटीकायां (श्लो० ५) परिगणितानि। शिष्टानां नामानि च सारणोमुखेन प्रदर्शितानि [2]तन्त्रयात्रायां (पृ० २६-२७) द्रष्टव्यानि। शैवसिद्धान्तागमेषु विस्तरेण भुवनविचारः प्रदर्श्यते। वर्तते तत्र वैमत्यम्। [3]स्वच्छन्दतन्त्रे दशमे पटले,

---

विद्यापादेऽध्वविधिपटले कालाग्निभुवनमारभ्य भुवनानि वर्णितानि। नानागमसंवादिन्यस्तत्रत्याष्टिप्पण्योऽवश्यमवलोकनार्हाः। मृगेन्द्रेऽपि विद्यापादे १३ पटले रौरवक्रमेणैव भुवनानि वर्ण्यन्ते, मृगेन्द्रवृत्तौ (१०।१८) च प्रसङ्गवशात् किरणप्रामाण्येन रागतत्त्वभुवनानि, तत्त्वप्रकाशकुमारव्याख्यायां च चन्द्रज्ञानमाश्रित्य कानिचन भुवनानि प्रदर्शितानि। भो० का० (श्लो० १०८-११३), र० त्र० (श्लो० ८६-१२४) इत्यत्रापि भुवनानि वर्ण्यन्ते।

१. तन्त्रसारे (पृ० ६३-६८), मालिनीविजये पञ्चमाधिकारे च भुवनाध्वविचारो वर्तते।

२. तन्त्रयात्रा(पृ० २१)धृते शिवपुराणवचने आधाराद्युन्मनान्तः षष्टिसंख्यासमन्वितो भुवनाध्वा सूच्यते। विवरणमस्यापेक्षितम्।

३. स्वच्छन्दतन्त्रे दशमे पटले कालाग्निभुवनमारभ्यानाश्रितान्तं यावद् भुवनानि वर्णितानि। प्रसङ्गेऽस्मिन्नत्र परिमाणविवेचनम्, धर्मनिरूपणम्, अष्टाचत्वारिंशत् संस्काराः, अष्टावात्मगुणाः, रुद्राध्यायोक्ताः शतरुद्रा असंख्याता रुद्राश्च, श्वेतादयोऽधिपाः, नानामतमतान्तराणि, भुवनानां विविधा आकाराः, नव तुष्टयः, सिद्धचष्टकम्, विग्रहाष्टकम्, सिद्धान्तशास्त्रप्रवक्तारः, बिन्द्वर्धचन्द्रादयो विषयाश्च वर्ण्यन्ते। अमरेशादिपञ्चाष्टकानां वाराणस्यादिगतमहादेवाष्टषष्टेश्च चर्चा क्षेमराजेन (पृ० १०३) कृता। स मालिनीविजय(पूर्वशास्त्र)-श्रीकण्ठीसंहिता-महासंहिता-परातन्त्र-किरण-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



[1]तन्त्रालोके चाष्टमाह्निके, स्वच्छन्दोद्योततन्त्रालोकविवेकयोश्च नानाग्रन्थग्रन्थकार-प्रामाण्येन भुवनाध्वा विचारितः। सर्वमेतन्नूतनया दृष्ट्या परिशीलनमपेक्षते।

## षडध्वशुद्धिः

"षड्विधः स्ववपुःशुद्धौ शुद्धिं सोऽध्वाऽधिगच्छति" (११।८३) इत्येवं प्रकरण-मिदमारभ्यते तन्त्रालोके। तत्र का नामेयं शुद्धिरिति जिज्ञासायाम्—"शोधनं बहुधा तत्तद्भोगप्राप्त्येकतानता॥ तदाधिपत्यं तत्त्यागस्तच्छिवात्मत्ववेदनम्। तल्लीनता तन्निरासः सर्वं चैतत् क्रमाक्रमात्॥" (११।८५-८६) इत्येवं शुद्धिपदं तत्र व्याख्यातम्। [2]स्वच्छन्दतन्त्रप्रामाण्येन विवेककारेण समुपस्थापितस्तस्यार्थस्तत्रैव

---

सिद्धा-देव्यायामल-चन्द्रगर्भ-मृगेन्द्रोत्तर-मलय-आनन्दशासन-शिवतनुशास्त्र-मतङ्गपारमेश्वर-मयसंग्रह-ज्योतिःशास्त्र-पुराण-वायुपुराण-रुरुसंग्रहप्रामाण्येन विषयानेतान् वितानयति।

१. तन्त्रालोकेऽष्टमाह्निके तद्विवेके च दीक्षोत्तर-स्वच्छन्दशासन-नन्दिशिखा-त्रिशिरोभैरव-सिद्धातन्त्र-तन्त्रराजभट्टारक-आदिषट्क-सोमशम्भु-रौरवशासन-आनन्दशासन -किरणागम-मृगेन्द्र-मृगेन्द्रोत्तर-रौरववार्त्तिक - बृहस्पतिपाद - लीलाकार-देव्यायामल-कामिक-शिवतनुशास्त्र-मालिनीमत-मतङ्ग-सारशासन-भूतिराजप्रामाण्येन पृथिवीतः शिवान्तेषु तत्त्वेषु विद्यमानानि भुवनानि विवेचितानि। प्रसङ्गेऽस्मिन् तुष्टिनवकम्, सिद्धचष्टकम्, ग्रन्थि-तत्त्व-शक्त्यात्मना त्रिविधा माया, प्रमाणाष्टकम्, दश शिवाः, अष्टादश रुद्राः, लयाख्यो बिन्दुः, अर्धेन्दुप्रभृतिविचारः, सकलभुवनमानम्, तत्र नानामतानि—इत्येते विषया अपि वर्ण्यन्ते। अत्र च जयरथः क्षेमराजीयं स्वच्छन्दोद्योतं तत्र तत्र समालोचयति।

२. स्वच्छन्दे चतुर्थे पटले षडध्वशुद्धिरियं व्याप्यव्यापकभावावलोकनमुखेन व्याख्याता। अत्र पञ्चकलाशोधनं प्रामुख्येन प्रदर्श्यते। "कलाश्च पञ्च विज्ञेयास्तत्त्वं षट्त्रिंशदेव तु। सचतुर्विंशतिर्ज्ञेयं भुवनानां शतद्वयम्॥ एकाशीतिपदान्यत्र वर्णार्धशतिका स्मृता। मन्त्रा एकादश ज्ञेया इत्येतच्चाध्वमण्डलम्॥" (४।१९८-२००) इत्येवं च तत्र षडध्वनां सिद्धान्तागमस्वीकृतमेव स्वरूपमङ्गीक्रियते। "अध्वषट्कं यथा प्राणे संस्थितं कथयामि ते" (४।२४१) इत्यादिना च तत्राध्वषट्कस्य प्राणे संस्थितिः प्रदर्श्यते। "षट्त्यागात् सप्तमे लयः" इति स्वच्छन्देऽपि (४।२४६) वर्तते, नेत्रतन्त्रेऽपि (२२।२०) च। तत्र—"षण्णामध्वनां कारणानां च त्यागात् सप्तमेऽध्व-कारणातीते परधाम्नि (लयः)" इति नेत्रोद्योते। "सर्वोपलभ्या अकारोकारमकार-कलाः, योगिगम्यास्तु बिन्दुनादव्यापिन्य इत्यासां षण्णामपि त्यागात् परमयोगिनां सप्तमे परशक्तिमति परतत्त्वे एव लयो विश्रान्तिः कार्या" इति च स्वच्छन्दोद्योते। नेत्रतन्त्र एव—"उद्गीथाक्षरसंबद्धं तत्त्ववर्णपदात्मकम्। भुवनानि कला मन्त्राः कारणानि षडेव तु॥ ब्रह्मा विष्णुश्च रुद्रश्चापीश्वरश्च सदाशिवः। शिवश्चेति" (२२।१९-२०) इत्येवं षडध्वानः कारणानि च वर्णितानि। कारणषट्कं तन्त्रा० (VI. ५४), त० सा० (पृ० ५७, १४८) इत्यत्र, कारणाष्टकं च तन्त्रा० (XI. १४६) इत्यत्रापि प्रदर्श्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



द्रष्टव्यः। अत्र सिद्धान्तवामदक्षिणसिद्धानामकमालिन्यादिषु वर्णितानां मन्त्राणां शोधकत्वमध्वनां शोध्यत्वं चोपपाद्य सर्वत्र शिवाभेदे जागरूकेऽपि स्वातन्त्र्याच्छोध्य-शोधकभावोऽयं प्रतिबिम्बस्वरूपेण परमेश्वरे प्रतिभासते, न तु बाह्यतयाऽस्य काचिद् वास्तविकी स्थितिरिति समाधीयते। एवं च सर्वोऽयमध्वा संविदाश्यानघन इति विभावनमेव तच्छोधनमिति ज्ञेयम्।

सर्वोऽयमध्वा यथा संविदि संस्थितस्तथैव तद्द्वाराऽन्तः शून्यधीप्राणनाडी-चक्रानुचक्रेषु बहिश्च लिङ्गमूर्तिवह्निस्थण्डिलादिषु समस्तव्यस्तरूपेण क्रमाक्रमरूपेण समवतिष्ठत इति तत्रैव [1]द्वादशाह्निके वर्ण्यते। पूर्वमप्युक्तम्—"अध्वा समस्त एवायं चिन्मात्रे संप्रतिष्ठितः। यत्तत्र नहि विश्रान्तं तन्नभःकुसुमायते॥ संविद्द्वारेण तत्सृष्टे शून्ये धियि मरुत्सु च। नाडीचक्रानुचक्रेषु बर्हिर्देहेऽध्वसंस्थितिः॥" (८।३-४) इति। आ संवित्तत्त्वमा बाह्यं चैवं योऽयमध्वा व्यवस्थितः, स तत्र तत्रोचितं स्वं रूपं स्वातन्त्र्येण भासयति। एवं च साधकेन विश्वाध्वसम्पूर्णं देशकालमयस्पन्दात्मकं स्वशरीरं विलोकनीयम्। एवमेव घट-पट-लिङ्ग-स्थण्डिलादिष्वपि सर्वत्र तन्मयता भावनीया। इदं विभावनमेवात्र षडध्वविलापनं षडध्वशुद्धिरित्युच्यते। तथाहि—"ज्ञात्वा समस्तमध्वानं तदीशेषु विलापयेत्। तान् देहप्राणधीचक्रे पूर्ववद् गालयेत् क्रमात्॥ तत्समस्तं स्वसंवित्तौ सा संविद्भूरितात्मिका। उपास्यमाना संसारसागर-प्रलयानलः॥" (तन्त्रा० ८।७-८) इति, "संविदेकात्मतानीतभूतभावपुरादिकः। अव्यवच्छिन्नसंवित्तिर्भैरवः परमेश्वरः॥ श्रीदेव्यायामले चोक्तं षट्त्रिंशत्तत्त्वसुन्दरम्। अध्वानं षड्विधं ध्यायन् सद्यः शिवमयो भवेत्॥" (तन्त्रा० ८।१५-१७)[2] इति च।

तन्त्रालोकप्रदर्शितः शोध्यशोधकभावः स्वच्छन्दोद्योते (४।९७) क्षेमराजेनैवं विवृतः—"परमेश्वरश्चिदानन्दघनः स्वतन्त्रभट्टारक उन्मनाख्यया स्वस्वातन्त्र्यशक्त्या शून्या-दिक्षित्यन्तमनन्तं वाच्यवाचकरूपं स्वभित्तौ स्वानधिकमप्यधिकमिव युगपदवभासयति। तत्र वाचकं ग्राहकभागावस्थितं परसूक्ष्मस्थूलभेदेन वर्णमन्त्रपदात्मकं त्रिधा, वाच्यमपि ग्राह्यभागाभिनिविष्टं कलातत्त्वभुवनात्मकम्। वर्णा ह्यभेदविमर्शसाराः किञ्चित्स्थौल्येन भेदाभेदविमर्शनात्मकमन्त्ररूपतामाश्रित्य ततोऽपि स्थौल्येन भेदविमर्शावगमकतया भान्ति। एवं वाच्यरूपा पारमेश्वरी कलाख्या शक्तिरुत्तरोत्तरवैशिष्ट्येन तत्त्वभुवनात्मतां गृह्णाति। वस्तुतश्चेयमक्रमैव पारमेश्वरी शक्तिः स्फुरति। तत्रापि च स्वातन्त्र्याद् दर्पणनगरवत् क्रममप्यादर्शयति। क्रमेऽपि च पूर्वं पूर्वमुत्तरत्र व्यापकतया स्थितं मृदिव

---

१. तन्त्रालोके ११-१२ आह्निकयोः कलाध्वनि शेषाध्वनां स्थितिः, दश पदानि तावन्त एव वर्णाश्च, मन्त्राध्वनिरुक्तिः, पदानि वर्णाश्च, कलातत्त्वभुवनानि, वर्णाध्वविचारः, षडध्वशुद्धिः, मन्त्रशुद्धिः, अध्वनः प्रकृत उपयोगः, आन्तरं भावनमित्येते विषया वर्णिताः। विस्तरापेक्षी तन्त्रालोकमेवावधारयेत्।

२. विषयोऽयं तन्त्रालोके (८।३-१९) तद्विवेके च स्पन्दशास्त्र-स्वच्छन्द-दीक्षोत्तर-त्रिशिरोमत-देव्यायामलप्रामाण्येन व्याख्यातः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



घटादौ, उत्तरमुत्तरं तु पूर्वत्र शक्त्यात्मना स्थितं वृक्ष इव स्वबीज इति सर्वं सर्वात्मकमेव[1]। अत एव पञ्चतत्त्वदीक्षायामनाश्रिततत्त्वपर्यन्ता भूतव्याप्तिः प्रदर्श्यते।

एवं चैकैकोऽपि प्रमाता भावो वा वस्तुतः षडध्वस्फाररूपपारमेशशक्तिमयाऽऽदिहान्तपरामर्शसाराहन्ताविश्रान्तिसतत्त्वः परभैरवरूप एव। तथात्वापरिज्ञानात्तु तन्मायाशक्तिकृतादपूर्णंमन्यः शब्दराशिकलाविलुप्तविभवत्वाद् वर्णादिभिः कलादिभिश्च तात्त्विकस्वरूपेणास्फुरद्भिः प्रत्ययोद्भवक्रमेण देहादौ ग्राहिताहंभावो विषयमात्रासु ग्राहितभोक्तृताभिमानश्च खेचर्यादिचक्रचतुष्टयस्य भोग्यतां प्राप्तो बद्धः पशुः सम्पन्नः। तस्य पशुभावशमनाय पारमेश्वरी अनुग्राहिका शक्तिः शिवाभिन्नाचार्यहृदये पारमार्थिकेन स्वरूपेण स्फुरन्ती शिष्यस्य सर्वमध्वानं संकोचकत्वप्रशमनेनासंकुचितस्वशक्तिसारतया स्फारयन्ती शोधयति दीक्षाज्ञानादियोगेन। अत एवमाचार्यस्फारसारा मन्त्रादयः शोधकाः पश्वात्माभिनिविष्टाः शोध्या इति [2]शोध्यशोधकभावेऽपि न काचित् क्षतिरिति।

सिद्धान्तागमसंमता षडध्वप्रक्रिया महेश्वरानन्देनैवं प्रदर्शिता—"अध्वानो हि षडित्यागमेषु प्रसिद्धम्। ते च वर्णाः, पदानि, मन्त्राः, कलाः, तत्त्वानि, भुवनानीत्याख्यायन्ते। तत्र वर्णाः पञ्चाशल्लोकप्रसिद्धाः। पदान्यानन्त्येऽपि व्योमव्याप्यादिमन्त्रमर्यादयैकाशीतिः। मन्त्राश्च तद्वदानन्त्येऽपि ब्रह्मपञ्चकमङ्गषट्कं चेति संकोचदृष्ट्या एकादश। कला निवृत्त्यादयः पञ्च। तत्त्वानि षट्त्रिंशत्। भुवनानि च कालाग्निरुद्रादीन्यनाश्रितान्तानि चतुर्विंशत्यधिकं शतद्वयम्। एतदखिलमपि कलापञ्चकेन क्रोडीक्रियते। तथा हि— निवृत्तौ कलायां क्षकार एको वर्णः, अष्टाविंशतिः पदानि, हृदयसद्योजातौ मन्त्रौ, पृथिवीतत्त्वमेकम्, कालाग्निरुद्रादीनि भद्रकाल्यन्तान्यष्टोत्तरशतं भुवनानि। प्रतिष्ठायां हादयष्टान्ता वर्णास्त्रयोविंशतिः, एकविंशतिः पदानि, शिरोवामदेवौ मन्त्रौ, अप्तत्त्वादीनि प्रकृत्यन्तानि त्रयोविंशतितत्त्वानि, अमरेशादीनि श्रीकण्ठान्तानि च षट्पञ्चाशद् भुवनानि। विद्यायां ञादिघान्ताः सप्त वर्णाः, विंशतिः पदानि, शिखाऽघोरश्चेति मन्त्रद्वयम्,

१. सर्वं सर्वात्मकमिति विषयः १६१ पृ० १ टि० इत्यत्र विवेचितः।

२. अत्र—"परमेश्वरं पूजयित्वा तदग्रे शिष्यस्य प्राणक्रमेण प्रविश्य हृत्कण्ठतालुललाटरन्ध्रद्वादशान्तेषु षट्सु कारणषट्कस्पर्शं कुर्वन् प्रत्येकमष्टौ संस्कारान् चिन्तयन् किञ्चित्कालं शिष्यप्राणं तत्रैव विश्रमय्य पुनरवरोहयेत्। इत्येवमापादिताष्टाचत्वारिंशत्संस्कारोपरिकृतरुद्रांशापत्तिः समयीभवति" (पृ० १४८-१४९) इति तन्त्रसारप्रतिपादिता पद्धतिरनुशीलनीया। अष्टाचत्वारिंशत् संस्काराश्च तत्रैव टिप्पण्यां (पृ० १४८-१५४) वैशद्येन वर्णिताः। मृगेन्द्रे (क्रिया० ८।१५९-१६१) तद्वृत्तौ च पारमेश्वरादिप्रामाण्येन, स्वच्छन्दे (१०।३८६-४१२) च विषयोऽयं दृश्यते। विद्यामायानियत्याद्याः प्रयत्नतः शोध्या इति च तन्त्र(त्रिक)सारप्रामाण्येन परा० अभि० (पृ० ११७) इत्यत्र प्रतिपाद्यते। प्रसङ्गेऽस्मिन् "अस्य सर्वस्य" (श्लो० ५७) इत्यत्रत्ये विज्ञानभैरवोद्योते धृतस्य त्रयी सप्तेति कर्मकाण्डक्रमावलीश्लोकस्य तत्रैव कृतं व्याख्यानमपि द्रष्टव्यम्।

२६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पुरुषप्रभृतीनि मायापर्यन्तानि सप्त तत्त्वानि, भीमादीन्यङ्गुष्ठमात्रान्तानि च सप्तविंशति-भुवनानि। शान्तौ तु गखकास्त्रयो वर्णाः, पदान्येकादश, कवचतत्पुरुषौ मन्त्रौ, शुद्धविद्येश्वरसदाशिवास्त्रीणि तत्त्वानि, वामादिसदाशिवान्तमष्टादशभुवनानि। शान्त्यतीतायां च वर्णाः षोडश स्वराः, पदमेकम्, ईशानो नेत्रमस्त्रमिति मन्त्रत्रयम्, शिवस्तत्त्वमेकं यः शक्तिस्वभाव इत्याम्नायते, निवृत्त्यादीन्यनाश्रितान्तानि पञ्चदश भुवनानीति। एतच्च सिद्धान्तादितन्त्रेष्वत्यन्तं वितत्योपपादितम्" (पृ० ६९) इति।

पाञ्चरात्रसंमता षडध्वशोधनप्रक्रिया चास्मदीये सात्वतसंहिताया उपोद्घाते (पृ० ३८-४०) द्रष्टव्या। तदेतस्मिन् अध्वषट्के भुवनाध्वनः, पदाध्वनि स्थितस्य सुषुप्त्यादिपदत्रिकस्य च हेयत्वम्, तुर्यपदस्य मन्त्राध्वादीनां चतुर्णां चोपादेयत्वं ज्ञेयम्। अत्रापि व्यपेक्षाभेदेन हेयता उपादेयता च प्रवर्तते। मुमुक्षोः शुद्धाः सन्तोऽनपेक्षायामुपेया अपि हेयपक्षान्तर्गता भवन्ति।

"अध्वपञ्चकं पाशः" (श्लो० ५) इति पाठान्तरं व्याकुर्वता कुमारेण तत्त्वप्रकाशतात्पर्यदीपिकाकारेण कलाध्वन उपादेयत्वमन्येषां च हेयत्वं महेश्वरानन्दोक्तपद्धत्या व्यावर्णितम्। षडध्वनां शब्दार्थोभयात्मकत्वं व्याकुर्वद्भिश्च भुवनाध्वनस्तत्त्वाध्वनि, तत्त्वाध्वनश्च कलाध्वनि लयो भाव्यते। एवमेव मन्त्राध्वनः पदाध्वनि, पदाध्वनश्च वर्णाध्वनि लयो भवति। तदनु केचन[1] वर्णानां यथायथं पञ्चकलासु, अन्ये [2]चार्थरत्नावलीकारादयः (पृ० २०८-२०९) कलानां वर्णेष्वन्तर्भावं प्रदर्शयन्ति। वर्णपारम्यवादिनां मतेऽनुत्तरस्याकारस्य, कलापारम्यवादिनां मते च शान्त्यतीतायाः कलायाः परशिवे लयो भाव्यते।

---

१. स्वच्छन्दे तन्त्रालोके च कलाध्वनि शिष्टानामध्वनामुपसंहारः प्रदर्श्यते। एतदर्थं १९९ पृष्ठस्थे १-२ टिप्पण्यौ द्रष्टव्ये।

२. मालिनीविजयेऽपि—"अभिन्नमालिनीकाये तत्त्वानि भुवनानि च। कलाः पदानि मन्त्राश्च यथावदवधारिताः॥" (४।१०) इत्येवं वर्णात्मिकायां मालिन्यां शिष्टानामध्वनामुपसंहारः प्रदर्श्यते। अत्र सर्वाध्वसंशुद्धिर्नवमेऽधिकारे (पृ० ५७-६७), षडध्वानश्च द्वितीयेऽधिकारे (पृ० १२-१३) प्रतिपादिताः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

# सांस्कृतिकं पर्यवेक्षणम्

एवमत्र पति-पशु-पाश-ज्ञान-दीक्षा-गुरु-शिष्य-भोग-मोक्ष-षडध्वशोधनादिव्याख्यान-प्रसङ्गेन प्रायो ज्ञान-क्रिया-चर्यापादानां प्रमुखा विषया मूले टिप्पणीषु च वर्णिताः। योगपादीयाश्च केचन विषया अत्रैवान्यत्र[1] चापरे प्रदर्शिताः। "तस्मादीदृशेन स्वात्मनि उन्माददायिना परमपकुर्वता च किं पाण्डित्येन" (ई० प्र० वि० वि०, I. ११) इत्यभिनव-गुप्तोक्तिम्, "इत्यलं सुकुमारहृदयोपदेश्यजनवैरस्यदायिनीभिराभिः कथाभिः" (स्प० नि०, पृ० १६) इति क्षेमराजोक्तिं च स्मरद्भिरस्माभिः प्रमाणादिपरीक्षासु[2] नातीव भरो दत्तः। अथाधुना पूर्वार्धे प्रतिपादितायामैतिहासिक्याम्, उत्तरार्धे च प्रदर्शितायां दार्शनिक्यां पृष्ठभूमौ चिकीर्षितं तान्त्रिकसंस्कृतेः पर्यवेक्षणं समुपस्थापयामः।

## तन्त्रागमशब्दौ

"तनोति विपुलानर्थांस्तत्त्वमन्त्रसमाश्रितान्। त्राणं च कुरुते पुंसां तेन तन्त्रमिति स्मृतम् ॥" (१।११५) इति किल व्युत्पत्तिर्दृश्यते तन्त्रशब्दस्याजितागमे। "इह तावत् समस्तोऽयं व्यवहारः पुरातनः। प्रसिद्धिमनुसन्धाय सैव चागम उच्यते ॥' (३५।१-२), "प्रसिद्धिश्चाविगानोत्था प्रतीतिः शब्दनात्मिका" (३५।१९)

---

१. प्राणापानमयोऽजपाजपात्मको मन्त्रयोगो विज्ञानभैरवव्याख्याने (पृ० १८४-१९२), प्रणवैकादशिकाख्य आन्तरजपात्मको मन्त्रयोगः, कौलिकः कुण्डलिनीयोगः, तान्त्रिकः षडङ्गो योगश्च नि० उ० (पृ० १०९-११९) इत्यत्र, षड्विधो योगः शक्तिसंगम-तन्त्रस्य उपोद्घाते (पृ० ५४-५७), सात्वतीयो योगश्च सात्वतसंहिताया उपोद्घाते (पृ० ४३-४८) वर्णितोऽस्माभिः। पदैकादशिकात्मको मन्त्रयोगः स्वच्छन्दे, नेत्रतन्त्रे, षडध्वविलापननिरूपणक्रमे मृगेन्द्रादिष्वपि च द्रष्टव्यः। मतङ्गपारमेश्वरे च वर्तते स्वतन्त्रो विस्तृतो योगपादः सप्तपटलात्मकः। तत्र योगस्वरूपम्, षड् योगाङ्गानि, करणम्, योगसारसमुच्चयः, तत्त्वसाधनम्, प्रत्यक्षानुमानागमलक्षणानि, आप्तो महेश्वरः, तत्त्वजयः, भोक्तृपुरुषसाधनम्, शिवतत्त्वप्राप्तिः प्रधान-पुरुष-ईश्वर-सदाशिवतत्त्वानि, कर्मयोगः, प्राणजयः—इत्यादीनि विषयाणि वर्ण्यन्ते। तत्रत्यं प्रत्यक्षलक्षणं बौद्धदर्शन-प्रदर्शितं तल्लक्षणमनुकरोतीव (पृ० २७३)।

२. तज्जिज्ञासुभिः कार्यकारणभावविचारः, संबन्धपरीक्षा, दिग्व्याख्यानम्, भ्रान्ति-स्वरूपविमर्शः, स्मृतिसंस्कारस्वरूपविवेचनम्, सामान्यसमवायपरीक्षा, परिणामत्रयम्, प्रकटता ज्ञातता च, अभावविचारः, विकल्पवृत्तान्तः, ज्ञाप्यज्ञापकभावविचारः, प्रमाण-प्रमेयविचारः, अधिगमप्रमाणयोर्लक्षणे—इत्यादयो विषया ई० प्र० वि०, ई० प्र० वि० वि० इत्यत्र च व्याख्याता द्रष्टव्याः। द्वैतशैवसिद्धान्तवैशेषिकदर्शनयोः सैद्धान्तिको मतभेदः, सिद्धान्तशैवसांख्ययोर्भेदः, सिद्धान्तशैवदर्शनस्याद्वैतवेदान्ताद् भेदः, द्वैत-पाशुपतात् सिद्धान्तद्वैतस्य भेदः, सिद्धान्तशैवदर्शनस्य व्याकरणदर्शनाद् भेदः, लकुलीशपाशुपतदर्शनस्य वैशिष्ट्यम्, स्वातन्त्र्यवादः, लकुलीशभेदाभेदवैशिष्ट्यम्, लकुलीशमते कार्यकारणसंबन्धः, वीरशैव-निम्बार्क-चैतन्यमतेषु लकुलीशप्रभावः—इत्यादयो विषयाश्च शैवदर्शनबिन्दौ वर्ण्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



इति चागमपदस्यार्थः स्फोरितस्तन्त्रालोके शास्त्रसंमेलनाख्ये [1]पञ्चत्रिंशाह्निके। "लौकिकं वैदिकं सांख्यं योगादि पाञ्चरात्रकम्। बौद्धार्हतन्यायशास्त्रं पदार्थ-क्रमतन्त्रणम्॥ सिद्धान्ततन्त्रशाक्तादि सर्वं ब्रह्मोद्भवं यतः। श्रीस्वच्छन्दादिषु प्रोक्तं संद्योजातादिभेदतः॥" (३५।२६-२७) इति च तत्रैव सर्वशास्त्राणां पञ्चब्रह्मोद्भ-वत्वं वर्ण्यते।[2] "आगमो हि नामायं शब्दनसंक्रान्तिशरीरः। यथाह भगवाननन्तः— "परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते" (पृ० ८९), "स च यो यस्य हृदये निरूढि-मागतः स एव" (पृ० ९६) इति, "नहि बुद्धो नाम नियतः कश्चित्, अपि तु भावनाबल-प्रतिलब्धक्षणिकादिदृढविमर्शः। तस्य क्षणिकादिभावनोपदेशी गुरुः पूर्वबुद्धः, तस्याप्यन्य इति क्रमेणानियतवक्तृकत्वात् पारमेश्वरविमर्शमयतैव वस्तुतः। एवं चतुर्विंशतितत्त्व-भावनाभावितः कपिलो मन्तव्यः। अत एव सर्वागमा अनादय एव" (पृ० ९७-९८) इति, "यथाह वराहमिहिरः—"विष्णोर्भागवता मघाश्च सवितुः शम्भोः सभस्मद्विजा मातॄणामथ मातृमण्डलविदो विप्रास्त्वथ ब्रह्मणः। शाक्याः सत्त्वहिताय बुद्धवपुषो नग्ना-स्तथैवार्हतो यैर्या देव उपास्यते स्वविधिना तैस्तस्य कार्या क्रिया॥" इति चाभिनवगुप्त एव (ई० प्र० वि० वि०, III. १००) इत्यत्र कथयति। "वेद्यं धर्माद्युपायं निश्चितं गमय-तीति निगमो[3] वेदः" (ई० प्र० वि० वि०, I. १५) इति च स निगमपदं व्याख्याति। एवं च सर्वशास्त्राणां प्रामाण्यमप्रतिहतमिहाङ्गीक्रियते[4]।

---

१. विशेषजिज्ञासुभिः सम्पूर्णमिदमाह्निकमवलोकनीयम्। "प्रसिद्धिमागमः प्राप्तो लोक इत्यभिधीयते" (१।१४) इति चागमलक्षणं मृगेन्द्रवृत्तौ विद्यापादे वर्ण्यते।

२. आगमानामुपजीव्यताऽवश्यग्राह्यता च तन्त्रालोके सप्तत्रिंशाह्निकारम्भे प्रदर्शिता। तत्रैव केषाञ्चनागमानां वैशिष्ट्यमेवं वर्णितम्—"उक्तं श्रीरत्नमालायामेतच्च परमेशिना॥ अशेषतन्त्रसारं तु वामदक्षिणमाश्रितम्। एकत्र मिलितं कौलं श्रीषडर्धक-शासने॥ सिद्धान्ते कर्म बहुलं मलमायादिरूषितम्। दक्षिणं रौद्रकर्माढ्यं वामं सिद्धिसमाकुलम्॥ स्वल्पपुण्यं बहुक्लेशं स्वप्रतीतिविवर्जितम्। मोक्षविद्याविहीनं च विनयं त्यज दूरतः॥" (३७।२५-२८) इति। "रौद्रेति मारणोच्चाटनादि। स्वप्रतीतिः स्वानुभवः। विनयं तन्त्रप्रधानं शास्त्रम्" (पृ० ४०१) इति च तत्र जयरथः।

३. अनयाऽभिनवगुप्तोक्त्याऽपि तन्त्राणामागमनिगमविभाग आगतं शिववक्त्रेभ्य इत्यादि-वचनप्रामाण्येन कृतोऽर्वाचीन इति सिद्ध्यति। २८-२९ पृष्ठस्था टिप्पणी चात्र द्रष्टव्या।

४. एवं सत्यपि स्प० प्र० (पृ० ८८), स्प० नि० (पृ० १५, २६-२९), प्र० हृ० (पृ० ५३-५६), परा० अभि० (पृ० २२१), शि० दृ० (पृ० १०७-१४२, १६३, १७६-१७८, १९६-२०५), ई० प्र० वि० (I. ८३-११९, १२२-१४६, २१०-२४४, ३११-३१२, ३५६), म० म० प० (पृ० १३०, १३२), ने० उ० (I. २१०, २७२), ई० प्र० वि० वि० (I. ४८, ९३; II. ९२-१३२), म० पा० (I. १४९), स्व० उ० (I. २. १४-१५), तन्त्रा० (I. ६४-७०, ९५; II. १३-६४) इत्यादिषु स्थलेषु सौगत-मीमांसक-वेदान्त-न्यायवैशेषिक-सांख्य-ब्रह्माद्वैतवादादीनि मतानि यथायथं समालोच्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## सर्वशास्त्राणां प्रामाण्यम्

"अनुज्ञाताश्च वेदोक्ताः शैवे वर्णाश्रमादयः। वेदस्यापि प्रमाणत्वे यत्नोऽस्माभिरतः कृतः ॥" (३।७६) इति नरेश्वरपरीक्षायां सद्योज्योतिः शिवाचार्य आह। "इति वर्णाश्रमाचारान् मनसापि न लङ्घयेत्" इति च तत्रैव रामकण्ठधृतं वचनम्। "सांख्यं योगं पाञ्चरात्रं वेदांश्चैव न निन्दयेत्" (५।४४), "स्मार्तं धर्मं न निन्देत्तु आचारपथदर्शकम्" (५।४५) इति च [1]स्वच्छन्दे। सांख्यं योगमिति वचनं तन्त्रालोकेऽपि (३५।३६) दृश्यते। "न च तच्छैवाख्यं प्रमाणं दृष्टयन्तराणामसत्यार्थत्वं प्रतिपादयति।....एतच्चोक्तमस्माभिः सर्वागमप्रामाण्ये" इति च रामकण्ठो मोक्षकारिका(श्लो० १४४)वृत्तौ सर्वागमानां प्रामाण्यं वक्ति। विष्णु-शिव-सूर्य-बुद्धादिरूपतया तत्तच्छक्तिचक्रपरिवारयुक्तस्तत्कारणं भगवानेक एव ध्यानभेदेनोपास्यत्वेनाभिहितः" इति मायावामनसंहितायां स्पन्दप्रदीपिकाधृतायां सर्वशास्त्राणां प्रामाण्यं साध्यते। नेत्रतन्त्रे त्रयोदशाधिकारे स्मृतायां मायावामनिकायां चोर्ध्वलिङ्गिनो विश्वरूपस्य, नरसिंह-वराह-वामन-कपिलावताराणां च ध्यानं वर्ण्यते। तत्रैव नवमादित्रयोदशान्तेष्वधिकारेषु वाम-दक्षिण-सिद्धान्त-कुलाम्नाय-वैष्णव-सौर-बौद्धादिसम्मतं परतत्त्वं विविच्यते। "लोकायतानां देहात्मा शून्यात्मा शून्यवादिनाम्। क्षणात्मा क्षणनिष्ठानां भिन्नात्मा भेदवर्तिनाम्॥ मीमांसिनामपूर्वात्मा ब्रह्मात्मा ब्रह्मवादिनाम्। अद्वैतिनामभेदात्मा बहुना वा किमुच्यते॥ आक्रीडनं च बालानां स एव परमो गुरुः। स एव च महार्थात्मा महार्थिकमनीषिणाम्॥" (पृ० ११) इति च महार्थमञ्जरीपरिमले।

## शास्त्राणामनुस्यूतता

मन्त्राणामृषिच्छन्दोदैवतस्मरणपूर्वकं नित्य-नैमित्तिक-काम्यकर्मसु विनियोगः, यागहोमादिषु समनुष्ठीयमानेषु वह्नि-कुण्ड-आज्य-भूमिप्रभृतीनां संस्काराः, दीक्षाविषयकः प्रपञ्चः, [2]अष्टाचत्वारिंशत्संस्काराः, शान्तिकपौष्टिकादीनां सौम्यानां मारणोच्चाटनादीनां क्रूराणां च षट्कर्मणां साधनाय मणिमन्त्रौषधप्रभृतीनामुपयोग इतीदृशा विषया आगमेषु तन्त्रेषु च वैदिकीं पद्धतिमनुसरन्त एव दृश्यन्ते। "चत्वारि वाक् परिमिता पदानि" (ऋ० १।१६४।४५), "अ इति ब्रह्म तत्रागतमहमिति" (ऐ० आ० २।३।८), "अकारो वै सर्वा वाक्" (ऐ० आ० २।३।६), "छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्यैतस्याकारो रसः" (ऐ० आ० ३।२।३), "वाचीमा विश्वा भुवनान्यर्पिता" (तै० ब्रा० २।८।८।४), "वागक्षरं प्रथमजा ऋतस्य" (तै० ब्रा० २।८।८।५), "अनाहत-

---

१. "मद्यं मांसं तथा मत्स्यमन्यानि च वरानने। साचारांश्च निराचारांल्लिङ्गिनो न जुगुप्सयेत्॥" (५।४८) इत्यपि तत्रैवोच्यते। विरुद्धवचसां गतिश्चास्माभिः पूर्वमेव (पृ० १५०) चिन्तिता।

२. अष्टाचत्वारिंशत्संस्काराः स्वच्छन्दे (१०।३८६-४११), मृगेन्द्रे (क्रि० ८।१५९-१६१), तन्त्रालोके (१५।४९८-५०९), तन्त्रसारे (पृ० १४८-१५४ मूले टिप्पणीषु च) च वर्ण्यन्ते। अष्टावात्मगुणाः स्वच्छन्दे (७।२३४-२३६) इत्यत्रापि दृश्यन्ते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



शीर्ष्णी वाग् जुषाणा सोमस्य तृप्यतु" (तै० सं० ३।२।५।१), [1]"सौत्रामण्यां सुरां पिबेत्", "न काञ्चन परिहरेत् तद् व्रतम्" (छा० उ० २।१३।२), "यदेतत् स्त्रियां लोहितं भवत्यग्नेस्तद्रूपम् । तस्मात् तस्मान्न बीभत्सेत । अथ यदेतत् पुरुषे रेतो भवत्यादित्यस्य तद्रूपम् । तस्मात् तस्मान्न बीभत्सेत।" (ऐ० आ० २।३।७), "अष्टाचक्रा नवद्वारा देवानां पूरयोध्या" (अ० वे० १०।२।३१) इत्यादीनि श्रुतिवचांसि वाक्चतुष्टयम्, मातृकाप्रपञ्चम्, सुरापान-दूतीयाग-अर्घ्यनिष्पादनसदृशान् शाक्तागमविषयान् कुण्डलिनीयोगं च किल सूचयन्ति।

यथैते विषया आगमिकास्तान्त्रिकाश्च वैदिकविधिमनुसरन्तो दृश्यन्ते, तथैव वर्तते वैष्णवाद्यागमानां परस्परं साम्यं मन्त्र-मुद्रा-न्यास-भूतशुद्धि-प्राणप्रतिष्ठा-दीक्षा-षडध्वविलापन-बाह्याभ्यन्तरवरिवस्यादिषु व्रतोत्सवादिषु नित्यनैमित्तिककाम्यकर्मसु प्रतिमाप्रासादनिर्माणादिषु समयि-पुत्रक-साधक-आचार्यविवरणेषु योगादिविधिषु च। पवित्रकविधिं नित्य-नैमित्तिक-काम्यकर्मन्यूनतापूरकं सर्वविधदोषशामकं च सर्वे सम्प्रदायाः स्वीकुर्वन्ति । त्रिशिरोमतवचने (त० वि० १५।६९-७३) निरीक्षणं मन्त्रदृशेत्यादिना शिष्यस्य निरीक्षणप्रोक्षणादिकं संस्कारपञ्चकं वर्ण्यते । तच्च "निरीक्ष्य ताड्य" (१९।३७) इत्यादिके सात्वतसंहिताश्लोके तद्भाष्येऽपि च दृश्यते । किञ्च, आत्मसप्तति-आत्मसम्बोध(स्वात्मसम्बोध)-इष्टोपदेश-चन्द्रगर्भ-ज्ञानसारसदृशाः समाननामानो ग्रन्था बौद्धजैनादिसम्प्रदायेष्वपि दृश्यन्ते । तेन प्रतीयते समन्वयवादिनो हि केचनाचार्यास्तदा समभूवन् वैष्णवेषु, बौद्धेषु, जैनेषु, शाक्तेषु, शैवेषु च सम्प्रदायेष्विति ।

अत एव—"विज्ञानमेव ब्रह्मरूपम्" (ई० प्र० वि०, II. २०१) इत्युपपाद्य "आगमेषु द्वैतव्याख्यानमपास्य, ब्रह्मवादेऽविद्यां मायाशक्तीकृत्य, विज्ञानाद्वयवादमात्मेश्वराभिप्रायेण निरूप्य सिद्धत्येष जनः" (ई० प्र० वि० वि०, III. ४०५) इति च सर्ववादानां समन्वयं साधयत्यभिनवगुप्तः । विज्ञानाद्वयवादः कथं नाम आत्मेश्वराभिप्रायेण निरूप्यत इत्येतदर्थं प्रत्यभिज्ञादर्शनप्रतिपादितं प्रकाशविमर्शस्वरूपमवलोकनीयम् ।

## प्रकाशविमर्शात्मकं परतत्त्वम्

ईश्वरप्रत्यभिज्ञायां भट्टोत्पलः, विमर्शिन्यां विवृतिविमर्शिन्यां चाभिनवगुप्तः सर्वदर्शनसमन्वयमुखेन प्रकाशविमर्शात्मकः शिव एव परं तत्त्वमिति साधयति । तथाहि—"प्रकाशलक्षणः स्वात्मा ।....स एव हि अहंभावात्मा विमर्शः । प्रकाशरूपता ज्ञानम् । तत्रैव स्वातन्त्र्यात्मा विमर्शः क्रिया । विमर्शश्चान्तःकृतप्रकाश इति विमर्श एव परावस्थायां ज्ञानक्रिये ।....सर्वथा तु विमर्श एव ज्ञानम्" (ई० प्र० वि०, I. ४२३-४२४), "सोऽयं प्रकाशोऽनपह्नवनीयः" इति, "प्रकाशश्चैव भावानां....न शापोक्त्या विलीयते" (ई० प्र० वि०, I. २४) इति च दिवाकरवत्सप्रामाण्येनाभिनवगुप्तः प्रतिपादयति । "प्रकाश एव हि संविदां परमार्थः" (ई० प्र० वि० वि०, II. ४३३), "इह भावानां

---

१. वचनमिदमुपलब्धे वैदिकवाङ्मयेऽन्वेषणीयम् । सौत्रामणीप्रसङ्गे सोमपानसुरापानशब्दाववश्यं दृश्येते ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सत्त्वमसत्त्वं वा व्यवतिष्ठमानं संविद्विश्रान्तिमन्तरेण नोपपद्यते। संविद्विश्रान्ता हि भावाः प्रकाशमाना भवन्ति।''''प्रकाश एव संविद्यतः'' (ई० प्र० वि० वि०, I. ४-५), ''प्रकाश-स्वातन्त्र्यमिह बोधसंवेदनादिशब्दवाच्यम्'' (ई० प्र० वि० वि०, I. ८२), ''अभावोऽपि बुद्धयमानो बोधात्मक ईश्वर एव'' (ई० प्र० वि० वि०, II. ३८७, ४१२) इत्यादिना प्रकाशस्य सविद्वोधसंवेदनादिशब्दवाच्यत्वमभिधाय ''परमेश्वर एव प्रकाशिवपुर्विश्वत्र कारणम्'' (ई० प्र० वि० वि०, II. १७२), ''प्रकाशात्मकः शिवः'' (तन्त्रा० १।५२) इति प्रकाशात्मकः परमेश्वर एव शिव इति साधयति। ''सा (देवता) च युक्तिपर्या-लोचनायां स्वात्मसंवित्स्फुरत्तामात्रस्वरूपेति प्रकाश एव विश्वोपास्या [1]देवता'' (म० म० प०, पृ० ४-५), ''स्वात्मैव देवता'' (म० म० प०, पृ० ११९) इति च महेश्वरानन्दः।

''सांख्यजैमिनीयचिरन्तनवैशेषिकबौद्धानां मते चित्स्वभाव आत्मा'' (ई० प्र० वि० वि०, II. ४३४), ''बौद्धैरप्यध्यवसायापेक्षं प्रकाशस्य प्रामाण्यं वदद्भिरुपगतप्राय एवायमर्थः'' (ई० प्र० वि०, I. २६६), [2]''प्राभाकरं मतं स्वमतेन समीकरोति'' (ई० प्र० वि० वि०, I. २१९) इति च वदन् स [3]मतान्तराणामप्यत्र संवादमाकलयति।

''प्रकाशश्च विमर्शशून्यो न भवति'' (ई० प्र० वि० वि०, I. ५), ''प्रकाशस्य हि विमर्श एव जीवितम्'' (ई० प्र० वि० वि०, I. ७३), ''विमर्शमयो हि प्रकाशः'' (ई० प्र०

१. प्रकाशविमर्शात्मिकाया देवतायाः स्वरूपम् (म० म० प०, पृ० ९-१३) इत्यत्र द्रष्टव्यम्। प्रकाशविमर्शयोः स्वरूपं च तत्रैव (पृ० २९-३६, १२७-१३०), ई० प्र० वि० वि० (II. १७४-१८६; III. १०७, १४८) इत्यत्र च विस्तरेण वर्णितम्। ''प्रकाशरूपं ज्ञानम्, विमर्शरूपा च क्रिया'' (ई० प्र० वि० वि०, I. ९८), ''ज्ञान-क्रिये प्रकाशविमर्शात्मिके'' (ई० प्र० वि० वि०, III. २५७-२६२), ''विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः'' (ई० प्र० १।८।११), ''विमर्शशक्तिरेव क्रिया'' (ई० प्र० वि० वि०, III. ३) इत्यादिना च प्रकाशविमर्शयोर्ज्ञानक्रियारूपत्वं वर्ण्यते। ''औन्मुख्यमिच्छा ज्ञानं च क्रियेत्येतच्चतुष्टयम्। स्पन्दनं देवदेवस्य बोधभैरव-रूपिणः॥'' इति च पूजारहस्ये। प्रकाशविमर्शात्मकस्य परमगुरोः स्वरूपं म० म० प० (पृ० ४-५) इत्यत्र, प्रकाशविमर्शात्मकशिवशक्तिसामरस्यस्वरूपसितशोणमिश्र-बिन्दुभ्यः सकलजगदुत्पत्तिरिति च कामकलाविलासे (श्लो० १-१४) त्रिपुरासम्प्रदाय-ग्रन्थेषु चान्येषु द्रष्टव्यम्।

२. तान्त्रिकदर्शनस्य प्रायो गुरुमतानुवर्तित्वमित्यस्माभिर्महार्थमञ्जर्या उपोद्घाते (पृ० ङ-ढ) प्रदर्शितम्। तदनेन संवदति।

३. माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्व-बाह्यार्थशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते। अत्र सर्वदर्शनसंग्रह-कारः सायणमाधवः—''यद्यपि भगवान् बुद्ध एक एव बोधयिता, तथापि बोद्धव्यानां बुद्धिभेदाच्चातुर्विध्यम्'' (पृ० ७) इति यद्यपि वक्ति, तथापि सर्वासामासां दृष्टीनां यथा कालक्रमेण विकासः समजायत, तथैव प्रत्यभिज्ञादर्शने प्रकाशविमर्शात्मकस्य शिवस्य परतत्त्वत्वेनाङ्गीकारोऽपि बौद्धनैयायिकमीमांसकसांख्यादिदृष्टीनां विकास-क्रममुपजीवतीति तदत्र प्रयतनीयं विपश्चिद्भिः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



वि० वि०, II. २१) [1]इत्यादिना प्रकाशस्य विमर्शाव्यतिरिक्तत्वे प्रदर्शितेऽपि—"इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता। या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम् ॥"[2] (श्लो० १५), "प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः" (श्लो० २२) इति च विमर्शस्य स्वरूपमजडप्रमातृसिद्धिप्रामाण्येनाभिनवगुप्तः (ई० प्र० वि०, I. ३५), महेश्वरानन्दश्च (म० म० प०, पृ० १३) आहतुः। "स्वभावमवभासस्य विमर्शं विदुः" (१।५।११) इति च विमर्शलक्षणमीश्वरप्रत्यभिज्ञायाम्। "विमर्शो हि सर्वंसहः परमप्यात्मीकरोति, आत्मानं च परीकरोति, उभयमेकीकरोति, एकीकृतं द्वयमपि न्यग्भावयतीत्येवंस्वभावः" (ई० प्र० वि०, I. २५२) इति चाभिनवगुप्तः। "विमर्श एव स्फुरत्ता, महासत्ता, स्पन्दः, [3]स्वातन्त्र्यम्, परा वागित्यादिना रूपेण परिस्फुरतीति च स एवाह (ई० प्र० वि०, I. २५०-२८०)।

एवमत्र वागर्थात्मकं शिवशक्तिसामरस्यात्मकं परतत्त्वमेव प्रकाशविमर्शात्मना व्याख्यातमिति प्रकाशविमर्शयोर्नात्यन्तं भेदप्रथा। अत एव—"यथैव विश्वप्रकाशात्मा परमेश्वरः, तथा विश्वविमर्शात्मा" (ई० प्र० वि० वि०, III. ९४) इत्यभिनवगुप्तस्तयो-

---

१. "विमर्शशरीर एव प्रकाशो युक्तः" (ई० प्र० वि० वि०, II. २०७), "प्रकाशस्य जीवितं विमर्शः" (ई० प्र० वि० वि०, II. २४१) इत्यादिना ज्ञानाधिकारीये पञ्चमे विमर्शे तत्र प्रकाशस्य विमर्शात्मकत्वं साटोपं साध्यते। "परामर्शो हि प्रकाशस्य सत्यः स्वभावः" (ई०प्र० वि०वि०, II. २४८), "प्रकाशस्य हि स्वभावः परामर्शः" (ई० प्र० वि० वि, II. २५१) इत्यत्र च विमर्श एव परामर्शपदेनोक्तः। "प्रकाश एवार्थस्य आत्मा" (ई० प्र० वि० वि०, II. ६८), "न केनापि प्रकारेण प्रकाशबाह्यस्य सिद्धिः" (ई० प्र० वि० वि०, II. १६४) इत्यादिना च प्रकाशस्यैव सर्वात्मकता साध्यते।

२. "अहमिति अव्ययमव्यतिरिक्ते प्रकाशे वर्तते। तस्य भावोऽहमिति विमर्शस्वरूपमहन्ता" (ई० प्र० वि० वि०, I. १०७), "अहन्तैव हि संविदो लक्षणम्" (ई० प्र० वि० वि०, I. २६५) इति चाभिनवगुप्तः। अत्र १८९ पृष्ठस्था १ टिप्पणी द्रष्टव्या। "अहमिति शुद्धो विमर्शो न विकल्पः" (ई० प्र० वि०, I. ३११), "विमर्शो न कदाचिदिदन्ताभूमिमास्कन्दति" (ई० प्र० वि० वि०, I. ८३), "विमर्शविशेष एव विकल्पः" (ई० प्र० वि० वि०, II. २२) इत्येवं विमर्शविकल्पयोः स्वरूपमुपवर्ण्याभिनवगुप्तस्तयोर्वैशिष्ट्यं विस्तरेण वर्णयति ज्ञानपादीये षष्ठे विमर्शे (पृ० २७३-३३७)।

३. प्रकाशात्मकस्य शिवस्य स्वातन्त्र्यमभिनवगुप्तेन तन्त्रालोके तृतीयाह्निके विवेचितम्। अनन्यापेक्षता हि विमर्शः, सैव च स्वतन्त्रता" (ई० प्र० वि० वि०, II. ४३६), "प्रकाशस्य च परदशायां चमत्कारमात्रात्मा यो विमर्शस्तदेव स्वातन्त्र्यम्" (ई० प्र० वि० वि०, III. २५१) इति च स एवाह।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



रद्वैतं वक्ति। एवं च सत्यमत्र प्रत्यभिज्ञादर्शने [1]जनस्याप्युपकारमिच्छता भट्टोत्पलेनागमेषु द्वैतवादमपास्य, ब्रह्मवादेऽविद्यां मायाशक्तीकृत्य, विज्ञानाद्वयवादमात्मेश्वराभिप्रायेण निरूप्य सुगमः पन्थाः प्रदर्शितः। प्रतिबिम्बवादसतत्त्व आभासवाद[2] इति च नाम्ना सोऽयं शास्त्रेषु प्रथते।

## तन्त्रागमशास्त्रस्य प्राचीनता

भारतीयसंस्कृतौ वैशिष्ट्याधायकस्य तदेतस्य तन्त्रागमवाङ्मयस्य प्रादुर्भाव ईशवीयाष्टमशताब्दीतः प्राग् नैवाजायतेति प्रतिपाद्यते। तन्नास्मभ्यं रोचते। ६०८ ईशवीयवत्सराङ्किते दधिमती(मातृ)शिलालेखे—"देवीं दधिमतीं विज्ञापयति" इत्यनन्तरम्—"सर्वमङ्गलमाङ्गल्ये" (११।१०) इत्यादिको दुर्गासप्तशतीश्लोकः समुट्टङ्कयते। [3]आमर्दकतपोवनविनिर्गतसदाशिवाचार्यो [4]लाटदेशकृतवसतिरिति च [5]सप्तमशतकीयेश-

१. अत्र "जनस्याप्युपकारमिच्छन्" इति प्रत्यभिज्ञाकारिकाप्रथमश्लोकविमर्शिनीद्वयमवलोकनीयम्। "संसाराब्धौ प्लव इव जगत्तारणाय स्थिरः स्याम्" (सा० प०, श्लो० ३४) इति च साम्बो याचते। "न चाहं कामये राज्यं न स्वर्गं नापुनर्भवम्। कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्॥" इति च स्मर्यते। सत्यं सर्वेष्वेषु वचनेषु भगवतो बुद्धस्य करुणा परिस्फुरति। "शिवस्य परिपूर्णस्य किं नाम क्रियते जनैः। यत्कृतं शिवभक्तेषु तत्कृतं तु शिवे भवेत्॥" इति शिवधर्मवचने च करुणापूरितेन चेतसा सेवाभावः समुपदिश्यते।

२. विषयोऽयमस्माभिर्महार्थमञ्जर्या उपोद्घाते (पृ० थ) मनागिव विवेचितः। प्रतिबिम्बवादः, स्वातन्त्र्यवादः, आभासवादश्च प० सा० (पृ० ३२-४०), म० म० प० (पृ० १४७-१५३), तन्त्रा० (II. पृ० ४-७३), ई० प्र० वि० वि० (I. ८-९, ५९, १४९, १६८, १७६; II. ४०७-४३९; III. १८, ३०; शै० बि० (पृ० ६७, ८१-८७) इत्यादिषु स्थलेष्वपि विवेचितः। अत्र आभासपदार्थः, आभासवादस्थापनम्, आभासवस्तुवाद एव शरणं न बाह्यवस्तुवादः, आभासमानतैव भावानां स्वरूपं नार्थक्रियाकारित्वमित्यादयो विषया अपि व्याख्याताः सन्ति।

३. आमर्दकतीर्थमुज्जयिनीति डा० वासुदेवमिराशीमहोदयः (प्राच्यविद्या निबन्धावली, पृ० १७५)। ईशानशिवगुरुदेवपद्धतिसम्पादकः श्रीमान् गणपतिशास्त्रिमहोदयो द्वितीयभागप्रस्तावनायां कदम्बगुहा-शङ्खमठिका-आमर्दकतीर्थ-तेरम्बिमठिकेत्येतानि स्थानानि गवालियरराज्ये (पूर्ववर्तिनि) स्थितानीति वक्ति। आमर्दकतपोवनमेतदुज्जयिनीतः पृथगेव स्यात्। तेरम्बामठिकां सोमानन्दोऽपि (शि० दृ० ७।१२१) स्मरति। इतो हि तत्पूर्वजाः कश्मीरान् जग्मुः।

४. जनस्यायत्नसिद्ध्यर्थमुदयाकरसूनुना। ईश्वरप्रत्यभिज्ञेयमुत्पलेनोपपादिता॥" इति प्रत्यभिज्ञाकारिकाविवृतिविमर्शिन्यामभिनवगुप्तकृतायां विवृतिस्थं लाट इति पदमुद्ध्रियते (III. ४०४)। तेनोत्पलभट्टोऽपि लाटदेशीय इति प्रतीयते।

५. सप्तमशताब्द्याः पूर्वार्धीये शिवगुप्तबालार्जुनस्य सेनकपाटशिलालेखे आमर्दकतपोवनविनिर्गतस्य सदाशिवाचार्यस्योल्लेखो वर्तते। लाटदेशीयेन नृपतिनाऽऽहूतस्तत्र जगाम सः।

२७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



वीयशिलालेखे वर्ण्यते। षष्ठशताब्दीभवेन महाकविना सुबन्धुना[1] वासवदत्तायाम्— "भिक्षुकीव तारानुरागरक्ताम्बरधारिणी भगवती सन्ध्या समदृश्यत" इत्येवं बौद्धानां देवी भगवती तारा स्मर्यते। धर्मकीर्तेर्दीक्षाविषयकं मतं क्षेमराजेन (स्व० उ० III. ७३-८४, ९९) समालोच्यते। शङ्करभगवत्पाद-कुमारिलभट्टपाद-बाणभट्टप्रभृतिभिः पाञ्चरात्रसिद्धान्तः समालोच्यते सूच्यते वा। वेदान्तसूत्रेषु च पाशुपतं पाञ्चरात्रं च मतं पूर्वपक्षीक्रियते। उदयपुरनगरस्थे पुरातत्त्वसंग्रहालये संरक्षितस्य ४९० ई० वर्षे समुत्कीर्णस्य पूर्वमुदयपुरमण्डलान्तर्गते 'छोटी सादड़ी'-स्थानसमीपवर्तिनि गिरौ भ्रमराम्बा-(भंवर माता)मन्दिरस्य गर्भगृहे स्थापितस्य [2]शिलाशासनस्य वर्ततेऽयमाद्यः श्लोकः— "देवी जयत्यसुरदारणतीक्ष्णशूला प्रोद्गीर्णरत्नमुकुटांशुचलप्रवाहा। सिंहोग्रयुक्तरथमास्थितचण्डवेगा भ्रूभङ्गदृष्टिविनिपातनिविष्टदोषा॥" इति। "जारश्मशानसमुद्भवभूतिसुखस्पर्शस्वेदशीलाङ्ग्याः। न समाप्यते नवकापालिक्या उद्धूलनारम्भः॥" (४०८) इति गाथासप्तशतीपद्ये नवकापालिकी उद्धूलनोन्मुखी वर्णिता। उद्धूलनविधिरयं लकुलीशपाशुपतसूत्रेषु वर्ण्यते। शैवागमेषु श्रीकण्ठो लकुलीशश्चेत्यासद्वयं तन्त्रालोके (३७।१४) निदर्श्यते। लकुलीशसम्प्रदायप्रवर्तकश्च लकुलीश ईशवीयप्रथमद्वितीयशताब्दीभव इति प्रायः स्वीक्रियते। अस्माभिश्च पाञ्चरात्रपाशुपतसम्प्रदाययोः प्राचीनताविषये तत्र तत्र[3] बहु प्रयतितमिति नाम प्रपञ्च्यते। लाकुलाः, मौसुलाः, कारुकाः, वैमला इति चतुर्विधाः पाशुपताः, लकुलीशशिष्येण मुसुलेन्द्रेण हृदयप्रमाणाख्यो ग्रन्थो रचित इति चात्रैव (पृ० ११६) मूले टिप्पण्यां च निर्दिशितम्। तेनास्य शास्त्रस्य प्राचीनताविषये न भ्रमितव्यं विपश्चिद्भिरिति निवेद्यते।

## भगवद्गीतायां संशोधनानि

कृतान्तपञ्चकेषु वेद-सांख्य-योग-पाञ्चरात्र-पाशुपताख्येषु समन्वयमुखेन प्रवर्तते महाभारतं नाम महाकाव्यम्, श्रीमद्भगवद्गीता च। तन्त्रागमशास्त्रं तत्र कानिचन संशोधनानि प्रस्तावयति। "तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम्। ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः॥" इत्येवं द्विविधेऽपि परमार्थसारे, "हिमवति गङ्गाद्वारे वाराणस्यां कुरौ प्रयागे वा। वेश्मनि चण्डालादेः शिवतत्त्वविदां समं मरणम्॥" इति निर्वाणयोगोत्तरे, "रथ्यान्तरे मूत्रपुरीषमध्ये चण्डालगेहे निरये श्मशाने। सचिन्तको वा गतचिन्तको वा ज्ञानी विमोक्षं लभतेऽपि चान्ते॥" इत्याधारकारिकावचने च मुक्तिं प्रति तीर्थादिदेशस्य तदुपलक्षितस्य कालस्यापि चाप्रयोजकत्वं वर्ण्यते। "तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽथवा" (नि० पू० १२२।११) इति योगवासिष्ठवचनेऽपि स एवार्थो गीयते।

---

१. "दी कल्ट आफ तारा" (पृ० ७) इत्यत्र द्रष्टव्यम्।

२. शिलाशासनस्य परिचयः "एपिग्राफिया इण्डिका"-पत्रिकायां ३० वर्षीये चतुर्थेऽङ्के १२०-१२७ पृष्ठेषु प्राप्तव्यः।

३. तन्त्रयात्रायाम् (पृ० ८२-९२), आगममीमांसायां (पृ० ५-७, २८, ५४-६१) च द्रष्टव्यम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


"अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" (६।४५) इति भागवती गीता वक्ति। "यत्तीर्थिकैर्जगति जन्मभिरप्रमेयैर्नासाद्यते पदमिति स्वमतेषु गीतम्। तच्चैकजन्मिकमिति ब्रुवता निगृह्य तेषां त्वया ननु कृतश्चरणः शिरस्सु ॥" (श्लो० ३०) इति तु तत्र भवानवधूतसिद्ध आह भक्तिस्तोत्रे। मुक्तिरेकेन जन्मनेति शिवधर्मे, इहैकभविको मोक्ष इति च शिवधर्मोत्तरे।

"यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्। ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥" (६।२६) इत्येवं मनोनिग्रहं शिक्षयति श्रीमद्भगवद्गीता। शैवागमास्तु यत्र यत्र मनस्तुष्टिः, यत्र यत्र मनो याति, सर्वं शिवमयमित्यादिषु विज्ञानभैरव-स्वच्छन्दतन्त्रादिवचनेषु सर्वं शिवमयमिति कृत्वा मनसो यथेच्छं प्रसरं नैव वारयन्ति। "अस्य देवातिदेवस्य न कृतादियुगस्थितिः" (१९।२१९) इति नेत्रतन्त्रवचने कृत-त्रेता-द्वापर-कलियुगानामप्रवृत्तिः सूच्यते भगवति। वर्णाश्रमाचाराश्च वैषम्यसूचका मुकुटसंहितादिषु समालोचिता इति प्रदर्शयिष्यते। सर्वं शिवमयमिति कृत्वा सर्वसाम्यं हि तत्र प्रतिपाद्यते।

## समता

तन्त्रालोकेऽभिनवगुप्तेन स्मृतं तद्विवेके महार्थमञ्जरीपरिमले चोद्धृतं त्रिकशासनस्य श्लोकद्वयं समता सर्वदेवानामित्यादिकामष्टविधां समतां प्रतिपादयति। समताष्टकमार्गोऽयं शक्तिसङ्गमतन्त्रे (II. १८।२१) सूच्यते। सर्वभावानाम्, वृत्तीनाम्, दृष्टीनाम्, द्रव्याणाम्, भूमिकानाम्, ओवल्लीनाम्, देवानाम्, वर्णानां च समता तत्र समताष्टकमार्गपदेनोक्ता। अस्मिन् मार्गे प्रविष्टो हि जनः समतामिमामष्टविधां भावयति। तत्र ओवल्ल्यो बोध्यादयः षड् ज्येष्ठादिभेदभिन्ना ज्ञानसन्ततयः—"आनन्दावलिबोधिप्रभुपादान्ताश्च योगिशब्दान्ताः। एता ओवल्ल्यः स्युः" (२९।३६) इत्येवं तन्त्रालोके वर्णिताः[1]

सर्वं शिवमयमिति बोधे हि समुदिते सति सर्वसाम्यस्वभावा मतिर्मानवमनसि जायते। "उत्सृज्य लौकिकाचारमद्वैतं मुक्तिदं श्रयेत्। स समं सर्वदेवानां तथा वर्णाश्रमादिके॥ द्रव्याणां समतादर्शी स मुक्तः सर्वबन्धनैः।" इत्यानन्दभैरववचनेऽपि समतादृष्टिरेषा संस्तुता। "सर्वसाम्यं परं व्रतम्"[1] इत्येवं नन्दिशिखासूचितं समताव्रतम्—"सर्वत्र समता ह्यत्र व्रते देवि विधीयते।""व्रतानां परमो व्रतः" इत्येवं तद्वचनैरेव विशदीक्रियते। व्रतमेतद् भर्गशिखायां वीरव्रतनाम्नोपदिश्यते। तस्यैतस्य समतासिद्धान्तस्य योगवाशिष्ठे परःशतेषु स्थलेषु पौनःपुन्येन प्रतिपादनं भवति। "प्राणसमाचारे समदर्शनम्" (३।३२) इति च शिवसूत्रम्। शिवदृष्टौ सर्वपदार्थानां सामरस्यम् (पृ० १८), शिवरूपता सत्यता च (पृ० ३४-३५, १२५-१२७), सर्वात्मकता (पृ० १९४-१९५, २०८) च साध्यते। तेनापि समतासिद्धान्तोऽयं पुष्टिं भजते। तदस्यां समतादृष्टौ बाधका भवन्ति पाशा आग्रहा वा।

---

१. तन्त्रालोके (१२।१२-२०), परात्रिंशिकाविवृतौ (पृ० २३५) चायं विषयो विवृतः।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS


## पाशा आग्रहा वा

तन्त्रालोके—"जातिविद्याकुलाचारदेहदेशगुणार्थजान् ॥ ग्रहान् ग्रहानिवाष्टौ द्राक् त्यजेद् गह्वरदर्शितान् । तथा श्रीनिशिचारादौ हेयत्वेनोपदर्शितान् ॥" (१५।५९५-५९६) इत्यत्र जात्यादिप्रयुक्ता ग्रहा आग्रहा वा निरूपिताः । "अतत्स्वभावे ताद्रूप्यं दर्शयन्नवशोऽपि यः । स्वरूपाच्छादकः सोऽत्र ग्रहो ग्रह इवोदितः ॥" (१५।५९८-५९९) इति च तस्य स्वरूपं तत्र वर्ण्यते । "घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी । कुलं जातिश्च शीलं चेत्यष्टौ पाशाः प्रकीर्तिताः ॥" इति च पाशाष्टकं कुलार्णव-(१३।९०)प्रामाण्येन म० म० प०(पृ० १४५) इत्यत्र, यो० हृ० दी० (पृ० ८१) इत्यत्र च प्रतिपाद्यते । वचनमिदमभियुक्तवचनत्वेन दीपिकायां स्मर्यत इत्येव विशेषः । तदेतेषु ग्रहाष्टकेषु पाशाष्टकेषु वा जातिग्रहस्य शङ्कायाश्च वैशिष्ट्येन वर्णनं दृश्यते तन्त्रागमादिषु । तदत्र क्रमशो वर्ण्यते ।

## जातिग्रहः

"ब्राह्मणोऽहं मया वेदशास्त्रोक्तादपरं कथम् । अनुष्ठेयमयं जातिग्रहः परनिरोधकः ॥" (१५।५९७), "संवित्स्वभावे नो जातिप्रभृतिः कापि कल्पना" (१५।५९९) इत्यादिना तन्त्रालोके निशिचार-कुलगह्वर-स्वच्छन्दतन्त्र-आनन्दशासन-नकुलेशादिप्रामाण्येन, परात्रिंशिकाव्याख्यायां च—"जातोनां च ब्राह्मणादीनां नास्ति स्थितिः कल्पितत्वात् । उपदेशव्यङ्गतेति तु दुर्बुद्धीन् पशून् प्रत्याययेदिति भगवता मुकुटसंहितायां विस्तरतो निर्णीतम्" (पृ० २३७) इत्येवं मुकुटसंहिताप्रामाण्येनाभिनवगुप्तः साधयति । जातिनिरासपराणि च मुकुटसंहितावचनानीमानि—"योनिर्न कारणं तत्र शान्तात्मा द्विज उच्यते ॥ मुनिना मोक्षधर्मादावेतच्च प्रविवेचितम् । मुकुटादिषु शास्त्रेषु देवेनापि निरूपितम् ॥" (१५।५१३-५१४) इत्यत्र स्मृतानि । जयरथेन तानि मोक्षधर्ममुकुटसंहितावचनानि संगृहीतानि । "अन्त्यजातीयधीवादिजननीजन्मलाभतः । उत्कृष्टचित्ता ऋषयः[1] किं ब्राह्मण्येन भाजनम् ॥ अत एवार्थसत्तत्त्वदेशिन्यस्मिन्न दिश्यते । रहस्यशास्त्रे जात्यादिसमाचारो हि शाम्भवे ॥" (तन्त्रा० १५।५१६-५१७) इति चाभिनवगुप्त एव वक्ति । स्वच्छन्देऽपि—"ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्येऽथवा प्रिये । सर्वे ते सर्वधर्माणः शिवधर्मे नियोजिताः ॥....एकैव सा स्मृता जातिर्भैरवीया शिवाव्यया । तन्त्रमेतत् समाश्रित्य प्राग्जातिं नह्युदीरयेत् ॥....प्राग्जात्युदीरणाद् देवि प्रायश्चित्ती भवेन्नरः । .. अविवेकी भवेत् तस्माच्च इच्छेदुत्तमां गतिम् ॥" (४।५४०-५४६) इत्यादिना जात्याग्रहो निराक्रियते । क्षेमराजश्च भैरवागमानां जात्युद्धारकत्वं वर्णयति (स्व० उ० २।१३६) । महेश्वरानन्देन च ब्राह्मणचाण्डालादिव्यवस्थापरित्यागार्थमागमः स्वानुभवश्च प्रमाणीक्रियते (म० म० प०, पृ० १४५) ।

## शङ्का

विकल्पात् शङ्का जायते । सा च बन्धरूपिणी भवति । विकल्पजां शङ्कां विहाय नह्यन्यः कश्चन बन्धो नाम । विकल्पायासयुक्तस्य शङ्काशीलस्य श्रेयसी गतिः कदापि

१. धीवेति धीवरी, ऋषय इति व्यासादय इति तत्र जयरथः । कौलसम्प्रदायप्रवर्तकस्य मत्स्येन्द्रनाथस्यापि धीवरत्वमनेनैव न्यायेन सुसाधम् ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



न भवितुमर्हतीति सा[1] यत्नेन परित्याज्या। "अज्ञानात् शङ्कते लोकस्ततः सृष्टिश्च संहृतिः" इति सर्ववीरवचने शङ्काया एव जननमरणकारणत्वं वर्ण्यते। सा च शङ्का षड्विधा भवति—मन्त्रशङ्का, आत्मशङ्का, द्रव्यशङ्का, भूतशङ्का, दिव्यकर्मशङ्का, तत्त्वशङ्का चेति। षड्विधामेनां शङ्कां परित्यज्यैव मानवो मोक्षमधिगन्तुं शक्नोति। स्वोपलब्धिरेव (स्वीयं प्रातिभं ज्ञानमेव) प्राधान्येन विकल्पार्णवतारिणी भवति। तस्मात् सर्वप्रयत्नेन स्वात्मप्रत्ययकारणं स्वसंवित्तिकरं नरशक्तिशिवात्मकं स्वरूपं लयभेदेन भावनीयम्। एवं च कृते सति विकल्पक्षीणचित्तः परमाद्वैतभावनाभावितो योगी मुच्यत इत्यत्र नास्ति सन्देह इति निशाटनशास्त्रे प्रतिपाद्यते। विकल्पमुक्तचित्तः पिण्ड(देह)पातानन्तरं शिवं व्रजतीति योगसंचरेऽपि।

अत एव क्रमसद्भावे—"शङ्काशून्यो भवेत् सदा" इत्युपदिश्यते, "निश्शङ्कः सिद्धिमाप्नोति" इति च तत्त्वार्थचिन्तामणौ। मतशास्त्रे च—"स्वयं तु शङ्कासङ्कोचनिष्कासनपरायणः। भवेत् तथा यथाऽन्येषां शङ्का नो मनसि स्फुरेत्॥" इत्येवमुपदिश्यते। सर्ववीरभट्टारकेऽपि पेयापेयमित्यादिना शङ्काकारणानि निरस्य "इच्छामुत्पादयेदात्मा कथं शङ्का विधीयते" इत्येवं शिष्यः प्रबोध्यते। निशाकुलेऽपि मलशङ्का सर्वथा परित्याज्येति बोधनाय—"न मलो मलिनः कश्चिद्विद्यते वस्तुतः प्रिये।''''शुद्धस्वभावबोधस्य न बन्धः स्यात् कदाचन॥" इत्यादिकं वितन्यते।

"एवं च पूर्वोक्ते यागादियोगान्तपञ्चके प्रत्येकं बहुप्रकारं निरूढिर्यथा यथा भवति तथैवाचरेत् शुद्धविकल्पोदयं यावत्। न च भक्ष्याभक्ष्यशुद्ध्यशुद्ध्यादिविवेचनया वस्तुधर्मोज्झितया कल्पनामात्रसारया स्वात्मा खेदनीयः। नहि शुद्धिर्वस्तुनो रूपं नीलत्ववत्, अन्यत्र तस्यैवाशुद्धिचोदनात्। तस्माद् वैदिकात् प्रभृति पारमेश्वरसिद्धान्ततन्त्रकुलोच्छुष्मादिशास्त्रोक्तोऽपि यो नियमो विधिर्वा निषेधो वा, सोऽस्य यावदकिञ्चित्कर एव मन्तव्यः" (पृ० ३१-३२) इत्येवं शङ्काया अस्या निरासार्थं बहु प्रयत्यतेऽभिनवगुप्तेन तन्त्रसारे। पूजाविधिश्च तदनुकारः प्रदर्श्यते क्रमकुलत्रिकादिशास्त्रेषु।

वैष्णवानां सिद्धान्तशैवानां च पूजापद्धत्यपेक्षया वामकुलकौलक्रममतत्रिकादिपूजाविधिषु वर्तते महदन्तरम्। वामकुलक्रमपूजानां स्वरूपं तन्त्रालोके पञ्चदशाष्टाविंशोनत्रिंशाह्निकेषु महार्थमञ्जरीपरिमलादिषु च वर्ण्यते। नेत्रतन्त्रेऽपि ९-१३ अधिकारेषु तद् दृश्यते। योगिनीहृदये (३।२) त्रिविधा, महार्थमञ्जरीपरिमले (पृ० १०६) च चतुर्विधा पूजा प्रतिपाद्यते। तत्र द्वितीया चरुरित्याख्या प्रथमद्वितीयादिद्रव्यैर्निष्पाद्यते। तत्प्रयुक्ता एव केचन नूतनाः सिद्धान्ताः प्रादुर्भवन्ति विधिनिषेध-भक्ष्याभक्ष्य-शुद्ध्यशुद्धिविषयकाः सर्वविधशङ्कानिरासप्रवणाः। तानत्र संक्षेपतो व्याख्यास्यामः।

---

१. तन्त्रालोके (१२।२०-२५), परात्रिंशिकाविवृतौ (पृ० २३५-२३६) चायं विषयो व्याक्रियते।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## शुद्ध्यशुद्धिव्यवस्था

"शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" (२।३२) इति योगसूत्रे भगवता पतञ्जलिना ये नियमा उक्तास्तत्र शौचस्य प्राथम्यं विद्यते। "शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः, सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" (२।४०-४१) इति द्वाभ्यां सूत्राभ्यां च तत्रैव शौचस्य प्रयोजनं प्रतिपाद्यते। "शौचमप्यात्मशुद्धेः समाधिलाभस्य च कारणम्" (मृ० वृ० क्रि०, पृ० ७) इत्युक्तवताऽऽचार्येण सद्योज्योतिषा स एवार्थोऽङ्गीक्रियते। स्मृतिपुराणादिषु धर्मशास्त्रेष्वपि च स एवार्थः समर्थ्यते। किन्तु—"यद्यशुद्धिर्न पुंसेऽस्ति सक्तिर्भोगेषु किं कृता" इति स्वायम्भुववचनेऽशुद्धिशब्दो रागादिजनितं चित्तमालिन्यं सूचयति। अत एव च—"किञ्चिज्ज्ञैर्या स्मृता शुद्धिः साऽशुद्धिः शम्भुदर्शने। न शुचिर्ह्यशुचिस्तस्मान्निर्विकल्पः सुखी भवेत् ॥" (श्लो० १२०) इति विज्ञानभैरववचनेऽन्तःकरणशुद्धेरेव प्राधान्यमङ्गीक्रियते। एतच्चास्मदीये विज्ञानभैरवव्याख्याने मालिनीविजयादिरहस्यशास्त्रप्रामाण्येन विशदीकृतमिति तत एवावलोकनीयम्, तन्त्रालोके (४।२१३-२५०) च वीरावल्यादिप्रामाण्येन वितानितमेतत्।

तत्र हि—"शिवात्मकेष्वप्येतेषु बुद्धिर्या व्यतिरेकिणी ॥ सैवाशुद्धिः परा ख्याता शुद्धिस्तद्धीविमर्शनम्।" (४।११८-११९) इति शुद्ध्यशुद्धिलक्षणे वर्णिते। श्रुतिस्मृत्यादिप्रामाण्येन शुद्ध्यशुद्ध्यादिनिर्णयः कर्तव्य इति पक्षे समुपस्थिते च—"वैदिक्या बाधितेयं चेद्विपरीतं न किं भवेत्" (४।२३०) इत्येवं श्रुतिस्मृत्यादीनामेव शिवागमेन बाधः प्रदर्शितः। [1]पञ्चदशे चाह्निके तत्रानन्दशासनादिकमनुसृत्य शुद्ध्यादिविचारः क्रियते। पर्यन्तपञ्चाशिकायां च—"शुद्धिर्बहिष्कृतार्थानां स्वाहन्तायां निमज्जनम्" (श्लो० ९) इति तस्या आध्यात्मिकी व्याख्या प्रस्तूयते। "शुद्धिः पुनरस्या बहिष्ट्वेनावभासमानस्यापि वेद्यवर्गस्य यदहमित्येव प्रथनरूपं स्वाभाविकमौचित्योत्तरं च वपुः, तल्लौकिकैरिदमिति व्यवह्रियते। तद्व्युदासेन यथावस्त्ववभासनात्मकमुत्कृष्टत्वम्" (पृ० ४३) इति च व्याचख्यौ महेश्वरानन्दः। शुद्ध्यशुद्धिव्यवस्थाविवेचनाय च विधिनिषेधमीमांसा तत्रैवं प्रस्तूयते।

## विधिनिषेधमीमांसा

"तत्र सन्ध्योपास्त्यादौ विधिः, कलञ्जभक्षणादौ निषेधश्चेत्युच्यते।....तत्र किं तज्ज्ञानमात्रेण ते प्रवर्तन्ते निवर्तन्ते च, उत स्वेच्छानुगुण्यात्। यदि ज्ञानमात्रेण,

---

१. अत्र हि (१५।४५, १५६-१७९, ६०२) आनन्दशासन-मतशास्त्र-पूर्वशास्त्र-कुल-क्रम-त्रिकशास्त्रप्रामाण्येन शुद्ध्यशुद्धि-भक्ष्याभक्ष्य-विधिनिषेधविचारः प्रस्तूयते, "नो शिवोक्तेर्बाधिका श्रुतिः" (१५।१७८), "तद्बाध्या श्रुतिरेव" (१५।१७९) इति च पुनर्निर्णीयते। कुलयागप्रकरणेऽपि तत्र—"स्नानमण्डल....अत्र यागे" (२९।८,१०) इत्येवं विषयोऽयं वर्ण्यते। प्रकरणेऽस्मिन्—"ऋषिभिर्भक्षितं पूर्वं गोमांसं च नरोद्भवम्" (पृ० २६८), "यद् द्रव्यं लोकविद्विष्टं यच्च शास्त्रबहिष्कृतम्। यज्जुगुप्सं च निन्द्यं च वीरैराहार्यमेव तत् ॥" (पृ० २६९) इत्यादीनि तन्त्रालोक(४।२४३)-विवेकधृतानि वचनानि द्रष्टव्यानि।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सन्ध्यानुपासकः कलञ्जभक्षको वा न कश्चिदालोक्येत। यदि तु स्वेच्छानुगुण्यात्, तदानुष्ठातॄणां रुचिमेव विधिनिषेधावनुवर्तेते इत्यर्थो भवति। ततश्च तेषां सन्ध्योपासनादावर्थे यत्र रुचिस्तत्र विधिः, यत्र वा कलञ्जभक्षणादौ न रुचिस्तत्र निषेध इत्यनया भङ्ग्या सन्ध्योपासनादावेवारुचिश्चेत् तत्र निषेधः, कलञ्जभक्षणादावेव चेद् रुचिस्तत्र च विधिरित्यर्थतत्त्वनिश्चयः स्यात्" (पृ० २१-२२) इत्येवं महेश्वरानन्दो [1]विधिनिषेधमीमांसामातनोति। अत्र प्रमाणतया सः—"त्यागः शक्यक्रियो यस्य स हेय इति निश्चयः। त्यक्तुं न शक्यते यच्च तदुपादेयमित्यपि॥" इति संवित्प्रकाशवचनम्, "प्रामाणिकी विधिनिषेधकथा यदि स्यात् पर्यन्ततः परम एव शिवः प्रमाणम्। सर्वोत्तरः स खलु तत्र विधिं निषिद्धे कर्तुं क्षमेत विहिते च विभुर्निषेधम्॥" इति संविदुल्लासश्लोकं च समुपस्थापयति। संवित्प्रकाशे प्रयुक्ते हेयोपादेयपदे विधिनिषेधार्थके मन्तव्ये।

एवं चागमशास्त्रेऽस्मिन् विधिनिषेधव्यवस्था वैदिकव्यवस्थातो नितान्तं भिद्यते। पारमेश्वरः परामर्श एवागमपदाभिलप्यो भवति। परामर्शश्च स्पन्दात्मकः। एवं च स्वीयां स्पन्दशक्तिमनुरुद्ध्य विधिनिषेधव्यवस्था हेयोपादेयतानिर्णयो वा विधेय इति सत्यमाधुनिकान् हिप्पीजनाननुरञ्जयेदेष सिद्धान्तः। किमत्र तत्त्वमिति तु विज्ञानभैरवव्याख्यानेऽस्मदीये १२० श्लोकव्याख्यायां द्रष्टव्यम्।

"प्रायो हि मैथुने मद्ये मांसे च परिदृश्यते। आसक्तिः सर्वभूतानां विशेषात् कस्यचित् क्वचित्॥ यदि तत्त्यागसंरम्भपूर्वं तेषां विधीयते। उपदेशो न स मनागपि चित्ते प्ररोहति॥····अनेनैवाशयेनात्र परब्रह्मोपलब्धये। ललनामद्यमांसानि पूजाग्र्याणि विशेषतः॥" (म०म०प्र०, पृ० ११६-११७) इति महानयप्रकाशवचने विद्यते यद्यपि सत्यांशः, तदनुगुणान्येव—"ललनामद्यमांसैश्च निषिद्धैरेव तर्पयेत्" इत्यादीनि वचनानि च प्रवर्तन्ते, तथापि—"न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥" (५।५६) इति मनुस्मृतिश्लोकस्य चतुर्थः पादोऽत्र न मनागपि विस्मर्तव्यः।

## योगाङ्गानामनुपयोगिता

"समस्तेभ्यः परिच्छिन्नस्वभावेभ्यः शिवान्तेभ्यस्तत्त्वेभ्यो यदुत्तीर्णमपरिच्छिन्नसंविन्मात्ररूपं तदेव परमार्थः। तद् वस्तुव्यवस्थापनम्, तद् विश्वस्य ओजः, तेन प्राणिति विश्वम्। तदेव चाहम्। ततो विश्वोत्तीर्णो विश्वात्मा चाहम्" (पृ० २१) इत्येवं शुद्धविकल्पं व्याख्याय तन्त्रसारेऽभिनवगुप्तो यथा विधिनिषेधमीमांसा तत्र न प्रवर्तते तथैव योगाङ्गानामपि तत्राप्रवृत्तिं प्रदर्शयति—"स चायं शुद्धो विकल्पो मायान्धानां नोत्पद्यते, सत्तर्कादीनामभावात्। शाम्भवदृढशक्तिपाताविद्धाश्च सदागमादिक्रमेण विकल्पं संस्कृत्य परं स्वरूपं प्रविशन्ति। तत्रातिदृढशक्तिपाताविद्धस्य स्वयमेव सांसिद्धिकतया सत्तर्क उदेति, योऽसौ देवीभिर्दीक्षित इत्युच्यते, अन्यस्य त्वागमक्रमेणेति व्यवस्था। न चात्र सत्तर्कात् शुद्धविद्याप्रकाशरूपादृतेऽन्यद् योगाङ्गं साक्षादुपायः, तपःप्रभृतेर्नियमवर्गस्य,

१. विधिनिषेधव्याख्यानं तन्त्रालोके (४।२५६-२७४; १२।१४-२०) च द्रष्टव्यम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



अहिंसादेश्च यमप्रकारस्य, पूरकादेः प्राणायामवर्गस्य वेद्यमात्रनिष्ठत्वेन क इव संविदि व्यापारः। प्रत्याहारोऽपि कारणभूमिमेव सातिशयां कुर्यात्। ध्यानधारणासमाधयोऽपि यथोत्तरमभ्यासक्रमेण निर्वर्त्यमाना ध्येयवस्तुतादात्म्यं ध्यातुर्वितरेयुः। अभ्यासश्च परे तत्त्वे संविदात्मनि स्वस्वभावे न सम्भवत्येव। अतः पारिशेष्यात् सत्तर्क एव तत्र साक्षादुपायः। स एव च शुद्धविद्या" (पृ० २१-२५) इति।

"अहिंसा सत्यमस्तेय····प्राणायामो निरर्थकः॥ प्राणायामो न कर्तव्यः शरीरं येन पीड्यते।····तदेषा धारणाध्यानसमाधित्रितयी पराम्। संविदं प्रति नो किञ्चिदुपयोगं समश्नुते॥" (४।८७-९५) इत्येवं तन्त्रालोकेऽपि वर्ण्यतेऽयं विषयः। वीरावलीशास्त्रं चात्र प्रमाणीक्रियते।

## सत्तर्कस्वानुभवयोर्गरीयस्त्वम्

तन्त्रालोके मालिनीविजय(१७।१८)प्रामाण्येन "तर्को योगाङ्गमुत्तमम्" (४।१५) इति सविशेषं प्रतिपाद्यते। तत्रैव (१।१०६) स्वसंवित्-सत्तर्कौ प्रमाणीक्रियेते। तदनयोः सत्तर्कस्वानुभवयोः स्वरूपं तन्त्रालोके (४।३४-८६) एव द्रष्टव्यम्। तत्रैव— "किरणायां[1] यदप्युक्तं गुरुतः शास्त्रतः स्वतः" (४।४१) इत्यादिना, "त्रिप्रत्ययमिदं ज्ञानं गुरुतः शास्त्रतः स्वतः" (४।७८) इत्यन्तेन ग्रन्थेन किरणागम-पूर्वशास्त्र-परात्रिंशिका-ब्रह्मयामल-निशाटनादिप्रामाण्येन [2]स्वपरामर्शस्य प्रामाण्योत्कर्षं उद्घोष्यते। अत्र— "तत्रोत्तरोत्तरं मुख्यं पूर्वपूर्वं उपायकः" (४।४२) इति ग्रन्थं व्याकुर्वाणो जयरथ आह—"तत्र उत्तरोत्तरं मुख्यं विवक्षितम्। यथा गुरुतः शास्त्रम्, ततोऽपि स्वपरामर्शः।····गुरुः शास्त्रे उपायः, तदपि स्वपरामर्शे। एवम्—"उपादायापि ये हेयास्तानुपायान् प्रचक्षते" इत्याद्युक्तयुक्त्या गुरुशास्त्रयोरुपायत्वादमुख्यत्वमिति स्वपरामर्शस्यैव प्राधान्यम्" (पृ० ४५-४६) इति। अत एव—"संविद्व्यापार एवैका युक्तिः सर्वत्र साधनी। भोगे वाऽप्यथवा मोक्षे" इति मुकुटसंहिता प्रतिपादयति। "शास्त्रार्थैर्बुध्यते नात्मा गुरोर्वचनतो न च। बुध्यते स्वयमेवैष स्वबोधवशतः स्वतः॥" (नि० पू० ४१।१५) इति योगवासिष्ठेऽपि वर्ण्यते।

कुल-क्रम-मत-त्रिकाद्यद्वैतागमसंमतयोर्भोगमोक्षयोः स्वरूपं पूर्वमेव प्रदर्शितम्। "अलिपिशितपुरन्ध्रीभोगपर्याकुलोऽहं····भैरवोऽहं शिवोऽहम्" इतीदृशे महावनमुनिवचने

---

१. अयमेव विषयस्तन्त्रालोके त्रयोदशाह्निकेऽपि (श्लो० १६२) शक्तिपातस्य मलपरिपाककर्मसाम्यादिनिरपेक्षतां साधयताऽभिनवगुप्तेन नन्दिशिखादिप्रामाण्येन वितानितः। शक्तिपातप्रकरणमत्रत्यमवलोकनीयम् (पृ० १५५-१५७)।

२. "स्वप्रतीतिः स्वानुभवः" (त० वि० ३७।२८)। स्वानुभव एव स्वपरामर्शपदेनोक्तोऽत्र। महार्थमञ्जरीपरिमलकारः—"स्वापरामर्शमात्रोऽयमपराधः कियानसौ। तावन्मात्रेण तज्जातं यद्वक्तुं नैव शक्यते॥" (पृ० २७) इति मोक्षोपायवचनं प्रमाणयन् स्वपरामर्शस्यैव मोक्षहेतुत्वं प्रतिपादयति।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तस्य पर्यवसानं भवति[1]। अस्यां स्थितौ ईश्वरसिद्धिरीश्वरनिराकरणमित्येतत् सर्वं व्यर्थमिति सत्यमेव। [2]अहमात्मकमेव ब्रह्मेति स्वात्मैव देवतेत्यादिनात्र स्वीक्रियते। स्वसत्तायां च किल न कोऽपि सन्दिहानो दृश्यते। इदन्तारिपोरहमि समराङ्गणे प्रलय-प्रतिपादनपराणां वीराणां कृते तदुचितमेव, किन्तु "अन्तः कौलो बहिः शैवः सभामध्ये तु वैष्णवः", "यत्ते कुर्युर्न तत् कुर्याद् यद्ब्रूयुस्तत् समाचरेत्", "चरन् कपटमार्गेण वामं नयमिहोन्नयेत्" इत्यादीनि द्वैधजीवनोपदेशकानि वचनानि साम्प्रतं नैव ग्राह्याणि। "प्रायो हि मैथुने मद्ये मांसे च परिदृश्यते" इति महानयप्रकाशदिशा तथाविधानां जनानां कृते स्वात्मदेवतायाः प्रीत्यर्थमलिपिशितादीनां स्वीकारो भवतु नाम, किन्तु निवृत्तिस्तु महाफलेति मनुवचनप्रवणेन जनेन विश्वाहन्तायामस्याद्वयदर्शनस्य विनियोगो विधेयः। एवं च वैदिकेषु वर्णाश्रमाचारेषु जातिग्रहं शङ्कां च किञ्चिदिव शिथिली-कृत्य, तान्त्रिकमोष्ठ्यान्त्यत्रितयसेवनं योगशास्त्रात् पृथक्कृत्य, बाह्यार्चापेक्षयाऽन्तर-वरिवस्यां प्रधानीकृत्य, अहन्ताप्रवणं दर्शनं च विश्वाहन्तायां विनियोज्य सिद्ध्येदेष जन इति हि विभावनीयम्। इदं च किलाऽत्र काम्यते—

नश्यन्तु दुःखानि जगत्यपैतु लोभादिको दोषगणः प्रजाभ्यः।
यथात्मनि भ्रातरि चात्मजे वा तथा नरस्यास्तु जनेऽपि भावः॥[3] इति।

## उपसंहारः

एवमत्रास्माभिर्भागद्वयसंगृहीतवचनानां तदाधारग्रन्थानां च साहाय्येन ग्रन्थानां ग्रन्थकाराणां तासां तासां तन्त्रागमशाखानां चैतिहासिकी स्थितिः, संगृहीतवचनेषु प्रतिपादितानामागमशाखानां समा च विषमा च दार्शनिकी दृष्टिः, शास्त्रस्यास्य सांस्कृतिकं महत्त्वमिति च विषयत्रयी वर्णिता। इदं चात्रावधेयम्—मतङ्गपारमेश्वरस्य त्रिशतिकालोत्तरागमस्य रामकण्ठकृतवृत्तिसहितस्य साम्प्रतमेव पाण्डिचेरीस्थफ्रेंचशोधसंस्था-

---

१. ऊर्ध्वमेढ्रा भगाङ्किताश्च मृण्मूर्तयः, प्रस्तरमूर्तयश्च भगवतः शिवस्य, तदवतारस्य लकुलीशस्य चोर्ध्वमेढ्राः समवलोक्यन्ते। नेत्रतन्त्र(१३।१०-१४)धृतायां मायावाम-निकायामूर्ध्वलिङ्गिनो विश्वरूपस्य ध्यानं वर्ण्यते। "न पद्माङ्का न चक्राङ्का न वज्राङ्का यतः प्रजाः। लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा॥" (१४।२३३) इति च महाभारतेऽनुशासनपर्वणि श्रूयते। माहेश्वरपदमत्र शिवशक्त्योः सामरस्यं सूचयति, भगलिङ्गयोरुभयोरुपादानात्। श्रूयन्ते च शिश्नदेवा ऋग्वेदे (७।२१।५; १०।९९।३)। अत्रापि शिश्नपदं भगस्याप्युपलक्षकम्। तन्त्रालोके (१५।६०४) जात्यादिनिरासप्रसङ्गे नकुलेशः स्मर्यते। वामाचारप्रधानानां कौलिकादिविधीनामुद्भवस्य जातिग्रहशङ्कादीनां निरासस्य च वीजान्यत्रैव संनिहितानि स्युः।

२. अहमात्मकं ब्रह्म १८९ पृ० १ टि० इत्यत्र, प्रकाशविमर्शात्मकं परतत्त्वमित्यत्र (पृ० २०४-२०५) च व्याकृतम्।

३. स्कन्दपुराणे माहेश्वरखण्डे ऐतरेयश्रुतौ (२।४२।२१३) इत्यत्र वचनमेतद् द्रष्टव्यम्।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



नतः[१] प्रकाशनमभूत्। अनयोरत्रोद्धृतानामन्येषां च केषाञ्चन ग्रन्थानां ग्रन्थकाराणां च वचनानि समुपलभ्यन्ते। अवधूतसिद्धस्य भक्तिस्तोत्रस्य द्वौ श्लोकौ सुभाषितावल्यां स्तः। अपि च, साम्प्रतमेव हालैण्डनिवासिना विदुषा डॉ० तून-गान्द्रियानमहोदयेन संदृब्धः "हिन्दू तान्त्रिक लिटरेचर इन संस्कृत" इत्याख्यो ग्रन्थः प्रकाशितः, यत्र हि तन्त्रसाहित्यस्य सामान्यः परिचयः, प्राचीनानि तन्त्राणि, श्रीकुल-कालीकुल-कौल-वैष्णव-तन्त्राणि, निबन्धग्रन्थाः, पद्धतिग्रन्था इत्यादयो विषयाः सुष्ठु विवेचिताः। डॉ० शोते-रमनमहोदयेन कुब्जिकामतस्य षट्सहस्रश्लोकात्मकसंस्करणस्याद्यानि पञ्च पटलानि[२] सपरिश्रमं सम्पाद्योपोद्घातपरिशिष्टादिभिः सह समुपस्थापितानि। ग्रन्थद्वयमेतदवश्यं प्रशंसितं स्यात् तन्त्रागमानुशीलनरुचीनां विदुषां समाजे।

किञ्च, डॉ० तून-गान्द्रियानमहोदयेन कम्बुजशिलालेखे स्मृतस्य वीणाशिखतन्त्रस्य मुद्रणं चिकीर्ष्यते। वामतन्त्रमेतत् तुम्बुरोस्तस्य जयादीनां चतसृणां शक्तीनां च वरिवस्यां वर्णयति। अभिनवगुप्तेन पञ्चदशाह्निके समुद्धृतेषु ब्रह्मयामल-आनन्दशासन-योगसंचार-त्रिशिरोभैरव-निर्मर्यादशास्त्र-निशिसंचार-वीरावलीहृदय-देव्यायामल- नन्दिशिखा - भर्ग-शिखा-गमशास्त्र-सङ्कर्षणीयामल-नवनित्याविधान-भूतक्षोभ - पञ्चामृतादिषु वामाचाराः प्रतिपाद्यन्ते। एतेषु द्वादशसाहस्रमानन्देश्वरतन्त्रं गमशास्त्रं नन्दिशिखातन्त्रं च नूनम्, अन्यानि च कानिचन वामतन्त्राणि स्युः। नेत्रतन्त्रे चैकादशाधिकारे वामाचारपद्धत्या भगवतो वरिवस्या वर्णिता।

सिंहावलोकितन्यायेन कांश्चन विषयान् पुनरत्र परीक्षामहे। तथाहि—आधार-कारिकापरपर्यायः परमार्थसारो भगवता शेषेण प्रोक्त इत्यनन्तकारिकानाम्नाऽपि प्रथते। सोऽयं सांख्यनयग्रन्थ इति योगराजो (पृ० ७) वक्ति। तन्न, तस्याद्वैतवैष्णवागमानुर्वति-त्वात्। हालैण्डवासिनो विद्वांसः सार्धत्रिशहस्रश्लोकात्मकस्य षट्सहस्रश्लोकात्मकस्य च कुब्जिकामतस्य[३] सव्याख्यस्य संस्करणं कुर्वन्ति। अवसरेऽस्मिन्नभिनवगुप्तादिभिः

---

१. सिद्धान्तशैवागमग्रन्थानामुद्धाराय बद्धपरिकरमेतत् संस्थानं ग्रन्थानामत्युत्तमानि संस्करणानि प्रकाशयति। टिप्पणीषु समानविषयाणां ग्रन्थान्तरस्थलानामुद्धरणानि नूनं महदुपयोगीनि भवन्ति। एतदर्थं डॉ० एन० आर० भट्टमहोदया अभि-नन्दनार्हाः।

२. यूरोपीयदेशेष्वन्यत्र च पूर्वं वेदादिविषयका ग्रन्था देवनागरलिप्यामेव प्रकाश्यन्ते स्म। साम्प्रतं तु रोमनलिप्यामेव ते प्रकाश्यन्ते। भारतेऽपि तन्त्रागमविषयका ग्रन्था वङ्ग-तेलुगु-ग्रन्थलिपिष्वपि मुद्रयन्ते। तेन ग्रन्थानामीदृशानां सार्वत्रिको लाभो दुष्करः संजायते। संस्कृतग्रन्थानां सर्वेषां देवनागरलिप्यामेव सर्वत्र प्रकाशनं स्यादित्येतदर्थं संस्कृतप्रणयिभिर्मनीषिभिः प्रयतनीयम्।

३. कुब्जिकातन्त्रं पृथगुपलभ्यत इति कुब्जिकामततन्त्रमिति नाम भ्रममिवोत्पादयतीति प्राचीनस्य कुब्जिकामतमिति, नूतनस्य च कुब्जिकातन्त्रमित्येव नाम सर्वत्र स्थापनीयम्।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



परात्रिंशिकाविवृत्यादिषु स्मृतानि मतशास्त्रादिवचनान्यवश्यं परीक्षणीयानि। क्षेमराजो न केवलं नारायणकण्ठम्, तत्पुत्रं रामकण्ठमपि स्मरतीत्युपोद्घातेऽत्रैव (पृ० ६३) द्रष्टव्यम्। तेन रामकण्ठोऽपि क्षेमराजात् पूर्वतनस्तत्समसामयिको वा वृद्धो विद्वानिति मन्तव्यम्। आक्सफोर्डविश्वविद्यालयस्थो डॉ० ए० साण्डरसनमहोदयो जयद्रथयामलस्याऽभिनवगुप्तेन तन्त्रराजभट्टारकनाम्ना स्मृतस्य संस्करणं सज्जीकरोतीति सूचयत्यस्मान् पेरिसनगरस्थफ्रेंचराष्ट्रीयविद्यासंस्थानस्य वरिष्ठो विद्वान् डॉ० आन्द्रे-पादुमहोदयः। अभिनवगुप्तेन (प० त्रिं० वि०, पृ० २३५) तिलकशास्त्रं स्मर्यते। तदेतत् तिलकशास्त्रं [1]ज्ञानतिलकाद्भिन्नमभिन्नं वेति परीक्षणीयम्। मुद्रिते परातन्त्रे परातन्त्रस्य परामतस्य वा वचने नोपलभ्येते। भट्टगङ्गाधरस्य स्तोत्रमृजुविमर्शिन्यां (पृ० ६९, ८०) स्मर्यते, रससारसंग्रहवचनं च तत्र (पृ० १०९) संगृह्यते। रससारसंग्रहस्य च कर्ता कश्चन गङ्गाधर इति स्तोत्रकारस्य रससारसंग्रहकारस्य चैक्यविषये सुदृढं प्रमाणमन्वेषणीयम्। कर्मकाण्डक्रमावल्यां सूचितस्य (पृ० ३१-३२) लीलावतीशिवागमस्योपपुराणत्वेनोल्लेखो डॉ० आर० सी० हाजरामहोदयस्य ग्रन्थे (स्टडीज इन दी उपपुराण्स, I. १३) एकाम्रपुराणधृतोपपुराणसूचीप्रामाण्येन दृश्यत इव। सौरसंहितामातृका प्राचीना डॉ० तून-गान्द्रियानग्रन्थे (पृ० १११) विवृता। नेत्रतन्त्रोद्धृतो (१३।१७-२७) विषयस्तत्रान्वेषणोयः। किञ्च, "अन्यथा देवपाण्डित्यम्" (म० म० प०, पृ० ६) इति श्लोको य० च० (पृ० २५१) इत्यत्र—"अन्यथा लोकपाण्डित्यं वेदपाण्डित्यमन्यथा। अन्यथा तत्पदं शान्तं लोकः क्लिश्नाति चान्यथा॥" इत्येवं पाठान्तरेण सह हरप्रबोधशैवाचार्यवचनत्वेन स्मर्यते। अत्रैव दक्षिणवाममार्गशब्दौ प्रयुक्तौ दृश्येते।

आनन्दशासन-उदयाकरपद्धति-ऊर्मिकौल-कालिकाक्रम-कुलगह्वर- कुलरत्नमाला-क्रमसद्भाव-क्रियाकालगुणोत्तर-तन्त्रसद्भाव-तोतुल-त्रिकसार - त्रिशिरोमत - देव्यायामल-नन्दिशिखा-निशाचार-पराख्यसंहिता-भैरवागम-माधवकुल-मुकुटसंहिता - वीरावलीशास्त्र-शिवतनुशास्त्र-संवित्प्रकाश - सङ्केतपद्धति - सिद्धयोगीश्वरीमत - [2]स्वच्छन्दसंग्रहसदृशानां ग्रन्थानां भूयांसि महत्त्वपूर्णानि वचनानि समुपलभ्यन्ते। तेषु केषाञ्चन मातृका अपि लभ्यन्ते। यदि तत्राऽत्रत्यानि वचनानि समुपलभ्येरंस्तर्हि तेषां शोभनं संस्करणमतीवावश्यकम्। किञ्च, नेपालमातृकाः प्रायोऽशुद्धिभूयिष्ठा वर्तन्ते। तदाधारेण केचन विद्वांसो नूतना काचन संस्कृतभाषापद्धतिरत्रोपयुक्तेति कल्पयन्ति। तैस्तेषां तेषां ग्रन्थानां प्रथमं नेपालेतरमातृका दृष्ट्वैव, यदि ताः समुपलभ्यन्ते, स्वमतस्थापनाय प्रयतनीयम्, नात्र त्वरा विधेया।

क्षेमराजेन स्वच्छन्दोद्योते दीक्षाप्रकरणे (III. ९४) कैरणव्याख्यातृमतं समालोच्यते। तत्रैव नैकत्र स्वच्छन्दतन्त्रव्याख्याकारं भुसुकं स स्मरति। "यत्तत्कुर्वाणा उप-

---

१. डॉ० मार्क-डिच्कोफस्कीमहोदयेन कस्यचन ज्ञानतिलकस्य मातृकाप्रतिकृतिः संगृहीता। तस्याः परीक्षणमपेक्षितम्।

२. स्वच्छन्दसंग्रहस्य मातृका मद्रपुरीराजकीयपुस्तकालये वर्तते। तत्र दीपिकाधृतानि वचनानि सर्वाण्युपलभ्यन्त इत्यपि मार्कमहोदय एव सूचयति।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



हास्याः" (I. ६) इति नेत्रोद्योतवचनेन च तस्यापि प्राचीनं व्याख्यानान्तरमासीदिति सूच्यते। कुलपञ्चाशिका-कालीकुलपञ्चाशत्सदृशानां नाम्नामपि परीक्षणमपेक्षितम्, यतो हि कासुचन मातृकास्वेक एव ग्रन्थो भिन्नैर्भिन्नैर्नामभिर्लिखितः समुपलभ्यते।

एवं प्रासङ्गिकान् कांश्चन विषयान् समुपस्थाप्य परिसमाप्यतेऽयमुपोद्घातः। अवसरेऽस्मिन् वयं तान् पूर्वाचार्यान् आधुनिकांश्च ग्रन्थप्रणेतॄन् स्मरामः, यैः क्षुण्णेन हि पथाऽस्माभिरेषा विद्यायात्रा सम्पादिता। यत्र क्वचन मतान्येतेषां समालोचयतामस्माकं चेतसि तान् प्रति समादरो नाणुमात्रमपि क्षणमप्यलुप्यत। सर्वे च ते महानुभावाः कृतसहायाः पुनरप्यत्र स्मर्यन्ते, ये हि सात्वतसंहिताया उपोद्घाते स्मृताः। अन्ते च गच्छतः स्खलनं क्वापीति न्यायेन क्षाम्यन्ते मनीषिण इति।

विदुषां वशंवदः

व्रजवल्लभद्विवेदः, शास्त्रचूडामणिः

रामनवमी, संवत् २०४०

वाराणसी (२१-४-८३ ई०)।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

# विषयसूची

**प्रास्ताविकम्** क-ख

**उपोद्घातः (पूर्वार्धः)** १-१११

लुप्तागमपदाभिप्रेतोऽर्थः, ससंकेतमाधारग्रन्थपरिचयः—पृ० १, आधारग्रन्थ-विश्लेषणम्—५, आधारग्रन्थकर्तृकालक्रमः—६, ग्रन्थ-ग्रन्थकारविश्लेषणम्—८, अभिन्नानि शुद्धानि वा ग्रन्थ-ग्रन्थकर्तृनामानि—९, मुद्रिता ग्रन्थाः—१०, आगमादि-ग्रन्थाः—१०, आचार्याः—१३, दर्शनयोगग्रन्थाः—१४, ग्रन्थ-ग्रन्थकारपरिचयः—१४, आगमनिगमपदनिर्वचनम्—२८-२९ टि०, प्रतिष्ठातन्त्राणि—४२ टि०, शारदातिलक-कारः—४६ टि०, विविधनामावलीपरोक्षणम्—८५, शैवसिद्धान्तागमा उपागमाश्च—८६, शिवस्य पञ्चवक्त्रेभ्यो निर्गतानि तन्त्राणि—९१, चतुष्षष्टितन्त्राणि चतुष्षष्टिभैरवा-गमाश्च—९४, बहुरूपाष्टकम्—१०१ टि०, भैरवाष्टकम्—१०३ टि०, यामलाष्टकम्—१०६ टि०।

**उपोद्घातः (उत्तरार्धः)** ११२-२०२

शिवाज्ज्ञानं प्रवर्तते—११२, शास्त्रविस्तरः—११३, शास्त्रेषु प्रमाणतार-तम्यम्—११४, प्रमाणाष्टकम्—११६ टि०, शास्त्रोपदेष्टारः (आयातिक्रमः)—११७, पाशुपतसम्प्रदायप्रवर्तकः श्रीकण्ठनाथः—११७ टि०, पञ्चविधः षड्विधो वा संबन्धः—१२०, शास्त्रप्रयोजनम्—१२१, त्रिपदार्थं चतुष्पादं शास्त्रम्—१२२, षट्पदार्थमयं ज्ञानम्—१२३ टि०, पतिः (शिवः)—१२३, शिवस्याशरीरित्वम्—१२४, विवर्तपरिणाम-स्वरूपविचारः—१२४-१२५ टि०, शक्तिरेव करणम्—१२६, शिवस्य पञ्चमन्त्रतनुत्वम्, शिवस्य पञ्चकृत्यकारित्वम्—१२७, पतेर्निमित्तकारणत्वम्—१२९, पतेस्त्रैविध्यम्—१३०, पशुः (जीवः)—१३१, त्रिविधः पशुः—१३२, पुर्यष्टकविवेचनम्—१३२-१३३ टि०, पशोरवस्थात्रयम्—१३४, प्रमातृसप्तकम्—१३४ टि०, पाशाः—१३६, मलः—१३६, तिरोधानशक्तिः—१३८, महामाया—१३९, नादविचारः—१३९ टि०, बिन्दुविचारः—१४० टि०, कुण्डलिनी महामाया—१४०, वाग्विचारः—१४१-१४२ टि०, मातृका-विचारः—१४३ टि०, माया—१४४, कर्म—१४७, अवबोधरूपं परं ज्ञानम्—१५१, सपरिकरा दीक्षा—१५४, शक्तिपातः—१५५, कर्मसाम्यम्—१५६ टि०, दीक्षाया महत्त्वम्—१५८, दीक्षालक्षणम्—१५९, मलक्षयकरी दीक्षा, दीक्षाधिकारी—१६०, दीक्षाभेदाः—१६१, अभिषेकः—१६२, गुरुस्तस्य चरणौ पादुका च—१६३, शिष्यः—१६४, भोगमोक्षौ—१६५, जीवन्मुक्तः—१६७, मनसश्चतस्रोऽवस्थाः—१६८ टि०, मुक्तः—१७०, मुक्तिः—१७१, मुक्तिसाधनानि—१७२, मोक्षभेदाः—१७३, अद्वयदृष्ट्या भोग-मोक्षौ—१७३, षडध्वशोधनम्—१७४, कालाध्वा—१७५, वर्णाध्वा—१७६, अनुत्तर-

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तत्त्वम्—१७८, कामतत्त्वं विषतत्त्वं च—१८०, बिन्दुः—१८४, पदाध्वा—१८२,
मन्त्राध्वा—१८३, मन्त्रजपः—१८५, देशाध्वा, कालाध्वा—१८६, तत्त्वाध्वा—
१८७, परतत्त्वम्—१८७, शून्यताविमर्शः—१८८-१८९ टि०, अहन्ता—१८९ टि०,
भैरवः—१९० टि०, भगवान्—१९० टि०, षाड्गुण्यम्—१९०-१९१ टि०, शुद्धतत्त्वानि—
१९१, शुद्धाशुद्धतत्त्वानि—१९२, अशुद्धतत्त्वानि—१९४, भुवनाध्वा—१९७, षडध्व-
शुद्धिः—१९९।

सांस्कृतिकं पर्यवेक्षणम् २०३-२२०

तन्त्रागमशब्दौ—२०३, योगः—२०३ टि०, प्रमाणादिपरीक्षा—२०३ टि०,
विविधमतसमालोचनम्—२०४ टि०, सर्वशास्त्राणां प्रामाण्यम्—२०५, शास्त्राणामनु-
स्यूतता—२०५, प्रकाशविमर्शात्मकं परतत्त्वम्—२०६, शास्त्राणां विकासक्रमः—
२०७ टि०, तन्त्रागमशास्त्रस्य प्राचीनता—२०९, भगवद्गीतायां संशोधनानि—२१०,
समता—२११, पाशा आग्रहा वा, जातिग्रहः, शङ्का—२१२, शुद्ध्यशुद्धिव्यवस्था,
विधिनिषेधमीमांसा—२१४, योगाङ्गानामनुपयोगिता—२१५, सत्तर्क-स्वानुभवयोर्गरी-
यस्त्वम्—२१६, उपसंहारः—२१७

लुप्तागमसंग्रहः (द्वितीयो भागः) १-२१८

लुप्तागमसंग्रहद्वितीयभागस्य श्लोकार्धानुक्रमणी २१९-२६६

लुप्तागमसंग्रहप्रथमद्वितीयभागयोः समाविष्टा ग्रन्था ग्रन्थकाराश्च २६७-२८०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS

# लुप्तागमसंग्रहः

## ( द्वितीयो भागः )

### अध्वसिद्धिः

[1]चित्रशक्तिसहस्राढ्यं शिवतत्त्वं समातिगम् ।
विभक्तं पञ्चधा चैकं शक्त्युल्लासविभेदतः ॥



### अनन्तपादः

[2]अन्ते पुराणतां दृष्ट्वा प्रतिक्षणं नवत्वहानिरनुमीयते ।



### अनन्तशक्तिभट्टारकः

[3]यत्प्रोतं विश्वमेतद् भुवनविरचनातत्त्ववर्णाद्युद्य-
न्मन्त्रस्फारानुषक्तं व्रतनपदकलाद्वैतरूपं विभाति ।
तदीयं शक्तिसूत्रं परमशिवमहापूगदेदीप्यमानं
वन्दे पूजाक्रमस्य प्रचुरफलविधौ हेतुभूतं (च) हृत्स्थम् ॥



---

१. त० व्या० कु०, पृ० ८४
२. ई० प्र० वि० वि०, भा० २, पृ० ३१२
३. ज्ञा० वि०, प० ३८ क

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# अनुभवस्तोत्रम्

( १ )

[1]त्वत्स्वरूपमविकल्पमक्षजा
कल्पने न विषयीकरोति चेत् ।
अन्तरुल्लिखितचित्रसंविदो
नो भवेयुरनुभूतयः स्फुटाः ॥

( २ )

[2]उत्तरोत्तरमवग्रहैः[3] पदं
पश्यतोऽप्यधरमुत्तरस्य यः ।
साधनस्य निजभावनाग्रहो
हेतुरत्र भवतो मरीचयः ॥

( ३ )

[4]कस्य नाम करणैरकृत्रिमैः
पश्यतस्तव विभूतिमक्षताम् ।
विभ्रमादरवतोऽपि जायते
त्वां व्युदस्य वरद ! स्तुतिस्पृहा ॥



१. तन्त्रा०, भा० १, आ० १, पृ० २२६
२. स्तव० क्षेम०, पृ० ५४; ई० प्र० वि० वि०, भा० ३, पृ० २६२
३. मवग्रहग्रहैः—ई० प्र० वि० वि० ।
४. ई० प्र० वि०, भा० १, पृ० २०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## अवतारकनाथः ( शिवानन्दनाथः )

( १ )

[1]एकं स्वरूपरूपं प्रसरस्थितिविलयभेदतस्त्रिविधम् ।
प्रत्येकमुदयसंस्थितिलयविश्रमतश्चतुर्विधं तदपि ॥
इति वसुपञ्चकसंख्यं विधाय सहजस्वरूपमात्मीयम् ।
विश्वविवर्तावर्तप्रवर्तक जयति ते रूपम् ॥

( २ )

[2]कालस्य कालि ! देहं विभज्य मुनिपञ्चसंख्यया भिन्नम् ।
स्वस्मिन् विराजमानं तद्रूपं कुर्वती जयसि ॥
........................................................ ।
भैरवरूपी कालः सृजति जगत् कारणादि कीटान्तम् ॥

## अवधूतसिद्धपादः

( १ )

[3]बध्नाति काचिदपि शक्तिरनन्तशक्तेः[4]
क्षेत्रज्ञमप्रतिहता भव[5]पाशजालैः ।
ज्ञानासिना च विनिकृत्य गुणानशेषा-
नन्या करोत्यभिमुखं पुरुषं विमुक्तौ ॥

( २ )

[6]तीर्थक्रियाव्यसनिनः स्वमनीषिकाभि-
रुत्प्रेक्ष्य तत्त्वमिति यद्यदमी वदन्ति ।

---

१. तन्त्रा० वि०, भा० ३, आ० ४, पृ० १९७
२. तन्त्रा० वि०, भा० ३, आ० ४, पृ० १९८
३. पर० योग०, पृ० ३० ; त० व्या० कु०, पृ० ५४
४. रलुप्तशक्तेः—त० व्या० कु० ।
५. तव—त० व्या० कु० ।
६. पर० योग०, पृ० ६२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तत्तत् त्वमेव भवतोऽस्ति न किञ्चिदन्यत्
संज्ञासु केवलमयं विदुषां विवादः ॥

( ३ )

[1]प्राकाम्यमात्मनि यदा प्रकटीकरोषि
व्यक्तीः प्रतिक्षणमनेकविधा दधानः ।
त्वय्येव सोऽपि भगवन् भजतेऽर्थवत्तां
प्रायो विदग्धरचितः क्षणभङ्गवादः ॥

( ४ )

[2]ऐश्वर्यमप्रतिहतं सहजो विराग-
स्तृप्तिर्निसर्गजनिता वशितेन्द्रियेषु ।
आत्यन्तिकं सुखमनावरणा च शक्ति-
र्ज्ञानं च सर्वविषयं भगवंस्तवैव ॥

( ५ )

[3]यथा नीता रसेन्द्रेण धावतः शातकुम्भताम् ।
पुनरावृत्तये न स्युस्तद्वत्तन्मतचोदिताः ॥



## आज्ञावतारः

[4]विश्वग्रसनशीलं तद्रूपं तेजोमयं ततः ॥



---

१. ई० प्र० वि० वि०, भा० २, पृ० १७२
२. य० च०, परि० ५-६
३. मृ० वृ० यो०, पृ० ४३
४. यो० दी०, पृ० २६२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## आद्यवर्णत्रिंशिका

[1]अबिन्दुं सविसर्गं च अकारं जपतो महान् ।
उदेति देवि ! सहसा ज्ञानौघः पारमेश्वरः ॥



## आनन्दशासनम्

( १ )

[2]मातङ्गा हुलहुलाश्चान्ये हेतुका दिव्यरूपिणः ।
कापालिकाश्च कङ्काला महोच्छुष्माश्च शोभनाः ॥...
एवं संख्याविहीनास्तु महाचण्डेश्वरेरणात् ।
चण्डद्रव्यविलुप्तास्तु दीक्षिताः शिवशासने ॥
चण्डद्रव्येण जीवन्ति ते स्मृता ब्रह्मराक्षसाः ।...
रमन्ते विविधैर्भोगैस्तेऽपि पातालवासिनः ।
पाताले भूतराजानो भवन्ति बलदर्पिताः ॥

( २ )

[3]उक्तं च श्रीमदानन्दे कर्म संश्रित्य भावतः ॥
जुगुप्सते तत् तस्मिंश्च विफलेऽन्यत् समाश्रयेत् ।
दिनाद् दिनं ह्रसंस्त्वेवं पच्यते रौरवादिषु ॥

( ३ )

[4]यदुक्तं परमेशेन श्रीमदानन्दगह्वरे ।
समयोल्लङ्घनाद् देवि ! क्रव्यादत्वं शतं समाः ॥

१. ज्ञा० वि०, प० २१ क
२. तन्त्रा० वि०, भा० ५, आ० ८, पृ० ३४-३५
३. तन्त्रा०, भा० ८, आ० १३, पृ० २१०
४. तन्त्रा०, भा० ८, आ० १४, पृ० २२५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ४ )

[1]श्रीमदानन्दशास्त्रे च नाशुद्धिः स्याद् विपश्चितः ।
किन्तु स्नानं सुवस्त्रत्वं तुष्टिसंजननं भवेत् ॥

( ५ )

[2]दिव्यं तेजः सुगन्धाढ्यं प्रदद्देन्मातृमण्डले ।
मध्यमाङ्गुष्ठयोगेन वामहस्तेन भैरवि ! ॥
तदा सिद्धिं लभेताशु तन्त्रोक्तां नात्र संशयः ।

( ६ )

[3]श्रीमदानन्दशास्त्रे च तथैवोक्तं विशेषणम् ।
यस्माद् दीक्षा मन्त्रशास्त्रं तत्त्वज्ञानं स वै गुरुः ॥

( ७ )

[4]श्रीमदानन्दशास्त्रे च कथितं परमेष्ठिना ॥
निरपेक्षः प्रभुर्वामो न शुद्ध्या तत्र कारणम् ।
देवीतृप्तिर्मखे रक्तमांसैर्नो शौचयोजनात् ॥

( ८ )

[5]उक्तं त्वानन्दशास्त्रे यो मन्त्रसंस्कारवांस्त्यजेत् ।
समयान् कुत्सयेद् देवीर्द्यान्मन्त्रान् विना नयात् ॥

( ९ )

[6]कालान्तरेऽध्वसंशुद्ध्या पालनात् समयस्थितेः ।
सिद्धिपात्रमिति श्रीमदानन्देश्वर उच्यते ॥

---

१ तन्त्रा०, भा० ९, आ० १५, पृ० २७-२८
२. तन्त्रा० वि०, भा० ९, आ० १५, पृ० १३९
३. तन्त्रा० भा० ९, आ० १५, पृ० २७७
४. तन्त्रा०, भा० ९, आ० १५, पृ० २८१
५. तन्त्रा०, भा० १०, आ० १६, पृ० २६-२७
६. तन्त्रा०, भा० ११, आ० २९, पृ० १३०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १० )

[1]वामया विसृजेत् सर्वं ज्येष्ठया पालयेत् पुनः ।
रौद्र्या लोकोपसंहारं कुरुते स्वेच्छया प्रभुः ॥
काल्या कलति भूतानि विकरण्या किरेत् कलाः ।
बलमप्यन्यया(प्रमथन्या) सर्वं बलं मथ्नाति चान्यया ॥
दमन्या दमयित्वा तु मनः संकल्परूपकम् ।
नयते परमं स्थानमुन्मन्या तु महेश्वरः ॥



## आर्याकारः

[2]अज्ञातोऽर्थः फलवानसकृत् सम्भावितश्च दृष्टान्तैः ।
पौर्वापर्यानुगतः श्रुतः कथं कथ्यते तथा नेति ॥



## इतिहासरहस्यम्

[3]पुराणं तत्परं तेजो येनाभिनवतेजसाम् ।
ह्रियते चार्प्यते तेजस्तज्ज्योतिर्भैरवात्मकम् ॥



## उच्छुष्मभैरवः

( १ )

[4]आकारश्छेदने प्रोक्त ऋकारस्ताडने······।

१. स्व० उ०, भा० ५, प० १०, पृ० ४८४-४८५
२. त० व्या० कु०, पृ० ५
३. ई० प्र० वि० वि०, भा० १, पृ० ५१
४. ने० उ०, भा० २, पृ० १७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS





( २ )

दीपने तु महाभाग प्रणवोभययोजनम् ।
बोधने तु नमस्कारः स्वाहाकारोऽमले तथा ॥
वौषडन्तर्गतं मन्त्रमभिषेके नियोजयेत् ।
फट्कारोभयसंयुक्तं ताडने विनियोजयेत् ॥
आद्यन्तं चैव हुङ्कारमिन्धने विनियोजयेत् ।...
लाङ्कारेण तु बीजेन तथैकान्तरितेन च ।
बलवान् जायते मन्त्रः.................. ॥
मृत्युजित्संपुटीभूतं जपेत्तद्युतं पुनः ।
जप्तेनानेन विधिना मन्त्ररक्षा कृता भवेत् ॥....
एकान्तरितयोगेन वाङ्कारेण तु सर्वदा ।
भवेदाप्यायितो मन्त्रः.................. ॥
मन्त्रमादौ लिखेद् विद्वानभिधेयमतः परम् ।
मन्त्रमस्य लिखेत् पश्चात् संपुटं परिकीर्तितम् ॥...
अभिधेयार्णमेकैकं मन्त्रार्णैः संपुटीकृतम् ।
ग्रथितं.............................. ॥
ऊर्ध्वेऽधस्तात्तथा तिर्यङ्मन्त्रं कुर्याद्विचक्षणः ।
मध्ये संज्ञा भवेत्तत्र ग्रस्तमित्यभिधीयते ॥....
विन्यसेदादितो मन्त्रमभिधेयमतः परम् ।
एवमेतद् द्विधा योज्यं समस्तं......... ॥
अभिधेयं भवेत् पूर्वं ततो मन्त्रः सकृद् भवेत् ।
विदर्भितं.......................... ॥
मन्त्रोऽभिधेयमाक्रम्य समन्तात् परिवेष्टयेत् ।
आक्रान्तं.......................... ॥

---

१. ने० उ०, भा० २, पृ० ७५-७९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



अन्ते मन्त्रं त्रिधा योज्य सकृत्पूर्वं तु योजयेत् ।
मध्ये चास्य भवेत् संज्ञा आद्यन्तं········· ॥
यद् ग्रस्ते लक्षणं प्रोक्तं गर्भस्थेऽपि तदुच्यते ।····
यद् भवेत् संपुटे रूपं तद् भवेत् सर्वतोवृते ॥···
मन्त्रादावभिधेयं च त्रिधा योजितसंपुटम् ।
युक्त्या विदर्भणं···················· ॥
न्यस्यादावभिधेयं तु पश्चान्मन्त्रं त्रिधा लिखेत् ।
विदर्भग्रथितं···························· ॥



## उत्तरषट्कम्

( १ )

[1]कामरूपं भवेत् पूर्वे कोल्लगिर्यं तु दक्षिणे ।
चोम्भारं पश्चिमे भागे उत्तरे चोणकं भवेत् ॥
मलयं चाग्निदिग्भागे नैर्ऋत्यां तु कुलान्तकम् ।
जालन्धरं तु वायव्ये ऐशान्ये देविकोट्टकम् ॥

( २ )

[2]यद्यदुच्चरते मन्त्री मन्त्रवर्णं शुभाशुभम् ।
तत्तत् सिद्ध्यति देवेशि योनिमुद्रानिबन्धनात् ॥

( ३ )

[3]कदम्बगोलकाकारं तं कामं बिन्दुरूपिणम् ।

१. अ० र०, पृ० १०
२. अ० र०, पृ० ७०
३. अ० र०, पृ० २३१



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ४ )

[१]पश्चिमाभिमुखं लिङ्गं योनिस्थं परिकीर्तितम् ।
स्वयम्भूर्बाणलिङ्गं वा इतरं वापि सुव्रते ॥

( ५ )

[२]स्पर्शनं चावलोकश्च संभाषा विन्दुदर्शनम् ।
स्वयमावेशनं चैव मन्त्राणां पञ्चलक्षणम् ॥

( ६ )

[३]अथातः संप्रवक्ष्यामि सम्प्रदायसमन्वितम् ।
त्रैलोक्यडामरं मन्त्रं त्रिपुरायोगमुत्तमम् ॥...
पूर्वोक्तं यन्त्रमालिख्य त्रिपुरावाचकं महत् ।
अथातः संप्रवक्ष्यामि त्रिपुरायोगमुत्तमम् ॥...
एषा सा मूलचूलाद्या नाम्ना त्रिपुरभैरवी ।



## उदयाकरपद्धतिः

( १ )

[४]वाडवाख्यपदप्रोत्था वाडवी वाडवापगा ।
संप्राप्य वाडवं धाम प्रलीना शाम्भवे पदे ॥
तयोर्द्वयोः समायोगाल्लभते शाश्वतं पदम् ।
तत्र मग्नस्तु यः स्नायात् स मुक्तो भवबन्धनात् ॥

---

१. अ० र०, पृ० २७०
२. ऋ० वि०, पृ० २५१
३. त्रि० ल० वृ०, पृ० २-३; २४
४. ज्ञा० वि०, प० ४ क-ख

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[१]स्नात्वा तु विमले तीर्थे पुष्करे हृदयाश्रिते ।
बिन्दुतीर्थेऽथवा स्नायात् पुनर्जन्म न विद्यते ॥

इडासुषुम्ने शिवतीर्थे यस्मिन् ज्ञानाम्बुपूर्णे वहतः शरीरे ।
ब्रह्माम्बुभिः स्नाति तयोः सदा यः किं तस्य गाङ्गैरपि पौष्करैर्वा ॥

( ३ )

[२]आद्या मृणालसूत्राभा पीता रक्ता तु मध्यमा ।
श्वेता त्वन्तर्गता शक्तिः सन्ध्या त्रितयरूपिणी ॥

( ४ )

[३]शिवशक्त्योश्च संयोगो यस्मिन् काले प्रजायते ।
सा सन्ध्या कुलनिष्ठानां समाधिः साऽभिधीयते ॥

चन्द्रभास्करसंपर्को यस्मिन् काले प्रजायते ।
सा सन्ध्या तामुपासीत लोकसन्ध्यां न चेतराम् ॥

( ५ )

[४]कन्दात् कुण्डलिनीं तूर्णं भिन्दन्ती ग्रन्थिसंचयम् ।
सिञ्चन्ती चामृतेनैव सन्दधाना परं पदम् ॥
सा तु सन्ध्या समाख्याता कौलिकी तु विशेषतः ।

( ६ )

[५]मेषव्याघ्रगजोक्षऋक्षतुरगत्वग्भिस्तु षट्कर्मसु
प्रत्येकं विविधासनानि कृमिजं हाराख्यशार्ङ्गं तथा ।

---

१. ज्ञा० वि०, प० ५ क
२. ज्ञा० वि०, प० ७ ख
३. ज्ञा० वि०, प० ७ ख
४. ज्ञा० वि०, प० ७ ख-८ क
५. ज्ञा० वि०, प० १२ ख

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मोक्षं भोगदमासनं प्रकुरुते त्वौर्णं तथा चैलजं
वैत्रं चैव मृगाजिनं शुभकरं सर्वप्रणीतं बुधैः ॥
भूमौ भूपभयं कुलक्षयकरं वंशासनं रोगदं
काष्ठं चैव तथासनं प्रकुरुते शैलं महादुःखदम् ।
फुल्लं पल्लवमृत्तिकासनयुतं तार्णं च विद्वेषकृद्
मैषं कृमिजमासनादिसकलं मोक्षादिसिद्धिप्रदम् ॥

( ७ )

[1]शुद्धे भूमितले सुगन्धदशदिक्प्रोत्फुल्लपुष्पान्विते
गन्धामोदकधूपदीपबहुले मांसासवैः संभृते ।
पट्टे हेममयेऽथ रूप्यजनिते ताम्रेऽथवा दर्पणे
कस्तूरीघुसृणेन्दुचन्दनसुधाभिः श्रीचक्रराजं लिखेत् ॥

यच्चक्रं वह्निकोणं वसुदशककुप्चक्रकोणोपशोभं
तद्बाह्येऽप्यष्टपत्रं कमलमिह ततः षोडशारं सुवृत्तम् ।
वार्द्धिद्वारं च यच्चाभिलषितविषयोत्पादने कल्पवृक्षं
मन्त्रस्था सापि देवी वितरतु तरसा प्रार्थितं त्रैपुरी वः ॥

( ८ )

[2]विषमे व्याधिनिर्देशो न्यूने चैव धनञ्जयः ।
अधिके कलहो यस्मात् तस्माद्यागसमीक्षकः ॥
कृशा स्थूला च वक्रा च रेखादोषाः प्रकीर्तिताः ।
स्निग्धा मनोहराः कार्याः सर्वसम्पत्प्रदायिनीः ॥

कृशया व्याधिजननं स्थूलया च दरिद्रता ।
वक्रया मरणं यस्मात् तस्माद् रेखां विलक्षयेत् ॥

---

१. ज्ञा० वि०, प० १३ ख
२. ज्ञा० वि०, प० १४ क

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ९ )

[1]अखण्डमण्डलाकारं विश्वं व्याप्य व्यवस्थितम् ।
त्रैलोक्यं मण्डितं येन मण्डलं तत् सदाशिवम् ॥
मकारे मातरः सर्वा डकारे डाकिनीगणाः ।
लकारे लाकिनी यस्मात् तस्मान्मण्डलमुच्यते ॥

( १० )

[2]पात्रं काञ्चनरौप्यकाचजनितं मुक्ताकपालोद्भवं
विश्वामित्रमयं च कामदमिदं हैमं शिलास्फाटिकम् ।
तारं प्रीतिदमष्टसिद्धिजनकं श्रीनारिकेरोद्भवं
कापालं स्फुटमन्त्रसिद्धिजनकं मुक्तिप्रदं मौक्तिकम् ॥

( ११ )

[3]असंस्कृतं वृथा पानं संस्कृताद्भैरवः स्वयम् ।
चक्रपूजार्चने शस्तं मन्त्रसिद्धिकरं परम् ॥
असंस्कृतं पशोः पानं कलहोद्वेगपापकृत् ।
संस्कृतं सिद्धिजनकं प्रायः श्वित्रादिशोधनम् ॥
संस्कारसंस्कृतान्मद्याद् दत्तात् तुष्यन्ति देवताः ।
मन्त्राणां स्फुरणं तेन महापातकनाशनम् ॥
आद्ये श्रीकान्तिसौभाग्यं ज्ञानं संस्कृतपानतः ।
अन्ते स्वयं खेचरत्वं पतनं विधिवर्जनात् ॥

( १२ )

[4]नष्टैः पर्युषितैश्चैव दुर्गन्धैर्जलवर्जितैः ।
हेतुभिः परपात्रस्थैस्तर्पणं निष्फलं भवेत् ॥

---

१. ज्ञा० वि० प० १५ ख
२. ज्ञा० वि०, प० १७ क
३. ज्ञा० वि०, प० १८ ख
४. ज्ञा० वि०, प० १८ ख

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्वपात्रस्थितं हेतुं ................................ ।
........................ .... इत्याज्ञा पारमेश्वरी ॥

( १३ )

[1]यस्मात् कुण्डलिनी स्फूर्जत्सोमसूर्याग्निमण्डलात् ।
भिन्दन्ती ब्रह्मणो ग्रन्थिं गच्छन्ती मध्यवर्त्मना ॥
छिन्दन्ती पाशजालानि ज्वलन्ती स्वेन तेजसा ।
विशन्ती पूर्णपीठं सा द्रावयन्त्यसमां कलाम् ॥
स्रावयन्ती सुधापूरं प्लावयन्ती चराचरम् ।
तेनामृतेन दिव्येन तर्पयेद् देवतां पराम् ॥

( १४ )

[2]स च भेदद्वयेनास्ति ( यदुक्तं ) रुद्रयामले ।
त्रिकोणमध्ये यत्सूर्यं शृङ्गाटाकृति संस्थितम् ॥
तत्रारूढमवैसव्यं(?) वाग्भवं तदिदं प्रिये ।
तदूर्ध्वं जननस्थानात् संस्थिता शक्तिरुत्तमा ॥
ध्वनिरूपा तु सा देवी द्विभुजा परिवेष्टिता ।
कामराजमिदं भद्रे गोपनीयं प्रयत्नतः ॥



# ऊर्मिकौलशास्त्रम्

( १ )

[3]पवनभ्रमणप्राणविक्षेपादिकृतश्रमाः ।
कुहकादिषु ये भ्रान्तास्ते भ्रान्ताः परमे पदे ॥

---

१. ज्ञा० वि०, प० १९ ख
२. ज्ञा० वि०, प० २१ क
३. तन्त्रा० भा० ८, आ० १४, पृ० २३१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सर्वत्र बहुमानेन याप्युत्क्रान्तिर्विमुक्तये ।
प्रोक्ता सा सारशास्त्रेषु भोगोपायतयोदिता ॥

( २ )

[1]उत्क्रान्तिर्विद्यते तत्र यत्र स्यान्मानकल्पना ।
अमाने शून्यनिर्भासे तत्रोत्क्रान्तिर्न विद्यते ॥
अस्ति चेद् भगवान् व्यापी कथयोत्क्रमणेन किम् ।
नास्ति चेद् भगवान् व्यापी कथयोत्क्रमणेन किम् ॥
उत्क्रान्तिविधियोगोऽयमेकदेशेन कथ्यते ।
विभुत्वादात्मनः सोऽपि शिवस्य च न विद्यते ॥
नास्त्यस्ति नास्ति नास्तीति कोटयो न स्पृशन्ति यम् ।
वाचामगोचरो यस्मात् तत्तत्त्वमिह कथ्यते ॥

इत्याद्युपक्रम्य—

यदि सर्वगतो देवो वदोत्क्रम्य क्व यास्यति ।
अथासर्वगतस्तर्हि घटतुल्यस्तदा भवेत् ॥
तस्मादुत्क्रान्तियोगोऽयं भ्रान्तिरेषा तमोमयी ।

( ३ )

[2]श्रीमदूर्मौ च देवीनां वीराणां चेष्टितं न वै ।
प्रथयेन्न जुगुप्सेत वदेन्नाद्रव्यपाणिकः ॥

( ४ )

[3]श्रीमदूर्मौ च कथितमागमान्तरसेवके ॥
गुर्वन्तररते मूढे देवद्रव्योपजीवके ।
शक्तिहिंसाकरे दुष्टे संपर्कं नैव कारयेत् ॥

---

१. तन्त्रा० वि०, भा० ८, आ० १४, पृ० २३२-२३३
२. तन्त्रा०, भा० ९, आ० १५, पृ० २७०
३. तन्त्रा०, भा० ९, आ० १५, पृ० २७३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ५ )

[1]तथा च श्रीमदूर्म्याख्ये गुरोरुक्तं विशेषणम् ।
गुर्वाज्ञा प्राणसंदेहे नोपेक्ष्या नो विकल्प्यते ॥
कौलदीक्षा कौलशास्त्रं तत्त्वज्ञानं प्रकाशितम् ।
येनासौ गुरुरित्युक्तो ह्यन्ये वै नामधारिणः ॥

( ६ )

[2]रहस्ये योजयेद् विप्रं परीक्ष्य विपरीततः ।
आचाराच्छक्तिमप्येवं नान्यथेत्यूर्मिशासने ॥

( ७ )

[3]पूजा तत्रैव यत्नेन रात्र्यर्धसमये प्रिये ! ।
ध्यानयुक्तो भवेत् पश्चान्मन्त्रजप्यपरायणः ॥
आदेशो जायते तस्य श्रुत्वासौ निष्क्रमेद् बहिः ।
तत्राभिवाञ्छितं भद्रे प्रापयेन्नात्र संशयः ॥...
रात्र्यर्धसमये मन्त्री विशेषात् तत्र पूजनात् ।
भ्रममाणस्य चक्रस्य वचनं यत् पतिष्यति ॥
तदविघ्नेन देवेशि सप्ताहात् सफलं भवेत् ।...
दिनार्धे पूजनात् तत्र अभीष्टं सिद्ध्यतेऽचिरात् ।...
यां सिद्धिमभिवाञ्छेत सा तस्य अचिराद् भवेत् ॥...
प्रार्थितं सिद्ध्यते देवि.................. ।
मनोवाञ्छितसिद्ध्यर्थं चक्रं सम्पूजयेत् प्रिये ।
........ ... .........तच्चक्रं पूज्य सिद्ध्यति ॥...
पूजां वै वासरारम्भे कुर्वतोऽत्र विधानतः ।
मैत्रीभावेन तिष्ठन्ति सर्वभूतानि तस्य च ॥...

---

१. तन्त्रा०, भा० ९, आ० १५, पृ० २७७
२. तन्त्रा०, भा० १०, आ० २३, पृ० २७८-२७९
३. तन्त्रा० वि०, भा० ११, आ० २८, पृ० २७-२८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मध्याह्ने पूजनात् तत्र सौभाग्यधनधान्यतः ।
वृद्धिर्भवति देवेशि !........................ ॥...

मेलापकं तु सर्वत्र तस्मिन् पर्वे भविष्यति ।...
भूमावास्फोटयेत् क्रोधात् संज्ञया यस्य वै प्रिये ।
पाषाणे स्फुटिते देवि ! तस्य मूर्धा तु सप्तधा ॥
स्फुटते तु महाभागे सत्यं नास्त्यत्र संशयः ।
निशि क्षेत्राटनाद् देवि ! सिद्धादेशमवाप्नुयात् ॥



## कक्ष्यास्तोत्रम् ( भट्टदिवाकरवत्सस्य )

( १ )

[1]जाते देहप्रत्ययद्वीपभङ्गे
प्राप्तैकध्ये निर्मले बोधसिन्धौ ।
अव्या[2]वर्त्यैर्वेन्द्रियग्राममन्त-
र्विश्वात्मा त्वं नि[3]त्यमेकोऽवभासि ॥

नात्माधीनत्वेऽपि विश्वं नियोक्तुं
सर्वो हस्तादीनिवेष्टे यथेष्टम् ।
बालो राजेवात्मशक्त्यप्रबोधात्
त्वय्यन्तःस्थे सर्वशक्तिस्तु सर्वः ॥

---

१. स्पन्द० राम०, पृ० ४०; एष श्लोकः स्प० प्र०, पृ० ३१; पर० योग०, पृ० १०३; ई० प्र० वि० वि०, भा० २, पृ० ३८८ इत्येतेषु स्थलेष्वपि दृश्यते।

२. अव्यावर्त्यं त्विन्द्रिय–ई० प्र० वि० वि० ।

३. नित्य एको–पर० योग० ।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[१]सर्वेऽनुभूता यदि नान्तरर्था-
स्त्वदात्मसात्कारसुरक्षिताः स्युः ।
विज्ञातवस्त्वप्रतिमोषरूपा
काचित् स्मृतिर्नाम न संभवेत् तत् ॥

( ३ )

[२]या अग्निहोत्राहुतयः सहस्र-
द्वासप्ततिः स्युः पुरुषायुषेण ।
नाड्यंशयुक्त्या सकृदेव जुह्वत्
संपादयेत् तास्तव मार्गविद् यः ॥

( ४ )

[३]ध्यानादिभावं स्मृतिरेव लब्ध्वा
चिन्तामणिस्त्वद्विभवं व्यनक्ति ।

( ५ )

[४]संप्रेषिते चेतसि हारितार्थ-
ज्ञप्त्यै महाज्ञान ! भवत्सकाशम् ।
युक्त्या यदावेदयसि त्वमन्त-
स्तत् तत्त्वविद् वेत्ति विजृम्भितं ते ॥

---

१. पर० योग०, पृ० ७९; ई० प्र० वि० वि०, भा० २, पृ० ३, ३२८; तन्त्रा० वि०, भा० ३, आ० ५, पृ० ४५१
२. स्व० उ०, भा० ३, प० ७, पृ० १७७
३. ई० प्र० वि० वि०, भा० २, पृ० ४
४. ई० प्र० वि० वि०, भा० २, पृ० १३-१४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



दूरान्तिदेशादिगतार्कचन्द्र-
तारादिबाह्यप्रथयैव विघ्नः।
व्याप्य स्थितं विश्वमिदं विभुं त्वां
स्वदेहविच्छेदविमोहभङ्गात् ॥

( ६ )

[1]न दृश्यते त्वत्प्रतिभासशक्तेः
स्वप्नेऽर्थवैचित्र्यनिमित्तमन्यत् ।
तद्दृष्टसामर्थ्यतया सदैषा
विश्वप्रपञ्चप्रथनैकहेतुः ॥

( ७ )

[2]भग्नो भ्रमोऽयं भवता विचित्रां
स्वप्ने विदेहादिगतिं प्रदर्श्य ।
देहे गते भस्ममये परत्र
कीदृक्........................... ... ॥

( ८ )

[3]स्वच्छन्दं वा यत्र यत्र व्रजन्ती-
र्वेशस्त्रीवच्चञ्चला या दृगाद्याः ।
शक्तीः पश्यन् केवलं चानुगच्छेद्
विश्वं बिभ्रद् भासि तस्य त्वमन्यः ॥

( ९ )

[4]एकं व्यापि व्योमकुड्यादियोगात्
तस्मिन् बाह्याभ्यन्तरत्वं समाधिः ।

---

१. ई० प्र० वि० वि०, भा० २, पृ० १४५
२. ई० प्र० वि० वि०, भा० २, पृ० ३०१
३. स्प० प्र०, पृ० ४९
४. स्प० प्र०, पृ० ५०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पश्यत्येकं ग्राहकग्राह्यरूपं
व्याक्षिप्ताक्षेप्यक्षतस्त्वत्समाधिः ॥

( १० )

[1]विश्वस्य सत्ता महतीति सोक्ता ।



## कचभार्गवम्

[2]सर्वलक्षणहीनोऽपि ज्ञानवान् गुरुरिष्यते ।
ज्ञानप्राधान्यमेवोक्तमिति श्रीकचभार्गवे ॥



## कर्णिकाकारः

[3]रागोऽप्यस्तु जगन्नाथ ! मम त्वय्येव यः स्थिरः ।
लोभायापि नमस्तस्मै त्वल्लोभालम्बनाय मे ॥



## कल्लटः

( १ )

[4]देहनीलादीनां सर्वशरीरग्रहणम् ।
प्राणाख्यनिमित्तदार्ढ्यम् ।
प्राक् संवित् प्राणे परिणता ।



---

१. ई० प्र० वि० वि०, भा० २ पृ० २०२
२. तन्त्रा०, भा० १०, आ० २३, पृ० २६४
३. मृ० वृ० क्रि०, पृ० २०४
४. तन्त्रा० वि०, भा० ११, आ० २८, पृ० १३८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]स्वशरीराधिकसद्भावभावितामिति ततः प्राह।
श्रीमत्कल्लटनाथः प्रोक्तसमस्तार्थलब्धये वाक्यम्॥

( ३ )

[2]तुटिपाते सर्वज्ञत्वसर्वकर्तृत्वलाभः।

( ४ )

[3]रूपादिषु परिणामात् तत्सिद्धिः।

( ५ )

[4]चैतन्यमात्मनो रूपम्।

## कात्यः

[5]सिद्धे व्याप्तृत्वे भेदविरोधात् तदभेदो विश्वस्य।

## कामिकागमः

( १ )

[6]वेदसांख्यपुराणज्ञाः पाञ्चरात्रपरायणाः।
ये केचिदृषयो धीराः शास्त्रान्तरपरायणाः॥

---

१. तन्त्रा०, भा० ११, आ० २९, पृ० ८८
२. परा० अभि०, पृ० १०३
३. पर० योग०, पृ० ९१; प्र० हृ०, पृ० ८६
४. ई० प्र० वि० वि०, भा० १, पृ० १८३
५. ने० उ०, भा० २, पृ० २७४
६. तन्त्रा०, भा० ३, आ० ४, पृ० २८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



बौद्धार्हताद्याः सर्वे ते विद्यारागेण रञ्जिताः ।
मायापाशेन बद्धत्वाच्छिवदीक्षां न विन्दते ॥

( २ )

[1]अमृतं चन्द्ररूपेण द्विधा षोडशधा पुनः ।
पिबन्ति च सुराः सर्वे दश पञ्च पराः कलाः ॥
अमाशेषगुहान्तस्थामावस्या विश्वतर्पिणी ।

( ३ )

[2]तस्य देवातिदेवस्य परापेक्षा न विद्यते ।
परस्य तदपेक्षत्वात् स्वतन्त्रोऽयमतः स्थितः ॥

( ४ )

[3]ब्राह्मणाः क्षत्रियाश्चैव वैश्या वा वीरवन्दिते ।
नपुंसकाः स्त्रियः शूद्रा ये चान्येऽपि तदर्थिनः ॥
दीक्षाकाले न मीमांस्या ज्ञानदाने विचारयेत् ।
ज्ञानमूलो [4]गुरुर्यस्मात् सप्तसत्रीप्रवर्तकः ॥

( ५ )

[5]एताश्चतस्रो विप्रस्य तिस्रो राज्ञ उभे विशः ।
एका शूद्रस्य नियता शिला भूम्यश्च कीर्तिताः ॥



---

१. स्व० उ०, भा० ३, प० ७, पृ० २१३
२. ने० उ०, भा० १, पृ० १५२
३. ने० उ०, भा० २, पृ० ३४०-३४१
४. गुरुः प्रोक्तः—ने० उ०, भा० २, पृ० ३६
५. मृ० वृ० क्रि०, पृ० ८४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## कालावली

[1]तत्र तावदयं प्राप्य दर्शप्रतिपदं मरुत् ।
समुदेति विधौ तावदादौ चन्द्रदिनत्रयम् ॥
ततः संक्रमते सूर्ये तत्राप्युदयते त्र्यहम् ।
संक्रम्य त्रयमेतस्मात् पुनरेति हिमद्युतौ ॥



## कालिकाकल्पः

[2]अरण्ये स्वल्पकामानां सिद्ध्यर्थं पूजनं हितम् ।
निष्कामानां मुमुक्षूणां गृहे शस्तं समर्चनम् ॥
ऋषीणां मुनिमुख्यानां दीक्षितानां द्विजन्मनाम् ।
गृहेऽपि यजनं कार्यं रसैर्द्राक्षेक्षुसंभवैः ॥



## कालीकुलम्

( १ )

[3]खड्गं कृपाणिकां यद्वा कर्तरीं मकुरं च वा ।
विमलं तत् तथा कुर्याच्छ्रीमत्कालीमुखो(कुलो)दितम् ॥

( २ )

[4]तस्य देवादिदेवस्य परबोधस्वरूपिणः ।
विमर्शः परमा शक्तिः सर्वज्ञा ज्ञानशालिनी ॥

---

१. स्व० उ०, भा० ३, प० ७, पृ० २६९
२. ज्ञा० वि०, प० ९ ख
३. तन्त्रा०, भा० १०, आ० २७, पृ० ३७४
४. ने० उ०, भा० १, पृ० २१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[१]तस्य देवातिदेवस्य परबोधस्वरूपिणः ।
विमर्शः परमा शक्तिरवियुक्तो यया प्रभुः ॥

## कालोत्तरः ( कालपादः )

( १ )

[२]पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।...
सद्यस्तु पृथिवी ज्ञेया वामो ह्यापः प्रकीर्तिताः ॥
अघोरस्तेज इत्युक्तं वायुस्तत्पुरुषः स्मृतः ॥
आकाशस्तु भवेदीशः स्वयं देवो महेश्वरः ।

( २ )

[३]बीजाङ्कुरं पुरा शक्त्या पश्चादानन्तमासनम् ।
अनन्तं चान्तगं कुर्यात् क्रमेणैव षडानन ! ॥

( ३ )

[४]आग्नेय्यां हृदयं न्यस्येदैशान्यां तु शिरस्तथा ।
नैर्ऋत्यां तु शिखां न्यस्येद्वायव्यां कवचं तथा ॥
अस्त्रं दिक्ष्वथ विन्यसेत् कर्णिकायां सदाशिवम् ।

( ४ )

[५]नादाख्यं यत्परं बीजम्.................. ।
पञ्चैतानि तु तत्त्वानि यैर्व्याप्तमखिलं जगत् ।...
एवं ज्ञात्वा महासेन ! श्वपचानपि दीक्षयेत् ।

---

१. स्व० उ०, भा० ६, प० ११, पृ० ५
२. तन्त्रा० वि०, भा० ७, आ० ११, पृ० ११-१२
३. ने० उ०, भा० १, पृ० २१८
४. ने० उ०, भा० १, पृ० २२१
५. ने० उ०, भा० १, पृ० २२७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ५ )

[1]आगोपालाङ्गनाबाला नित्यमेव ब्रुवन्ति तम् ।

( ६ )

[2]यावत्येव हि संवित्तिरुदिता सुस्फुटा भवेत् ।
तावान् क्षणो वर्तमानः कल्पो वान्यद्वयावधिः ॥

( ७ )

[3]शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
बुद्धिर्मनस्त्वहङ्कारः पुर्यष्टकमुदाहृतम् ॥

( ८ )

[4]स्थूलं शब्द इति प्रोक्तं सूक्ष्मं चिन्तामयं भवेत् ।
चिन्तया रहितं यत्तु तत्परं परिकीर्तितम् ॥

( ९ )

[5]नादाख्यं यत्परं बीजं सर्वभूतेष्ववस्थितम् ।

( १० )

[6]उद्गारे नाग इत्युक्तः कूर्म उन्मीलने स्थितः ।
कृकरस्तु क्षते चैव देवदत्तो विजृम्भणे ॥
धनञ्जयः स्थितः पोषे मृतस्यापि न मुञ्चति ।



१. शि० ह० वृ०, पृ० १२२
२. ई० प्र० वि० वि०, भा० ३ पृ० २८८
३. तस्व० प्र०, पृ० १४; ई० प्र० वि० वि०, भा० २, पृ० १९२
४. र० त्र०, पृ० ११-१२
५. र० त्र०, पृ० २४
६. भो० का०, पृ० १९



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# किरणागमः

( १ )

[1]अनेकभविकं कर्म दग्धबीजमिवाणुभिः ।
भविष्यदपि संरुद्धं येनेदं तद्धि भोगदम्[2] ॥

( २ )

[3]तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ।
सर्वज्ञः स शिवो यद्वत्...................... ... ॥

( ३ )

[4]पशुपाशपतिज्ञानविचारप्रतिपादकम् ।
किरणाख्यं महत् तन्त्रम्.......................... ॥

( ४ )

[5]अनादिमलसंबन्धान्मलिनत्वमणौ स्थितम् ।
अनादिमलमुक्तत्वान्निर्मलत्वं स्थितं शिवे ॥
आदिमत्त्वं यदा सिद्धं निमित्तं कथ्यते तदा ।
ईदृग्रूपं स्मृतं ताभ्यां शुद्धाशुद्धं यथार्थतः ॥
विशुद्धः स्फटिकस्तस्मात् ताम्रं सकालिकं स्मृतम्(?) ।
यथास्मिन्न निमित्तं स्यात्तथा न स्याच्छिवात्मनोः ॥

---

१. तत्त्व० प्र०, पृ० ५६
२. भोगतः–र० त्र०, पृ० ५९ १०६
३ र० त्र०, पृ० ७
४. तत्त्व० व्या० कु०. पृ० २५
५. तत्त्व० व्या० कु०, पृ० ३१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ५ )

[1]मलो ज्ञानं पशुत्व च तिरस्कारकरस्तमः ।
अविद्या ह्याकृतिर्मूर्च्छा पर्यायास्तस्य वाचकाः ॥

( ६ )

[2]विभोरपि मलस्यास्य तच्छक्तेः क्रियते वधः ।
उपायाच्छक्तिसंरोधः कस्मिंश्चित् क्रियते मले ॥
शिवज्ञानं तथा तस्य शक्तिसंरोधकारकम् ।
यथाग्नेर्दाहिका शक्तिर्मन्त्रेणाशु निरुध्यते ॥
तद्वत्तच्छक्तिसंरोधः.................................. ।
मलश्चिच्छादको नैजो विशुद्धिः शिवता स्वतः ॥

( ७ )

[3]माया विमोहनी प्रोक्ता विषयास्वादभोगतः ।
यत्र तत्र स्थितस्यास्य स्वकर्ममलहेतुतः ॥

( ८ )

[4]रागरञ्जितचिद्धर्म [ः सं]युक्तश्च त्रिभिर्गुणैः ।
बुद्धयादिकरणानीकसंवन्धाद् वध्यते पशुः ॥

( ९ )

[5]पशुर्नित्यो ह्यमूर्तोऽज्ञो निष्क्रियो निर्गुणोऽप्रभुः ।
व्यापी मायोदरान्तस्थो भोगोपायविचिन्तकः ॥

---

१. तत्त्व० व्या० कु०, पृ० ५५
२. तत्त्व० व्या० कु०, पृ० ५७
३. तत्त्व० व्या० कु०, पृ० ११५
४. तत्त्व० व्या० कु०, पृ० १२५
५. भोगतः-र० त्र०, पृ० ५९, १०६
७. परा० अभि०, पृ० २५४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १० )

[1]तत्स्थं गृहीत्वा चात्मानं रेचनाद् बिन्दुमध्यगम् ।
कृत्वा कायं दहेत् पश्चादस्त्रं संचिन्त्य तैजसम् ॥

( ११ )

[2]कुर्यान्मन्त्राष्टकं कायमष्टत्रिंशत्कलात्मकम् ।

( १२ )

[3]चतुर्युगमहापादं पृथिवीतत्त्वकन्दकम् ।
कालतत्त्वान्तनालैकं पञ्चाशद्भावकण्टकम् ॥
मायातत्त्वबृहद्ग्रन्थि शुद्धविद्याब्जशोभितम् ।
विद्येश्वरदलाक्रान्तं शक्तिकेसरसंयुतम् ॥
शिवशक्तिद्वयारब्धकर्णिकाबीजराजितम् ।
पीठमेवंविधं कल्प्यमशेषाध्वविनिर्मितम् ॥

( १३ )

[4]सहस्रायुतहोमे तु हस्तं हस्तद्वयं तथा ।
स्याल्लक्षे प्रयुते होमे चतुर्हस्तं च षट्करम् ॥
कोटिहोमेऽष्टहस्तं तु तस्मादूर्ध्वं न कारयेत् ।

( १४ )

[5]मुष्टिमात्रस्य कुण्डस्य मेखला त्वङ्गुलद्वया ।
मेखलाद्वितयं कार्यमङ्गुलार्धाङ्गुलक्रमात् ॥
अरत्निमात्रकुण्डस्य नेमिः स्यादङ्गुलैस्त्रिभिः ।
पूर्वं नेमिद्वयं चान्यद् द्व्यङ्गुलाङ्गुलतो भवेत् ॥

---

१. मृ० वृ० क्रि०, पृ० १९
२. मृ० वृ० क्रि०, पृ० २०
३. मृ० वृ० क्रि०, पृ० २३-२४
४. मृ० वृ० क्रि०, पृ० ७०
५. मृ० वृ० क्रि०, पृ० ७०-७१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



हस्तमात्रस्य कुण्डस्य नेमिः स्याच्चतुरङ्गुला ।
अन्यन्नेमिद्वयं कार्यं त्र्यङ्गुलद्व्यङ्गुलक्रमात् ॥
कुण्डस्य द्विकरस्यापि पूर्वा नेमिः षडङ्गुला ।
अन्याङ्गुलचतुष्केण तृतीया त्वङ्गुलैस्त्रिभिः ॥
चतुष्करस्य कुण्डस्य नेमिराद्याऽङ्गुलाष्टकम् ।
षड्भिरन्याङ्गुलैः कार्या चतुर्भिरपराङ्गुलैः ॥
कर्तव्या मेखला पूर्वा षड्ढस्तस्य दशाङ्गुला ।
अङ्गुलैरष्टभिश्चान्या तृतीया षड्भिरङ्गुलैः ॥
अष्टहस्तस्य या पूर्वा मेखला द्वादशाङ्गुला ।
दशाङ्गुला द्वितीया स्यात् तृतीयाऽष्टाङ्गुला स्मृता ॥

( १५ )

[१]हस्तमात्रं पुरा खात्वा पूरणाभ्यधिका शुभा ।
समा भूर्मध्यमा ज्ञेया साधमा या न पूरिता ॥

( १६ )

[२]तर्पयित्वा प्रणम्येशं व्रतमेषां समर्पयेत् ।
जटास्तद्भस्म दण्डं च कौपीनं संयमं क्रमात् ॥
समर्प्य ब्रह्मणे ध्यात्वा पुष्पवार्यक्षतैस्त्रिधा ।
व्रतं समर्प्य मन्त्राणां हृन्मन्त्रेण विसर्जनम् ॥
जटावतरणं तस्य कार्यं.................. ।

( १७ )

[३]एकभुक्तं त्र्यहं कुर्यात् त्र्यहं तु यदयाचितम् ।
त्र्यहं स्यान्नक्तभोजी तु त्र्यहं स्यान्मारुताशनः ॥
एष कृच्छ्रः समाख्यातः प्राजापत्य इति स्मृतः ।
मासार्धं ग्रासवृद्धिः स्याच्छुक्ले कृष्णे तु ह्रासयेत् ॥

१. बृ० वृ० क्रि०, पृ० ८५
२. बृ० वृ० च०, पृ० २१०
३. बृ० वृ० च०, पृ० २४९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



चान्द्रायणविधिः प्रोक्तः.................................. ।
द्वादशाहं निराहारः पराक इति संस्मृतः ।...
त्र्यहमुष्णं पिबेद् वारि त्र्यहं क्षीरं तथा पिबेत् ॥
त्र्यहमुष्णं घृतं पीत्वा त्र्यहं वै केवलं ततः ।
तप्तकृच्छ्रोऽयमाख्यातः.................................. ।

( १८ )

[1]तत्रैव पुरुषो ज्ञेयः प्रधानगृहपालकः ।
रागतत्त्वाच्च विद्याख्यमशुद्धं पशुमोहकम् ॥...
ततः कालनियत्याख्यं संपुटं व्याप्य लक्षधा ।...
कालतत्त्वात् कला ज्ञेया लक्षायुतपरिच्छदा ॥

( १९ )

[2]दीक्षामन्यां प्रवक्ष्यामि शिवतत्त्वसमायुताम् ।
आदौ प्रणवसंयुक्तां शिवमन्तेऽणुवाचकम् ॥
नाम कृत्वा ततः शंभुः संपुटीकृत्य होमयेत् ।
एवं साहस्रिको होमः पाशत्रयवियोजकः ॥
जननादिवियोगेन दीक्षेयं दुर्लभा खग ! ॥

( २० )

[3]पशुर्नित्यो ह्यमूर्तोऽज्ञो निष्क्रियो निर्गुणोऽप्रभुः ।
व्यापी मायोदरान्तस्थो भोगापायविचिन्तकः ॥

---

१. तन्त्रा० वि०, भा० ६, आ० ९, पृ० ४६

२. तन्त्रा० वि०, भा० १०, भा० १८, पृ० १७९

३. ई० प्र० वि० वि०, भा० २, पृ० ६२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २१ )

[1]मायातीतं शिवं तत्त्वं कथं मुख्यं मनोभुवि ।
विभासेत...................................... ॥
अधोव्याप्तिः शिवस्यैव स्वप्रकाशस्य सा [स्मृता] ।

( २२ )

[2]शुद्धभावस्थितस्याऽस्य कालरुद्रं निधापयेत् ।
..................ततो दीक्षां समाचरेत् ॥

( २३ )

[3]त्रिभिः शृङ्गैः समायुक्तो रुक्मकाञ्चनरत्नजैः ।

( २४ )

[4]..........................................इलावृतम् ।
मेर्वन्तं चतुरस्रं तु सहस्रनवसंयुतम् ॥

( २५ )

[5]भूर्भुवःस्वर्ध्रुवान्तं स्याल्लक्षाणि.................. ।
.................. महान् कोटिद्वयं भवेत् ॥

( २६ )

[6]दशषट्कोटयः सत्य............................ ।
तस्मादूर्ध्वं भवेद् ब्रह्मा कोटित्रयमितः खग ! ।
त्रिभिस्तु कोटिभिर्विष्णुश्चतुर्भिस्तु हरः स्थितः ॥

१. ई० प्र० वि० वि०, भा० २, पृ० २५७
२. स्व० उ०, भा० २, प० ४, पृ० ३७-३८
३. स्व० उ०, भा० ५, प० १०, पृ० ६०
४. स्व० उ०, भा० ५, प० १०, पृ० ७८
५. स्व० उ०, भा० ५, प० १०, पृ० २२१
६. स्व० उ०, भा० ५, प० १३, पृ० २३२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २७ )

[1]इच्छैव करणं तस्य यथा सद्योगिनो मता ।

( २८ )

........................................

[2]अनादिमलमुक्तत्वात् सर्वज्ञोऽसौ ततः शिवः ।

( २९ )

[3]अथानादिर्मलस्तस्य कर्माप्येवमनादिकम् ।
यद्यनादि न संसिद्धं वैचित्र्यं केन हेतुना ॥
तस्मादनादिकं कर्म मायाप्येवं भवेत् तथा ।

( ३० )

[4]समे कर्मणि संजाते कालान्तरवशात् ततः ।
तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ॥
सर्वज्ञः स शिवो यद्वत् ........................ ।

( ३१ )

[5]वामदेवोऽथ भीष्मश्चाप्युग्रश्च भवसंज्ञकः ।
सर्वेशानैकवीरौ च प्रचण्डश्चेश्वरः पुमान् ॥
उमाभर्ता ह्यजोऽनन्त एकश्चैव शिवस्ततः ।
रागतत्त्वे स्थिता ह्येते रुद्रास्तीव्रबलोत्कटाः ॥
अत्रैव पुरुषो ज्ञेयः प्रधानगृहपालकः ।

( ३२ )

[6]जलं पञ्च स्थलं पञ्च ........................ ।



१. मृ० वृ० वि०, पृ० १०६
२. मृ० वृ० वि०, पृ० १४४
३. मृ० वृ० वि०, पृ० १६७-१६८
४. मृ० वृ० वि०, पृ० १८५
५. मृ० वृ०, वि०, पृ० २१६
६. मृ० वृ० वि०, पृ० ३०८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## कुब्जिकामतम्

[1]मायोपरि महामाया त्रिकोणानन्दरूपिणी ।



## कुलकमलम्

[2]शाक्तेन तेजसा शून्यं ये मार्गं पर्युपासते ।
ते वह्निरहिते कुण्डे स्थाल्या होमं प्रकुर्वते ॥



## कुलकालीविधिः

[3]कुलकालीविधौ चोक्तं वैष्णवानां विशेषतः ।
भस्मनिष्ठाप्रपन्नानामित्यादौ नैव योग्यता ॥



## कुलक्रमोदयः

[4]श्रीशैले संस्थिता ब्राह्मी........................ ।

इत्याद्युपक्रम्य

पादाधारस्थिता ब्राह्मी........................ ॥



१. परा० अभि०, पृ० १८४
२. म० म० प०, पृ० ७
३. तन्त्रा०, भा० ८, आ० १३, पृ० १८४
४. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ४४



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# कुलक्रीडावतारः

[1]तेषां मुद्राश्च छुम्माश्च पल्ली ओवल्लयस्तथा ।
पीठक्रमो घराश्चैव पित्रा विभजता तथा ॥...
बोधिश्चामरपादानां प्रभुश्च वरदेवके ।
चित्रः पादश्च संप्रोक्तो ह्यलिरानन्दसंज्ञितः ॥
विन्ध्यपादश्च योगी तु गडिकावलिरेव च ।...
दक्षहस्तस्य चाङ्गुष्ठादारभ्य च कनिष्ठिकाम् ।
वामस्य यावन्मुद्रा वै षट्सु विस्तरतः शृणु ॥
अङ्गुष्ठो ज्येष्ठपुत्रस्य द्वितीयस्य तु तर्जनी ।
मध्यमा वै तृतीयस्य चतुर्थस्याऽप्यनामिका ॥
पञ्चमस्य कनिष्ठा वै षष्ठस्य च कनिष्ठिका ।...
छुम्मकाः संप्रवक्ष्यामि कुलाम्नाये यथा स्थिताः ।
अतीतं प्रथमस्यापि द्वितीयस्य तु कुण्डली ॥
भ्रूमध्ये वै तृतीयस्य संघट्टश्च चतुर्थके ।
नाभिश्च पञ्चमस्यैव जन्माधारस्तु षष्ठके ॥...
षण्णां वै राजपुत्राणां घरपल्लिक्रमं शृणु ।
अमरस्य तु पट्टिल्लो दक्षिणावर्तपल्लिका ॥
वरदेवे करविल्लं पल्ली कुम्भारिका भवेत् ।
अम्बिल्लं चैव चित्रस्य चिल्लं पल्ली सुमध्यमे ॥
अलिनाथे पुलिन्देति अडवी पल्लिरुच्यते ।
शरविल्लं विन्ध्यनाथे पल्ली चाक्षरसंज्ञिता ॥
गुडिकानाथपादानामडविल्लं घरं प्रिये ।
डोम्बी पल्ली च निर्दिष्टा........ .......... ॥

---

१. तन्त्रा० वि०, भा० ११, आ० २९, पृ० २८-२९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



त्रिपुरोत्तरे निकेतं सिद्धिस्थानं च तद्विदुः ।
अमरस्य वरारोहे वरदेवस्य कामरु ॥
चित्रस्य अट्टहासं वै देवीकोट्टमलेस्तथा ।
दक्षिणं चैव विन्ध्यस्य गुडिका कौलगिर्यता ॥

## कुलगुह्वरम्

( १ )

[1]काकचञ्चुपुटाकारं ध्यानधारणवर्जितम् ।
विषतत्त्वमनच्काख्यं तव स्नेहात् प्रकाशितम् ॥

( २ )

[2]कुलं शक्तिः समाख्याता गुह्वरं शक्तिमानपि ।
उभयोर्भेदनैकत्वं कथ्यते कुलगुह्वरम् ॥...
यदेतत् कामतत्त्वं तु विषतत्त्वं तदेव हि ।
तदिदानीं समासेन शृणु त्वं मृगलोचने ॥...
सहौ क्षपादिनामानावधरोत्तरचारिणौ ।
परस्परद्वेषरतौ मतौ नगहुङ्गपमौ ॥
कस्तौ रोधयितु शक्तो वीर्यं मुक्त्वा स्वयं महत् ।...
ऊर्ध्वं बिन्दू रविः प्राणो दिनं भागार्धमेव च ।
सिद्धैरधिष्ठितो भागः खेचर्याराधनात्मकः ॥
अधो नादस्तथाऽपानो मत्तगन्धः क्षपा शशी ।
खेचर्यधिष्ठितो भागः सिद्धसेव्यो लयात्मकः ॥

( ३ )

[3]नान्यशास्त्राभियुक्तेषु शिवज्ञानं प्रकाशते ।

---

१. तन्त्रा०, भा० २ आ० ३, पृ० १६७
२. तन्त्रा० वि०, भा० २, आ० ३, पृ० १६७-१६९
३. तन्त्रा०, भा० ८, आ० १३, पृ० १९१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ४ )

[१]सद्यउत्क्रान्तितस्त्रैधं सा चासन्नमृतौ गुरोः ।
कार्येत्याज्ञा महेशस्य श्रीमद्गह्वरभाषिता ॥
दृष्ट्वा शिष्यं जराग्रस्तं व्याधिना परिपीडितम् ।
उत्क्रमय्य ततस्त्वेनं परतत्त्वे नियोजयेत् ॥

( ५ )

[२]बिन्दुना रोधयेत्तत्त्वं शक्तिबीजेन वेधयेत् ।
घट्टयेन्नाददेशे तु त्रिशूलेन तु ताडयेत् ॥
सुषुम्नान्तर्गतेनैव विसर्गेण पुनः पुनः ।
ताडयेत कलाः सर्वाः कम्पतेऽसौ ततः पशुः ॥
उत्क्षिपेद् वामहस्तं वा ततस्तं योजयेत् परे ।
प्रत्ययेन विना मोक्षो ह्यश्रद्धेयो विमोहितैः ॥
तदर्थमेतदुदितं न तु मोक्षोपयोग्यदः ।
इत्यूचे परमेशः श्रीकुलगह्वरशासने ॥

( ६ )

[३]ब्रह्मादिस्तम्बपर्यन्तं विश्वं तु सचराचरम् ।
मायातत्त्वसकाशात् तु सर्वमेव विनिःसृतम् ॥
धर्माधर्मनिबद्धस्तु पिण्ड उत्पद्यते तदा ।
तत उत्पद्यते गन्धः शुक्रशोणितसम्भवः ॥
शुक्रान्मांसं ततो मेदो मज्जा चास्थीनि देहिनाम् ।
रक्तात् त्वक्स्नायुमांसं च धातुषट्कं भवेदिदम् ॥
शुक्रं च शोणितं चैव अष्टधातुकमुच्यते ।

---

१. तन्त्रा०, भा० १०, आ० १६, पृ० ७१
२. तन्त्रा०, भा० १०, आ० २४. पृ० ३१०-३११
३. तन्त्रा० वि०, भा० ११, आ० २८, पृ० ८९-९०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पश्चाद् भूतगणोपेतो देहो भवति देहिनाम् ॥
यथा गृहं तु निष्पाद्य गृही पश्चात् तु तिष्ठति ।
एवं देहं विनिष्पाद्य देही तिष्ठति चेश्वरः ॥
पुरुषः शून्यरूपस्तु निष्क्रियो गुणवर्जितः ।
किञ्चित् स्फुरणमात्रस्तु निष्कलः स हि कथ्यते ॥
सकलः कलया युक्तः शान्तात्मा प्रभुरव्ययः ।
तन्मात्राणि च भूतानि इन्द्रियाणि दशैव तु ॥
इन्द्रियार्था मनो बुद्धिस्तथाहङ्कार एव च ।
विज्ञेयः सकलो ह्येष शिवो देहे व्यवस्थितः ॥
मानुषाणां पशूनां च सर्पाणां जलचारिणाम् ।
व्यापकोऽपि शिवाख्यो वै संसारे संव्यवस्थितः ॥

( ७ )

[1]मन्त्रवेधं तु नादाख्यं बिन्दुवेधमतः परम् ।
शाक्तं भुजङ्गवेधं तु परं षष्ठमुदाहृतम् ॥....
षोढा वै वेधबोधेन अध्वानं शोधयेत् प्रिये ।

( ८ )

[2]ज्वालाकुलं ततो ध्यात्वा अष्टारं चक्रमुत्तमम् ।
द्वादशारमथो वापि स्वशास्त्रविधियोगतः ॥
परचित्तं वेधनीयं मन्त्रवेध उदाहृतः ।

( ९ )

[3]मोचयन्ति महाघोरात् संसारमकराकरात् ।
द्रावयन्ति पशोः पाशांस्तेन मुद्रा हि शक्तयः ॥...

---

१. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १४९
२. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १५०
३. तन्त्रा० वि०, भा० १२, आ० ३२, पृ० ३२७-३२८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



इच्छाज्ञानक्रियापूर्वा..........................।
पद्मं हृत्पद्ममेवात्र शूलं नाडीत्रयं प्रिये ॥
नाभिं चक्रं विजानीयाच्छक्तिं नादान्तरूपिणीम् ॥
बिन्दुदेशोद्भवं दण्डं वज्रं चित्तमभेदकम् ।
दंष्ट्रां जिह्वां महाभागे कपालं व्योममण्डलम् ॥
एषु स्थानेषु सञ्चारान्मानसी परिपठ्यते ।...
खेचर्याः परिवारस्तु अष्टौ मुद्राः प्रकीर्तिताः ।
शूलाष्टके च देवेशि ! मातृव्यूहे च ताः स्मृताः ॥
पद्मंशूलं तथा चक्रं शक्तिर्दण्डं सवज्रकम् ।
दंष्ट्रा कपालमित्येवं तदशेषं व्यवस्थितम् ॥

( १० )

[1]दृष्ट्वा शिष्यं जराग्रस्तं व्याधिना परिपीडितम् ।
उत्क्रमय्य ततस्त्वेनं परतत्त्वे नियोजयेत् ॥

( ११ )

[2]यत्तदक्षरमव्यक्तं प्रियाकण्ठेऽप्यवस्थितम् ।
ध्वनिरूपमनिच्छं तु ध्यानधारणवर्जितम् ॥
तत्र चित्तं विधायैवं वशयेद् युगपज्जगत् ।

## कुलपञ्चाशिका

[3]यन्नास्ति सर्वलोकस्य तदस्तीति विरुध्यते ।
निगद्यते यदा देवि हृदये न प्ररोहति ॥
एतस्मात् कारणाद् देवि देवताभिः प्रगोपितम् ।
तेन सिद्धेन देवेशि किं न सिद्ध्यति भूतले ॥

---

१. स्व० उ०, भा० २, प० ४, पृ० ९४
२. म० म० प०, पृ० १६५
३. ने० उ०, भा० १, पृ० १९१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# कुलमूलावतारः

[1]अनादिनिधनाच्छान्ताच्छिवात् परमकारणात् ।
इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया ॥...
तयोत्पन्नानि भूतानि भुवनानि चतुर्दश ।
वाङ्मयं चैव यत्किञ्चित् तत् सर्वं मातृकोद्भवम् ॥



# कुलरत्नमाला

( १ )

[2]यथोक्तं रत्नमालायां सर्वः परकलात्मकः ।
महानवान्तरो दिव्यो मिश्रोऽन्योऽन्यस्तु पञ्चमः ॥

( २ )

[3]अदृष्टं निर्गुणं यच्च हेयोपादेयवर्जितम् ।
तत्तत्त्वं सर्वतत्त्वानां प्रधानं परिपठ्यते ॥...
सत्त्वं तेन च संप्राप्तं संबन्धं प्रथमं विदुः ।
अवान्तरश्च योगेन सादाख्यात् क्रमशः पुनः ॥
प्राप्तोऽनन्तेशदेवेन द्वितीयस्तेन कीर्तितः ।
तृतीयस्तु पुनर्देवि श्रीकण्ठो नन्दिना सह ॥
द्वाभ्यां देवात्तु मत्वैवं तेन दिव्यः प्रकीर्तितः ।
ऋषीणां च समासेन नन्दिना प्रतिपादितम् ॥

१. म० म० प०, पृ० ३९
२. तन्त्रा०, भा० १, आ० १ पृ० २८१
३. तन्त्रा० वि०, भा० १, आ० १ पृ० २८२-२८४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



चतुर्थस्तु भगवतो दिव्यादिव्यः प्रकीर्तितः ।
व्याख्यानक्रमयोगेन विद्यापीठप्रपूजने ॥…
संबन्धः परमेशानि सर्वः परकलामयः ।
महानवान्तरो दिव्यो मिश्रोऽदिव्यश्च तत्परः ॥

( ३ )

[1]तत्त्वाध्वानं प्रवक्ष्यामि यथा ज्ञास्यसि सुव्रते ।
चरशक्तिद्वयं पूर्वं तदूर्ध्वं पञ्चकं स्मृतम् ॥
चतुष्कं च ततो देवि द्विरन्ध्रं जन्म एव च ।
व्याप्तिर्वैकुण्ठसंघट्टो व्याप्तिश्चैव तु लम्बिका ॥
रन्ध्रं तु अष्टमं देवि अर्धेन्दुः कुण्डली प्रिये ।
शान्तं चैव प्रशान्तं च बिन्दुर्नित्योदितस्तथा ॥
ऊर्ध्वे नादं विजानीयात् षट् चक्राणि तदूर्ध्वतः ।
शक्तितत्त्वं तु षट्चक्रं शिवतत्त्वं तथैव च ॥
अष्टात्रिंशदमी तत्त्वास्तथाऽध्वायं वरानने ।
लौकिको यो न जानाति कथं दीक्षां तु कारयेत् ॥

( ४ )

[2]यस्मिन् काले तु गुरुणा निर्विकल्पं प्रकाशितम् ।
तदैव किल मुक्तोऽसौ यन्त्रं तिष्ठति केवलम् ॥

( ५ )

[3]यदा गुरुवरः सम्यक् कथयेत्तदसंशयम् ।
मुक्तस्तत्रैव कालेऽसौ यन्त्रवत् केवलं वसेत् ॥

---

१. तन्त्रा० वि०, भा० ७, आ० ११, पृ० २०
२. तन्त्रा०, भा० ८, आ० १३, पृ० १४३
३. पर० योग०, पृ० १६३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## कुलाम्नायः

[1]नाभिहृन्मध्यमार्गे तु सर्वकामाभिधो मतः ।
संजीवन्यभिधानाख्यो हृत्पद्मोदरमध्यगः ॥
वक्षःस्थले स्थितः कूर्मो गले लोलाभिधः स्मृतः ।
लम्भकस्य स्थितश्चोर्ध्वे सुधाधारः सुधात्मकः ॥
तस्यैव मूलमाश्रित्य सौम्यः सोमकलावृतः ।
भ्रूमध्ये गगनाभोगे विद्याकमलसंज्ञितः ॥
रौद्रस्तालुतलाधारो रुद्रशक्त्या त्वधिष्ठितः ।
चिन्तामण्यभिधानाख्यश्चतुष्पथनिवासि यत् ॥
ब्रह्मरन्ध्रस्य मध्ये तु तुर्याधारस्तु मस्तके ।
नाड्याधारः परः सूक्ष्मो घनव्याप्तिप्रबोधकः ॥
इत्युक्ताः षोडशाधाराः.......... ....... ...... ।

## कुलार्णवः

( १ )

[2]जाज्वल्यमानं संचिन्त्य पादाङ्गुष्ठात्तु मस्तकम् ।
प्रविश्याधोमुखं कृत्वा अपानस्थान आत्मनः ॥
दग्धकाष्ठसमप्रख्यं साध्यमुल्मुकरूपिणम् ।
त्यक्तदेहं विचिन्त्यैवं मन्त्रच्छेदः कृतो भवेत् ॥
कीलनं मोहनं चैव तेजोहानिस्तथा भवेत् ।
रक्षाच्छेदश्च भवति सत्यं नास्त्यत्र संशयः ॥

१. ने० उ०, भा० १, पृ० १४७
२. ने० उ०, भा० २, पृ० १६-१७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सर्वद्विष्टश्च भवति न मन्त्रस्तस्य सिद्ध्यति ।
ककारपुटयोर्मध्ये यस्य नाम समुल्लिखेत् ।
तद्बाह्ये वह्निभवनं रेफाष्टकविभूषितम् ॥
लिखित्वा स्थापयेद् यन्त्रं कपालोभयसंपुटे ।
यस्य नाम्ना महागौरि मन्त्रच्छेदस्तु तस्य वै ॥
जायते सिद्धिहानिश्च विद्विष्टः सर्वतो भवेत् ।

( २ )

[2]ये केचिल्लुप्तसमया ये वा मार्गद्विषो नराः ।
प्राप्य मार्गं तु मुञ्चन्ति ये केचिदधमा नराः ॥
अत एषां महाभागे अन्त्येष्टिं कथयामि ते ।



## क्रमकेलिः

( १ )

[1]यथैकः श्रीमान् वीरवरः सुगृहीतनामधेयो गोविन्दराजाभिधानः, श्रीभानुकाभिधानो द्वितीयः, श्रीमान् एरकसमाख्यस्तृतीयः सममेवोपदेशं पीठेश्वरीभ्य उत्तरपीठलब्धोपदेशात् श्रीशिवानन्दनाथाल्लब्धानुग्रहाभ्यः श्रीकेयूरवती-श्रीमदनिका-श्रीकल्याणिकाभ्यः प्राप्नुवन्तः । तत्राद्यः प्राप्तोपदेश एवैवं मनस्यकार्षीत्—एतावत्यधिगते किमिदानीं कृत्यमस्तीति, इत्थं च निष्ठितमना यावज्जीवमुपनतभोगातिवाहनमात्रव्यापार एतद्विज्ञानोपदेशपात्रशिष्टोपदेशप्रवणः शरीरान्तं प्रत्यैक्षिष्ट, स चेदं रहस्यं श्रीसोमानन्दाभिधानाय गुरवे संचारयाम्बभूव । द्वितीयोऽपि एवमेवास्त । तस्यैव चैषा श्रीमदुज्जटोद्भटादिनानागुरुपरिपाटी-

---

१. ने० उ०, भा० २, पृ० १२५
२. तन्त्रा० वि०, भा० ३, आ० ४, पृ० १९२-१९३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सन्ततिः, यत्प्रसादासादितमहिमभिरस्माभिरेतत् प्रदर्शितम्। श्रीमानेरकस्तु सिद्धयै प्रायतत, यावत्सिद्धः सन् एवं मनसा समर्थयते स्म—किं भोगैः? यदयं महान् क्लेशो मयानुभूतः, कथमहं सब्रह्मचारिविद्यावज्जीवं प्रपन्नलोकोद्धरणमात्रपर एव नाभवम्, यतः—

श्रीमत्सदाशिवपदेऽपि महोग्रकाली
भीमोत्कटभ्रुकुटिरेष्यति भङ्गभूमिः।
इत्याकलय्य परमां स्थितिमेत्य काल-
सङ्कर्षिणीं भगवतीं हठतोऽधितिष्ठेत्[१]॥

तदिदानीमपि निजभावगतरहस्योपदेशं स्तोत्रमुखेनापि तावत्प्रसारयंल्लोकाननुगृह्णीयामिति।

( २ )

[२]इहैकैकत्र सृष्टयादौ चक्ररूपता विद्यते।

( ३ )

[३]विवर्तो विचित्रेण रूपेण वर्तनं न त्वविद्यावशात्, अपि तु स्वातन्त्र्यतः।



## क्रमरहस्यम्

[१]श्रीमत्क्रमरहस्ये च न्यरूपि परमेशिना।
अर्घपात्रं यागधाम दीप इत्युच्यते त्रयम्॥
रहस्यं कौलिके यागे तत्रार्घः शक्तिसंगमात्।
भूवस्त्रकायपीठाख्यं धाम चोत्कर्षभाक् क्रमात्॥
दीपा घृतोत्था गावो हि भूचर्यो देवताः स्मृताः।
इति ज्ञात्वा त्रयेऽमुष्मिन् यत्नवान् कौलिको भवेत्॥



१. म० म० प०, पृ० १००
२. म० म० प०, पृ० १५०
३. तन्त्रा०, भा० ११, आ० २९, पृ० १४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## क्रमसद्भावः

[१]शङ्काशून्यो भवेत् सदा ।



## क्रमस्तोत्रम्

( १ )

[२]एका या पञ्चशक्तिक्रमवरहुतभुग्युग्मयुग्मैश्च वृत्तैः
सा त्वीषन्मण्डलान्तः प्रभवति सततं योगिभिस्त्युन्नराभिः(?) ।
चत्वारिंशद्भिरुच्चैरकृतकवलनारञ्जिते दिव्यपद्मे
द्वन्द्वाङ्के द्वारजुष्टे दिशतु जगति शं चक्रदेवीयुता सा ॥
प्राणो वह्निरिहोच्यते प्रलयकृज्जन्मशदिशीर्षान्तगं
प्रोन्मेषक्षितितुर्यमारुतमहाभूतान्तसत्त्वाश्रयः ।
शक्तिः शाम्भवधामलघ्वनवधिः सृष्टिक्रमप्रोदिता
कादिक्षान्तगता सदेति गुरुतो ज्ञात्वाऽमरत्वं भजेत् ॥

( २ )

[३]चिन्मृगाङ्कचषके च्युतामृतस्रावसंभृतमहार्घ्यपात्रतः ।
तर्पणं विततमस्ति तत्सदीपस्ततोः परममस्ति तां नुमः ॥
कृत्वा मन्त्रतनुं स्मरन् गुरुपदं देवीकलां चिन्मयीं
पश्चात् पात्रधरं पलाशपतनं दीपैर्ज्जलादुज्ज्वलैः ।
पुष्पार्घ्यादिभिरर्चितं रविनिभं मोहान्धकध्वंसकं
ये मद्यं च पिबन्ति यान्ति खलु ते भुक्तिं च मुक्तिं पराम् ॥

---

१. तन्त्रा० वि०, भा० ७, आ० १२, पृ० १०७
२. ज्ञा० वि०, प० १६ क
३. ज्ञा० वि०, प० १९ क

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]चिदङ्कुरं कामकलास्वरूपं क्षबिन्दुमाल्यामिततेजसेद्धम् ।
अनाहतोन्मेषनिनादभूमिचक्रस्थितं जन्मबिलान्तराले ॥
तस्मात् त्वराख्यं शशिसूर्यरूपं बिन्दुद्वयं पार्श्वयुगप्रवाहम् ।
तस्याप्यधो वह्निशिखाग्रभागं रेखाकृती द्वे प्रविलेख्य सम्यक् ॥

## क्रियाकालगुणोत्तरम्

( १ )

[2]हुङ्कारं मुञ्चते यस्तु पादपांसुं तथैव च ।
यस्तु छन्दथते नित्यं दन्तान् कटकटायते ॥
विनायकगृहीतस्य ह्येतद् भवति लक्षणम् ।

( २ )

[3]निशां प्रधावते सर्वामेकैकं तु निरीक्षते ।
पिबते च सुरां भूयः स्वमांसं भक्षयत्यपि ॥
शून्यग्रामनिवासी च ताम्रवर्णस्तथा भवेत् ।
रक्षोग्रहगृहीतस्य एतद् भवति लक्षणम् ॥

( ३ )

[4]न कुप्यति न हृष्येच्च भोजनं नाभिकाङ्क्षति ।
न वाचाऽऽलपते किञ्चिन्निद्रा नास्योपजायते ॥
न च मूत्रपुरीषं च नाशुचिस्तस्य जायते ।
पद्मपत्रनिभाकारं मुखं तस्योपजायते ॥

---

१. शा० वि०, प० २४ क-ख
२. ने० उ०, भा० २, पृ० १४८
३. ने० उ०, भा० २, पृ० १५१
४. ने० उ०, भा० २, पृ० १५७-१५८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



देवग्रहगृहीतस्य एतद् भवति लक्षणम् ।
गायते नृत्यते हृष्टो मुखवाद्यं करोति च ॥
गन्धमाल्यरतो नित्यं क्षीरभोजन एव च ।
सततं प्रियशीलश्च अरतिं नैव गच्छति ।
गन्धर्वेण गृहीतस्य एतद् भवति लक्षणम् ॥
गन्धपुष्परतो नित्यं क्षीरभोजन एव च ।
रक्तनेत्रो ह्यधोदृष्टिर्नदीषु नाभिषिञ्चते ॥
जलं चासौ वगाहेत पर्वते रमते सदा ।
जिह्वां लालयते चैव दशनांश्च निपीडयेत् ॥
नागग्रहगृहीतस्य एतद् भवति लक्षणम् ।
अहं विष्णुरहं ब्रह्मा रुद्रोऽहमिति भाषते ॥
अहं स्कन्दो विशाखश्च नास्ति मत्सदृशो भुवि ।
कदाचिद् भोजनं भुङ्क्ते नैव भुङ्क्ते कदाचन ॥
अपमन्येत देवांश्च ब्राह्मणांश्चापमन्यते ।
असुरेण गृहीतस्य एतद् भवति लक्षणम् ॥
तपःस्वाध्यायसंयुक्तो ब्राह्मणानुग्रहे स्थितः ।
कृतशौचो भवेन्नित्यमशौचं नैव तिष्ठति ॥
अपशब्दं च गृह्णाति पठत्यपि समं द्विजैः ।
गायते सामवेदं च ऋग्वेदं चाप्युदाहरेत् ॥
वेदार्थेषु च सर्वेषु श्रुतिं नित्यमुदाहरेत् ।
वैद्यमेवं तु जानाति हसन्नेव च धावति ।
ब्रह्मरक्षोगृहीतस्य एतद् भवति लक्षणम् ॥

( ४ )

[1]वातिकाः पैत्तिकाश्चैव श्लैष्मिकाः संनिपातजाः ।

---

१. ने० उ०, भा० २, पृ० १९६-१९९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



कृत्युपक्रम्य—

गन्धमाल्यप्रियो नित्यं वातिकं स्थानमाश्रितः ।
तृषा पीडयते नित्यं सुतीक्ष्णं चाभिभाषते ॥
निद्रां करोति सततं भुङ्क्ते रात्रिंदिनं तथा ।
एतै रूपैस्तु विज्ञेयः पैत्तिकं स्थानमाश्रितः ॥
यस्तु च्छन्दयते नित्यं फेनं चैव विमुञ्चते ।
अभक्ष्यैकमतिर्ज्ञेयः श्लैष्मिकं स्थानमाश्रितः ॥
दोषत्रयं समाश्रित्य नानारूपाणि दर्शयेत् ।
दुश्चिकित्सः स उन्मादो विज्ञेयः सांनिपातिकः ॥...
उद्विग्नस्तु भवेद् यस्तु प्रेक्षते च समन्ततः ।
ज्वरो दाहश्च शूलश्च शिरोरुग् यस्य जायते ॥
बुभुक्षितस्तृषार्तो वा देहि देहीति भाषते ।
बलिकामः स विज्ञेयः...................... ॥
रक्तनेत्रो भवेद् यस्तु हर्षितश्चाभिभाषते ।
ईदृशं लक्षणं यस्य भोक्तुकामो ग्रहो भवेत् ॥...
स्नानशीलः शुचिर्नित्यमुद्विग्नश्चैव जायते ।
पूर्वभाषी भवेन्नित्यमुपभोगं च याचते ॥
गन्धमाल्यप्रियश्चैव वस्त्राभरणमिच्छति ।
प्रियवादी भवेन्नित्यमुपरोधं करोति च ॥
रमते स्त्रीशरीरेषु विचित्रैश्चैव हृष्यति ।...
यस्तु वै धुनते केशान् वैद्यं चैव निरीक्षते ।
हन्तुकामः स.............................. ॥
अग्निप्रवेशनं कुर्यादुदके पतनं तथा ।
प्रमादात् पतति क्षोण्यां नृत्यत्यथ च रोदिति ॥
हन्तुकामगृहीतस्य भवत्येतत् तु लक्षणम् ।...
तस्मात् समाधियुक्तेन मन्त्रपूतेन वारिणा ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



गुह्यः संस्पृश्य वक्तव्यो ब्रूहि सत्यं तु गुह्यक ॥
को भवान् किंनिमित्तं च गृहीतो मानुषस्त्वया ।
का च ते क्रियते पूजा ब्रूहि सत्यं किमिच्छसि ॥
एवं तु ब्रूहि मे नित्यं रुद्रस्य वचनं स्मर ।
पटेनान्तरितं कृत्वा वामहस्तं प्रसारयेत् ॥
आकुञ्चयेत् तु प्रच्छन्नं तथा तथ्यं विनिर्दिशेत् ।

## खेटकनन्दनः

[1]न मूलात् कृन्तनं छेदः पाशानामिह कीर्त्यते ।
अणोरसंप्लवो यस्य तस्य च्छिन्नो विधीयते ॥

## (श्री)गमशास्त्र( शासनम् )

( १ )

[2]अविद्योपासितो देहो ह्यन्यजन्मसमुद्भवा ।
कर्मणा तेन बाध्यन्ते ज्ञानिनोऽपि कलेवरे ॥

( २ )

[3]सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
तत्फलं कोटिगुणितमनामातर्पणात् प्रिये ॥
वामपाणौ जपन्त्याश्च तुम्बरोश्चापि मेलके ।
दातव्यं विप्रुषामात्रमुपर्युपरि कल्पितम् ॥

---

१. मृ० वृ० क्रि०, पृ० १५५
२. तन्त्रा० वि०, भा० ८, आ० १३, पृ० १४४
३. तन्त्रा० वि०, भा० ९, आ० १५, पृ० १३९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]तथा च श्रीगमे प्रोक्तं पूजनीयाः प्रयत्नतः ॥
निराचाराः सर्वभक्ष्या धर्माधर्मविवर्जिताः ।
स्वच्छन्दगाः पलाशिन्यो लम्पटा देवता इव ॥

( ४ )

[2]तद्विमर्शस्वभावा हि सा वाच्या मन्त्रदेवता ।
महासंवित्समासन्नेत्युक्तं श्रीगमशासने ॥

( ५ )

[3]कुण्डं शक्तिः शिवो लिङ्गं मेलकं परमं पदम् ।
द्वाभ्यां सृष्टिः संहृतिस्तद्विसर्गस्त्रिविधो गमे ॥

( ६ )

[4]योगो नान्यः क्रिया नान्या तत्त्वारूढा हि या मतिः ।
स्वचित्तवासनाशान्तौ सा क्रियेत्यभिधीयते ॥



## गीतानिष्यन्दः ( क्षेमेन्द्रस्य )

( १ )

[5]न पादपतनं भक्तिर्व्यापिनः परमात्मनः[6] ।
भक्तिर्भावस्वभावानां तदेकीभावभावनम् ॥

---

१. तन्त्रा०, भा० ९, आ० १५, पृ० २६७
२. तन्त्रा०, भा० १०, आ० १६, पृ० ११७
३. तन्त्रा० भा० ११, आ० २९, पृ० ९९-१००
४. ने० उ०, भा० २, पृ० ४३; शि० स्तो० वि०, पृ० ४५
५. म० म० प०, पृ० १०८; वि० भै० वि०, पृ १०३
६. परमेशितुः-वि० भै० वि० ।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]उज्झित्वा[2]त्मसमाधानं ये ध्यायन्त्यन्यदेवता[3]: ।
भिक्षन्ते[4] भूरिवित्तास्ते भिक्षित्वापि बुभुक्षिताः ॥

( ३ )

[5]तावद् व्याघ्रभयं नृपानलभयं वेतालकृत्याभयं
शून्यारण्यभयं महाशनिभयं दुःस्वप्नशङ्काभयम् ।
वातोत्पातभयं ग्रहज्वरभयं क्षुब्धाब्धिवेलाभयं
वैराग्येण न यावदेव गलितः कायाभिमानभ्रमः ॥

## गुप्ततन्त्रम्

( १ )

[6]बद्ध्वा सप्तशिखां मुद्रामाशिखान्तं हलाकृतिम् ।

इत्यादिना—
तदा ग्रसन्ति योगिन्यो रावं कृत्वा शिखान्तरे ।

( २ )

[7]सप्तम्यां कृष्णपक्षस्य प्रभाते लक्षयेत् सदा ।
कृतन्यासबला धीराधीरा वा योगिनी प्रिये ॥
प्रथमं निर्गता या तु नारी वा पुरुषोऽपि वा ।

---

१. म० म० प०, पृ० ११८; चि० पृ० १७; ऋ० वि०, पृ० १५१
२. उत्सृज्यात्म—ऋ० वि०, उत्सृज्य स्वयमात्मानं-चि० ।
३. देवताम्—चि० ।
४. भिक्षित्वा—चि० ।
५. ऋ. वि०, पृ० ७८
६. ने० उ० भा० २, पृ० २३२
७. ने० उ०, भा० २, पृ० २३३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



वामदक्षिणहस्ताभ्यां वामदक्षिणपादयोः ॥
ग्राहयेत् पांशुमुद्धृत्य दक्षिणे पुरुषस्य च ।
अपसव्येन वामाया मन्लोके मारयेत् सदा ॥



## गुह्ययोगिनीतन्त्रम्

[1]हयो हेषति यद्वच्च दान्त उद्रवतीव च ।
सिंहो गर्जति यद्वच्च उष्ट्रः सीत्कुरुते यथा ॥
तथोदीर्य पशोः प्राणानात्कर्षन्ति बलाधिकाः ।
महामन्त्रप्रयोगोऽयमसाध्याकृष्टिकर्मणि ॥



## चतुष्कपञ्चाशिका

[2]चतुष्कपञ्चाशिकया तदेतत् तन्त्रमुच्यते ।



## चन्द्रगर्भः

[3]भृङ्गत्रयसमोपेता ब्रह्मविष्णुहरालयाः ।



१. परा० अभि०, पृ० १९०
२. तन्त्रा० वि०, भा० १०, आ० २६, पृ० १४२
३. स्व० उ०, भा० ५, प० १०, पृ० ५९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# चन्द्रज्ञानम्

( १ )

[१]सदाशिवाख्यं विमलं शुद्धस्फटिकसन्निभम् ।

( २ )

[२]पृथिवीतत्त्वमाक्रम्य जलं दशगुणं बहिः ।
ब्रह्माण्डाधारभूतं तु शुद्धस्फटिकसन्निभम् ॥

( ३ )

[३]सौवर्णं पृथिवीतत्त्वं सूर्यकोटिसमप्रभम् ।
कुक्कुटाण्डनिभं चैतद् ब्रह्माण्डं परिकीर्तितम् ॥



# चिल्लाचक्रेश्वरीमतम्

[४]बौद्धं च पौरुषेयं च द्विविधं तन्मलं स्मृतम् ।
तत्र दीक्षादिना याति पौरुषेयं मलं क्षयम् ॥
बौद्धमक्षयमेवास्ते तावत्तावत् समुद्रितम् ।
यावन्न बौद्धमेवास्य सजातीयविलापकम् ॥
ज्ञानमभ्युदितं सम्यक् सारेतरविभागकृत् ।



---

१. त० व्या० कु०, पृ० ८०
२. त० व्या० कु०, पृ० १५८
३. त० व्या० कु०, पृ० १५९
४. तन्त्रा० वि०, भा० १, आ० १, पृ० ८५-८६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# जयद्रथाधिकारः

[1]उभयोर्हस्तयोरेव ज्येष्ठाङ्गुलिनिपीडिते ।
पृष्ठतोऽनामिके कार्ये तर्जन्यौ तिर्यगानने(यते) ॥
अङ्गुष्ठौ च सुसंलिष्टावास्याकारप्रसारितौ ।
दंष्ट्राकारान्तरे कार्ये अङ्गुष्ठौ (न्यौ) तु कनिष्ठिके ॥
मकरी नाम मुद्रैषा सर्वविघ्नप्रभक्षणी ।



# ज्ञानगर्भस्तोत्रम्

( १ )

[2]बहिष्करणबुद्ध्यहङ्कृतिमनःसुषुम्नाश्रया-
च्चतुर्दशसु चण्डिके पथिषु येन येन व्रजेत् ।
कला शिवनिकेतनं जननि तत्र तत्र[3] स्म ते
दशोदयति दुर्लभा जगति या सुरैरप्यहो ॥

( २ )

[4]प्रमातृमितिमानमेयमयभेदजातस्य ते
विहार इह हेतुतां समुपयाति यस्मात् त्वयि ।
निवृत्तविवृ(हृ)तौ क्वचित्तदपयाति तेनाध्व(धु)ना
नयेन पुनरीक्ष्यते जगति जातुचित् केनचित् ॥

---

१. मृ० वृ० क्रि०, पृ० ४७
२. स्पन्द० राम०, पृ० १४४; शि० वि०, टि० पृ० २८
३. सा तादृशी–शि० वि० ।
४. स्पन्द० क्षेम०, पृ० ४८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]तवाम्ब परमाक्षरी भवति रूपमेतद् वहि-
र्विशत्प्रणवरूपतां समुपयाति हृत्कोटरे ।
अवेद्यमकृतात्मभिर्जननि बिन्दुनादात्म यद्
विदन्ति तदहेलया त्वदनुसंस्मृतेर्योगिनः ॥



## ज्ञानसारः

[2]चिबुकण्ठसमायोगात् प्रविकास्य शिरोऽम्बुजम् ।
चन्द्रसूर्याग्निरोधेन मूलशक्तिं निकुञ्च्य च ॥
रौद्रीं कुञ्चिकयोद्घाट्य द्विरष्टकमलोदरे ।
रसनामन्तरा कृत्वा नासाग्रे रोपयेद् दृशौ ॥
यवमात्रं त्रिकोणं तु मीलनोन्मीलनात्मकम् ।
लिहन् स्वरसनाग्रेण पिबन्नमरवारुणीम् ॥
सदा समरसीभूतं मनः शून्ये निवेशयेत् ।
एषा सा खेचरी मुद्रा उन्मनात्वप्रदायिनी ॥



## ज्ञानोत्तरम्

( १ )

[3]उक्तं ज्ञानोत्तरे चैतद् ब्राह्मणाः क्षत्रिया विशः ।
नपुंसकाः स्त्रियः शूद्रा ये चान्येऽपि तदर्थिनः ॥

---

१. स्व० उ०, भा० ३, प० ६, पृ० ११२
२. अ० र०, पृ० १८३; ऋ० वि०, पृ० १८५
३. तन्त्रा०, भा० १०, आ० २३, पृ० २७०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



ते दीक्षायां न मीमांस्या ज्ञानकाले विचारयेत् ।
ज्ञानमूलो गुरुः प्रोक्तः सप्तसत्रीं प्रवर्तयेत् ॥
दीक्षा व्याख्या कृपा मैत्री शास्त्रचिन्ता शिवैकता ।
अन्नादिदानमित्येतत् पालयेत् सप्तसत्रकम् ॥

( २ )

[1]निर्भर्त्स्यैवं विधानेन अभिषेकं प्रदापयेत् ।...
उष्णीषमुकुटाद्यांश्च छत्रपादुकमासनम् ।
हस्त्यश्वशिविकाद्यांश्च राज्याङ्गानि विशेषतः ॥
करणीं कर्तरीं खट्वीं स्रुक्स्रुवौ दर्भपुस्तकम् ।
अक्षसूत्रादिकं दत्त्वा चतुराश्रमसंस्थितः ॥
दीक्ष्यानुग्रहमार्गेण दीक्षा व्याख्या त्वया सदा ।
अद्यप्रभृति कर्तव्येत्यधिकारः शिवाज्ञया ॥....
गुरुं संपूजयेच्छिष्यो यथाविभवविस्तरैः ।

( ३ )

[2]उक्तं ज्ञानोत्तरायां च तदेतत्परमेशिना ।
शिवो यागप्रियो यस्माद्विशेषान्मातृमध्यगः ॥
तस्माद्रहस्यशास्त्रेषु ये मन्त्रास्तान् बुधो बहिः ।
न प्रतिष्ठापयेज्जातु विशेषाद् व्यक्तरूपिणः ॥



## तत्त्वगर्भस्तोत्रम् ( प्रद्युम्नभट्टस्य )

( १ )

[3]यस्या निरुपधिज्योतीरूपायाः शिवसंज्ञया ।
व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे ॥

---

१. तन्त्रा० वि०, भा० १०, आ० २३, पृ० २७१
२. तन्त्रा०, भा० १०, आ० २७, पृ० ३५९
३. शि० इ० वृ०, पृ० ९४, १०१; स्पन्द० राम०, पृ० १२९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]किञ्चिदुच्छूनतापत्तेरुन्मेषादिपदाभिधाः ।
प्रवर्तन्ते त्वयि शिवे शक्तिता ते यदाम्बिके ॥

( ३ )

[2]ज्ञानक्रियास्वरूपेण प्रवृत्तायास्तु ते शिवे ।
सदाशिवत्वं जगदुर्भोगार्हं तत्त्ववेदिनः ॥
गुणीभूतज्ञशक्तिस्त्वं व्यक्तीभूतक्रियात्मिका ।
यदा तदैश्वरं तत्त्वं व्यक्ततामेति वृत्तिमत् ॥
प्रवृत्तावुन्मुखीभूता भवेस्त्वं परमे ! यदा ।
ज्ञानशक्तिस्तदोदारा विद्या त्वं परिगीयसे ॥

( ४ )

[3]यदा त्वेवंविधादत्र निजा भोगाज्ञता पशोः ।
तदा मायास्वरूपेति गीयसे वैभवाश्रयः ॥

( ५ )

[4]अत एव तु ये केचित् परमार्थानुसारिणः ।
तेषां तत्र स्वरूपस्य स्वज्योतिष्ट्वं न लुप्यते ॥

( ६ )

[5]..........................यावन्नोन्मेषभागणुः ।
न तावदर्थे वर्तेत स चोन्मेषः क्रिया मता ॥
क्रिया च नानारूपैव.......................... ।

इत्युपक्रम्य—

स्वस्वभावस्थितिं मुक्त्वा तस्मान्नान्यास्ति सा दशा ।
शिवे यस्या न वाग्रूपं सूक्ष्ममप्राप्तसन्निधि ॥

---

१. स्पन्द० राम०, पृ० १२९
२. स्पन्द० राम०, पृ० १३१
३. स्पन्द० राम०, पृ० १३२
४. प्र० हृ०, पृ० ४९
५. शि० द० वृ०, पृ० १०१-१०२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# तत्त्वरक्षाविधानम्

( १ )

[1]हृत्पद्ममण्डलान्तःस्थो नरशक्तिशिवात्मकः ।
बोद्धव्यो लयभेदेन बिन्दुर्विमलतारकः ॥

( २ )

[2]तत्त्वरक्षाविधानेऽतो विसर्गस्त्रैधमुच्यते ।
हृत्पद्मकोशमध्यस्थस्तयोः संघट्ट इष्यते ॥
विसर्गोऽन्तः स च प्रोक्तश्चित्तविश्रान्तिलक्षणः ।
द्वितीयः स विसर्गस्तु चित्तसंबोधलक्षणः ॥
एकीभूतं विभात्यत्र जगदेतच्चराचरम् ।
ग्राह्यग्राहकभेदो वै किञ्चिदत्रेष्यते यदा ॥
तदासौ सकलः प्रोक्तो निष्कलः शिवयोगतः ।
ग्राह्यग्राहकविच्छित्तिसम्पूर्णग्रहणात्मकः ॥
तृतीयः स विसर्गस्तु चित्तप्रलयलक्षणः ।
एकीभावात्मकः सूक्ष्मो विज्ञानात्मात्मनिर्वृतः ॥

# तत्त्वार्थचिन्तामणिः

( १ )

[3]तुटिपाते सर्वज्ञतादयः ।

( २ )

[4]यथा चिन्तामणौ प्रोक्तं तेन रूपेण योगवित् ।
निःशङ्कः सिद्धिमाप्नोति गोप्यं तत्प्राणवत् स्फुटम् ॥

१. तन्त्रा०, भा० २, आ० ३, पृ० ११८
२. तन्त्रा०, भा० २, आ० ३, पृ० २०४-२०५; तन्त्रा० वि०, भा० ११, आ० २९, पृ० ९९
३ तन्त्रा० वि०, भा० ७, आ० १०, पृ० १४२
४. तन्त्रा० वि०, भा० १०, आ० १६, पृ० १९



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



यदुक्तम्—

निःशङ्कः सिद्धिमायाति शङ्कां तेनात्र वर्जयेत् ।
अलीककरुणाबुद्धिरवीरो हि विनश्यति ॥

# तन्त्रराजभट्टारकः

( १ )

[1]हंसं शून्यं तथा प्राणं हकारं नामभिः स्मृतम् ।

( २ )

[2]ब्रह्माण्डसण्डपान्तर्.............................. ।
अतो भुवनदीक्षान्या शृणु पार्वति तत्त्वतः ।
आदिषट्के पुरा प्रोक्तमेतन्निखिलतो मया ॥
तथापि तव वक्ष्यामि संक्षेपादिह भामिनि ।...
तेषां विभागमधुना शृणु वीरेन्द्रवन्दिते ॥...
यत्तद् भूम्यण्डकं भाति पीतमम्बुजजन्मनः ।
तस्याधोभागगा भान्ति पूर्वदृष्टान्तकारकाः ॥
शेषाहिफणमाणिक्यविश्वकर्मप्रसादतः ।

( ३ )

[3]अनन्तशक्तिचन्द्रांशुपीयूषोर्मिभिरुल्बणैः ।
आलिङ्गितमतश्चोच्चैरप्तत्त्वाधः पथोच्छलत् ॥
भुवनं तस्य वीरस्य भात्यनन्तस्य स्वश्रिया ।
अनन्तवनितावक्त्रपद्मषण्डसरः सदा ॥...

---

१. तन्त्रा० वि०, भा० २, आ० ३, पृ० १४५
२. तन्त्रा० वि०, भा० ५, आ० ८, पृ० १७
३. तन्त्रा० वि०, भा० ५, आ० ८, पृ० १८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



ततो हूहुकरुद्रस्य चूडामणिनभस्वतः ।
त्विषा प्रध्वस्ततिमिरं पुरं वीरगणाकुलम् ॥...
भैरवीयमहारज्जुप्रबद्धानि महेश्वरि ।
एतान्यप्सु पुराण्यत्र निभृतानि शिवात्मना ॥
लक्षोच्छ्रितानि सर्वाणि सलिलावर्तगानि च ।...
समन्ताद् ब्रह्मणोऽण्डं तु शतकोटिप्रविस्तरम् ॥
कटाहं च स्मृतं कोटिः शतरुद्रैः समन्वितम् ।...
.. ........................अन्तर्भुवनानि विशोधयेत् ॥

( ४ )

[1]प्रालेयरोधसो याम्ये सौम्ये वै वीचिमालिनः ।
कार्मुकाकारसंस्थानं वर्षं तरङ्गुरुमानगम् ॥...
शीतसानोः समाश्लिष्टं नाम्ना बिन्दुसरः सरः ।
तदारभ्य खण्डमेकं सर्वतः सज्जनाकुलम् ॥
वारिलुप्तं न यन्मानं दुहित्रे तद्ददौ भुवः ।
कुमार्यै भरतो राजा सपत्नेन्दुनभोग्रहः ॥
द्वीपं कुमारिकासंज्ञमतो ह्येतत् प्रगीयते ।
योजनानां सहस्रं तु नानावर्णाश्रमान्वितम् ॥

( ५ )

[2]आकाशतुल्यो भवति शिष्यः सन् दीक्षितस्तदा ।
भैरवो वा भवेत् सो वै दग्धसंसारबन्धनः ॥
पश्चात्तुलामर्पयेत अश्मान्येवमपास्य तु ।
सप्तविंशतिपुष्पैश्च कृतां मालां समर्पयेत् ॥
तत्समः साधको जायात् प्रहीणावरणो यदा ।

१. तन्त्रा० वि०, भा० ५, आ० ८, पृ० ६३-६४
२ तन्त्रा० वि०, भा० १०, आ० २०, पृ० २११

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ६ )

¹ततस्तत्रानयेद् दूतीं मदघूर्णितलोचनाम् ।
बिम्बोष्ठीं चारुदशनां सभ्रूभङ्गाननां शुभाम् ॥
त्रस्तबालमृगाभासनयनां चारुहासिनीम् ।
स्फुरद्भ्रमरसङ्घातनिभसत्केशपाशिकाम् ॥
कामकार्मुकसङ्काशभ्रूभङ्गतरलेक्षणाम् ।
द्रवच्चामीकराकारसवर्णां निस्तरङ्गिणीम् ॥
कर्णाभरणसच्चित्रशोभाशतसुशोभनाम् ।
सत्कम्बुनिभसत्कण्ठवरभूषणभूषिताम् ॥
गजकुम्भनिभोद्दामस्तनभारावनामिताम् ।
सुवृत्तोपचिताकारबाहुकन्दलिमण्डिताम् ॥
सत्पद्मफणसङ्काशकरशाखाविराजिताम् ।
स्फुरद्रत्नशिखाचित्रकोर्मिकाङ्गुलिशोभिताम् ॥
पूर्णेन्दुवरलावण्यवदनां चित्तहारिणीम् ।
हरिहेतिमहासिंहपिपीलवरमध्यगाम् ॥
त्रिवलिश्रेणिसद्बिम्बजघनालसगामिनीम् ।
रम्भाकरिकराकारवरोरुवरजङ्घिकाम् ॥
सत्कामरथचक्राभगुल्फपादसुशोभनाम् ।
प्रलम्बहेमाभरणहारावलिविराजिताम् ॥
स्फुरन्मञ्जीरझाङ्काररशनामुखरस्वनाम् ।
पारिहार्यझणत्कारवलयध्वानमन्थराम् ॥
मत्तनागेन्द्रसङ्काशगतिं गम्भीरनाभिकाम् ।
हंसगद्गदवाग्वंशसदृशां शुभभाषिणीम् ॥
केयूरसूत्रिकामोदिपुष्पस्रग्दामभूषिताम् ।
महापद्मफणापीडताम्बूलवरलालसाम् ॥

---

१. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ६८-६९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



नृत्तगीतससीत्कारलीलाकुट्टमितावृताम् ।
निस्तरङ्गां सवर्णां च देव्येकार्पितमानसाम् ॥
लोभमोहपरिक्षीणचेतसं चित्स्वभाविकाम् ।
भैरवैकचमत्कारचर्वणैकस्वरूपिणीम् ॥
सा दूतिर्मोहनी मुद्रा जगत्यस्मिंश्चराचरे ।



## तन्त्रसद्भावः

( १ )

[1]तुलाशुद्धिपरीक्षां वा कुर्यात् प्रत्यययोगिनीम् ।
यथा श्रीतन्त्रसद्भावे कथिता परमेशिना ॥

( २ )

[2]अथैवमपि यस्य स्यान्नावेशः कश्मलात्मनः ।
तं पिण्डत्रितयादेकेनोद्बोधपदवीं नयेत् ॥
सोमानलानिलैरेकं पिण्डमादौ समुद्धरेत् ।
फणभृत्प्राणशमनशिखिवायुयुतं परम् ॥
शिखिसोमासुकूटाग्निसमीरैश्च तृतीयकम् ।
षष्ठासनानि सर्वाणि तिलकाङ्कानि सुन्दरि ॥
त्रिभिरेभिर्भवेद् व्यस्तैः शक्त्यावेशः शरीरगः ।

( ३ )

[3]त्रिकोणकं डम्बरं च न्यस्येत् सर्वाङ्गसङ्गतम् ।
द्वादशस्वरसंभिन्नं हृच्चक्रे मन्त्रनायकम् ॥

१. तन्त्रा०, भा० १०, आ० २०, पृ० २१०
२. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १३७
३. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १३९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



उदयादित्यसंकाशं जीवं तेन च चालयेत् ।
दीपयेदनलेनैव वायुनापि प्रबोधयेत् ॥
मन्त्रेणान्तरितं नाम जपेच्छिष्यस्य भामिनि ।
आवेशमायाति ततस्तत्क्षणादेव तत्परः ॥

( ४ )

[1]शाकिनी दूषिका चैव चुम्बिका पत्रलेखिका ।
उच्छुष्मा नक्रदूषी च ऊर्ध्वनिःश्वासिका तथा ॥
अधोनिःश्वासिका चैव आसां कर्म शृणु प्रिये ! ।
शाकिन्यश्चोत्तमास्तासां शेषा घोरतराः स्मृताः ॥
अजस्रं दूषते या तु रक्तं वै सार्ववर्णिकम् ।
गच्छन्ती वाथ तिष्ठन्ती तेन सा दूषिका स्मृता ॥
पुत्र-मित्र-पितृ-भ्रातृ-बालानास्वादयन्ति च ।
चुम्बन्त्यश्वास्रमश्नन्ति विधेयाश्चुम्बिकास्तु ताः ॥
पत्रेण मुखमासाद्य पिबन्ती चामृतं सदा ।
पत्रलेखी स्मृता सा तु दुर्निवारा महाबला ॥
रात्रौ भूत्वा विवस्त्रा या मूत्रयित्वा प्रदक्षिणम् ।
कृत्वा तु प्राशयेद् रक्तं मुक्तकेशी तु कर्षयेत् ॥
उच्छुष्मिका तु सा ज्ञेया साधकैर्वीरनायिका ।
नासाग्रं वीक्षमाणा तु स्वादयन्त्यमृतं सदा ॥
नक्रदूषी तु सा ज्ञेया ऊर्ध्वनिःश्वासिका तु सा ।
नग्ना भूत्वा तु गच्छेद् या रात्रौ परगृहं सदा ॥
वस्त्रेणाच्छाद्य वक्त्रं तु भूत्वा चैवमधोमुखी ।
पिबते शोणितं नित्यमधोनिःश्वासिका तु सा ॥

---

१. ने० उ०, भा० २, पृ० १४५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ५ )

[1]अधःश्वासा तु ब्राह्म्यंशा नक्रदूषी महेश्वरी।
दूषिका तु विशाख्यंशा वैष्णव्यंशा तु पार्वति!॥
पत्रलेखी समाख्याता चामुण्डांशा तु चुम्बिका।
ऊर्ध्वनिःश्वासिका ज्ञेया माहेन्द्र्यंशा वरानने!॥
वाराह्यंशा तथोच्छुम्भा कथिता वीरवन्दिते!।···
चुम्बिकायास्त्रयो भेदाः ···· ···· ··· ······।

( ६ )

[2]तत्त्वरूपास्तु योगिन्यो ज्ञातव्याश्च वरानने!।
शिवेच्छानुविधायिन्यो मनोवेगा महाबलाः॥
विचरन्ति समस्ताश्च ब्रह्मविष्ण्विन्द्रभूमिषु।
अपराः कुलसम्भूता योनिजाः कुलजाः प्रिये!॥
पीठजाः क्षेत्रजाश्चैव शरीरे तु विशेषतः।···
पीठजा योगिन्यो ज्ञेयाः क्षेत्रजा देवताः स्मृताः।
योनिजा रूपिणी प्रोक्ता तासां भेदा ह्यनेकधा॥····
ब्राह्मणक्षत्रविट्शूद्रकुलजाश्चैव नायिकाः।
सप्तविंशतिभिर्वर्षैरूर्ध्वं जानन्ति तत् पदम्॥
कुलेऽन्यत्र समुद्भूताः शाकिन्यो रुद्रमातरः।···
शाकिन्यो रुद्रशाकिन्यश्चान्याः शावरिकाः शिवाः।
योगिन्यश्चापरास्तासां यद् व्याप्तमखिलं जगत्॥
छलेनाकृष्य पिबति क्षुद्राः प्राणिपयः सदा।
रूपपरिवर्तनार्थं लब्ध्वा पातयति पशून्॥
शाकिनी सा तु विज्ञेया रौद्रस्थानरता सदा।
परचित्तगतिज्ञा च रूपस्य परिवर्तनम्॥

१. ने० उ०, भा० २, पृ० १४६
२. ने० उ०, भा० २, पृ० १५२–१५३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



करोत्यमृतलुब्धा च ज्ञेया सा रुद्रशाकिनी।
शैव्यश्चैवंविधा ज्ञेया गुप्ताचारा वनेरताः॥
न घातयत्यसौ सर्वान् छिद्रेणास्वादयेदसृक्।
शाबर्यस्त्वपरा ज्ञेया मन्त्रतद्गतचेतसः॥
पञ्चामृतं समस्तं हि मानुषं च हरन्ति ताः।
पर्यटन्ति क्षणात् पृथ्वीं रूपं कुर्वन्त्यनेकधा॥
अपरा योगसामर्थ्यात् त्रिकालपरिवेदिकाः।
शिवास्तु ताः समाख्याता मन्त्रध्यानपरायणाः॥
तथाष्टगुणसम्पन्नाः पर्यन्तपदवेदिकाः।

( ७ )

[1]तदङ्के रमते नित्यं बालानां च प्रसङ्गतः।
कुमारो नृत्यते चैव पांसुना क्रीडते सदा॥



## तन्त्रसमुच्चयः

[2]नरशक्तिशिवावेशि विश्वमेतत् सदा स्थितम्।
व्यवहारे क्रिमीणां च सर्वज्ञानां च सर्वशः॥



## तोतुलागमः

( १ )

[3]प्रहरार्धभुजः सर्वेऽहोरात्रं च चरन्ति ते।

---

१. ने० उ०, भा० २, पृ० १५६
२. परा० अभि०, पृ० ८०
३. स्व० उ०, भा० ३, प० ७, पृ० १९७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



( २ )

[1]रवेः षोडश मध्यात्तु चतुरोऽन्ताच्च भार्गवात् ।
चषकौ द्वौ बुधस्यादौ सोमस्याष्टौ तु मध्यतः ॥
सौरस्यान्ताच्चतुष्षष्टिं मध्यतश्चषकं गुरोः ।
द्वात्रिंशतं कुजस्यान्ताद् भुङ्क्ते षट् परिवर्ततः ॥

( ३ )

[2]भूतश्चोत्तिष्ठते वेगाद् बलवान् बहुभुक् तथा ।

तत्रैव—

बलिकामो भोक्तुकामो हन्तुकामस्तथैव च ।
ग्रहश्च पतितो देवि मानुषांश्चाप्यमानुषान् ॥
करोति विविधान् भावान् ··· ··· ··· ··· ।

( ४ )

[3]यक्षेण तु गृहीतस्य अट्टहासादि लक्षणम् ।

तथा—

अतिरौद्रा भवेद् दृष्टिरकस्माच्च प्रधावति ।
भोजनं चैव भुञ्जानो देवं पूजयते सदा ॥
मद्यमांसप्रियश्चैव रुधिरं ग्रसते बहु ।
यक्षग्रहगृहीतस्य एतद् भवति लक्षणम् ॥

( ५ )

[4]तस्मात् समाधियुक्तेन मन्त्रपूतेन वारिणा ।
गुह्यः संस्पृश्य वक्तव्यो ब्रूहि सत्यं तु गुह्यक ! ॥

---

१. स्व० उ०, भा० ३, प० ७, पृ० १९९
२. ने० उ०, भा० २, पृ० १५०
३. ने० उ०, भा० २, पृ० १५१–१५२
४. ने० उ०, भा० २, पृ० १९९



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



को भवान् किंनिमित्तं च गृहीतो मानुषस्त्वया ।
का च ते क्रियते पूजा ब्रूहि सत्यं किमिच्छसि ॥
एवं तु ब्रूहि मे नित्यं रुद्रस्य वचनं स्मर ।
पटेनान्तरितं कृत्वा वामहस्तं प्रसारयेत् ॥
आकुञ्चयेत्तु प्रच्छन्नं तथा तथ्यं विनिर्दिशेत् ।

## त्रिककुलम्

[1]मासस्य मार्गशीर्षस्य या तिथिर्नवमी भवेत् ।
कृष्णपक्षे सूर्ययुक्ता उत्तराफल्गुनीयुता ॥
तस्यां विशेषसंपूजा कर्तव्या साधकोत्तमैः ।...
कार्तिकस्य तु मासस्य शुक्ला या नवमी भवेत् ।
चन्द्रश्रवणसंयोगे द्वादशं पर्व पूजयेत् ॥

## त्रिकरत्नकुलम्

[2]अष्टाष्टकविभेदेन मातृका या निरूपिता ।
तदेव कुलचक्रं तु तेन व्याप्तमिदं जगत् ॥

## त्रिकशासनम्

[3]समता सर्वभावानां वृत्तीनां चैव सर्वशः ।
समता सर्वदृष्टीनां द्रव्याणां चैव सर्वशः ॥

---

१. तन्त्रा० वि०, भा० ११, आ० २८, पृ० २४
२. परा० अभि०, पृ० १९२
३. तन्त्रा० वि०, भा० ३, आ० ४ पृ० ३०४; म० म० प०, पृ० १६८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



भूमिकानां च सर्वासामोषल्लीनां तथैव च।
समता सर्वदेवीनां वर्णानां चैव सर्वशः॥



## त्रिकसारः

( १ )

[1]परां त्वेकाक्षरां मध्ये शङ्खकुन्देन्दुसुन्दराम्।
चतुर्भुजां चतुर्वक्त्रां योगिनीद्वादशावृताम्॥...
अथातः संप्रवक्ष्यामि वाग्विधानमनुत्तमम्।....
तद्बीजं तु विभिन्नं वै स्वरैर्द्वादशभिः क्रमात्॥
ताश्चैव तु तथा देव्यः..................।

( २ )

[2]तस्याधस्तान्महामाया षट्पुटा संव्यवस्थिता।

( ३ )

[3]श्रीसारशास्त्रे भगवान् वस्त्वेतत्समभाषत॥
धर्माधर्मात्मकैर्भावैरनेकैर्वेष्टयेत् स्वयम्।
असन्देहं स्वमात्मानमवीच्यादिशिवान्तके॥
तद्वच्छक्तिसमूहेन स एव तु विवेष्टयेत्।
स्वयं बध्नाति देवेशः स्वयं चैव विमुञ्चति॥
स्वयं भोक्ता स्वयं ज्ञाता स्वयं चैवोपलक्षयेत्।
स्वयं मुक्तिश्च मुक्तिश्च स्वयं देवी स्वयं प्रभुः॥
स्वयमेकाक्षरा चैव यथोष्मा कृष्णवर्त्मनः।

१. तन्त्रा० वि०, भा० २, आ० ३, पृ० २३६
२. तन्त्रा० वि०, भा० ५ आ० ८, पृ० २१८
३. तन्त्रा०, भा० ८, आ० १३, पृ० ८२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ४ )

[१]उक्तं श्रीसारशास्त्रे च निर्विकल्पो हि सिध्यति ॥
क्लिश्यन्ते सविकल्पास्तु कल्पोक्तेऽपि कृते सति ।

( ५ )

[२]श्रीसारेऽप्यस्य संभाषात् पातकं नश्यति क्षणात् ।

( ६ )

[३]अर्थस्य प्रतिपत्तिर्या ग्राह्यग्राहकरूपिणी ॥
सा एव मन्त्रशक्तिस्तु वितता मन्त्रसन्ततौ ।

( ७ )

[४]उपरिष्टाद् विन्दुतत्त्वमीश्वरस्तत्र देवता ।
विधिः समयिनां तत्र कथितस्तव निश्चितम् ॥
तदूर्ध्वे अर्धनारीशो महाभुवनसंकुलः ।
स्कन्दयामलतन्त्रे तु अनन्तः परिकीर्तितः ॥
समयाचारभ्रष्टानामाचार्याणां यशस्विनि ।
निरोधकत्वे संतिष्ठेदित्याज्ञा पारमेश्वरी ॥
अन्यायं ये प्रकुर्वन्ति ग्रन्थार्थं नार्थयन्ति ये ।
तेषां तत्र निवासस्तु अन्यायपथवर्तिनाम् ॥

( ८ )

[५]त्रिंशकार्थस्त्वया प्रोक्तः सार्धकोटिप्रविस्तरः ।

---

१. तन्त्रा०, भा० ९, आ० १५. पृ० ५८
२. तन्त्रा०, भा० ९, आ० १५, पृ० २६५
३. तन्त्रा०, भा० १०, आ० १६, पृ० १००
४. तन्त्रा० वि०, भा० १०, आ० २३, पृ० ३०२
५. परा० अभि०, पृ० १७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ९ )

[1]अनुत्तरं तद् हृदयं हृदये ग्रन्थिरूपता ।
ग्रन्थिं षोडशधा ज्ञात्वा कुर्यात् कर्म यथासुखम् ॥

( १० )

[2]धारयन्ति पशोः पाशान् भावान् स्वात्ममयांस्तथा ।
विद्यामायानियत्याद्याः शोध्यास्तेन प्रयत्नतः ॥

( ११ )

[3]शिवशक्तिसमापत्त्या शिवशक्तिघनात्मकः ।
शिवशक्तिसमापत्तित्रिकं संपूजयेत् परम् ॥

( १२ )

[4]आनन्दप्रसरः पूजा तां त्रिकोणे प्रकल्पयेत् ।
पुष्पधूपादिगन्धैस्तु स्वहृत्संतोपकारिणीम् ॥

( १३ )

[5]मत्स्यवलनसंयोगात्तालुरन्ध्रे व्यवस्थिता ।

( १४ )

[6]विन्दुनादात्मकैर्देहैः शान्तैश्च शिवसम्भवैः ।
अतीतस्तु भवेद् देवो निरञ्जनः परः शिवः ॥

( १५ )

[7]कदलीगर्भदलवन्मोदकादिरसादिवत् ।
कदम्बगोलवच्चित्राः कञ्चुकाश्चित्रसंविदः ॥

१. परा० अभि०, पृ० ३१
२. परा० अभि०, पृ० ११७
३. परा० अभि०, पृ० १८४
४. परा० अभि०, पृ० २२३
५. स्व० उ०, भा० ३, प० ७, पृ० २३२
६. स्व० उ०, भा० ५, प० १०, पृ० ५५७
७. स्व० उ०, भा० ६, प० ११, पृ० ४६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# त्रिकहृदयम्

( १ )

[1]नित्यं विसर्गपरमः स्वशक्तौ परमेश्वरः ।
अनुग्रहात्मा स्रष्टा च संहर्ता चानियन्त्रितः ॥

( २ )

[2]चक्रशूलाम्बुजादीनां प्राणिनां सरितां नृणाम् ।
आयुधानां च शक्तीनामन्यस्यापि च कस्यचित् ॥
यो निवेशस्तु वर्णानां तद्वीर्यं तत्र मन्त्रगम् ।
तेन गुप्तेन ते गुप्ताः शेषा वर्णास्तु केवलाः ॥

( ३ )

[3]अनन्ते भैरवोच्छ्राये मूर्तिरेषा परापरा ।
यस्यास्तु न्यासमात्रेण अणुत्वं प्रविलीयते ॥

( ४ )

[4]... ... ... ... ... सर्वः परकलामयः ।
महानवान्तरो दिव्यो मिश्रोऽदिव्यश्च तत्परः ॥

# त्रिपुरसुन्दरीमन्दिरस्तोत्रम्

[5]लक्ष्मीमहोदयमहोत्सवपुण्यलग्नं
वाणीविशेषपरिमेलनपूर्वपर्व ।

---

१. परा० अभि०, पृ० १३
२. परा० अभि०, पृ० १५६
३. स्व० उ०, भा० १, प० १, पृ० ३४
४. स्व० उ०, भा० ४, प० ८, पृ० २५
५. म० म० प०, पृ० १८८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



त्वद्वन्दनं त्रिपुरसुन्दरि ! विश्ववन्द्यं
तद्वत् परं विजयते महनीयसारम् ॥



# त्रिशिरोमतम्

( १ )

[1]तत्त्वग्रासस्य सर्वस्य धर्मः स्यादनपायवान् ।
आत्मैव हि स्वभावात्मेत्युक्तं श्रीत्रिशिरोमते ॥

( २ )

[2]चतुष्षड्द्विर्द्विगणनायोगात् त्रैशिरसे मते ।
षट्चक्रेश्वरता नाथस्योक्ता चित्रनिजाकृतेः ॥

( ३ )

[3]चतुष्कं षट्कोष्टकं द्वादशारं षोडशारकम् ।
चतुर्विंशारकं देवि प्रविभक्त्या सुसंस्थितम् ॥

( ४ )

[4]तदुक्तं त्रिशिरःशास्त्रे संबुद्ध इति वेत्ति यः ॥
ज्ञेयभावो हि चिद्धर्मस्तच्छायाच्छादयेन्न ताम् ।

( ५ )

[5]अन्यथा स्वल्पबोधस्तु तन्तुभिः कीटवद् यथा ।
मलतन्तुसमारूढः क्रीडते देहपञ्जरे ।...

---

१. तन्त्रा०, भा० १, आ० १, पृ० १२३
२. तन्त्रा०, भा० १, आ० १, पृ० १५५–१५६
३. तन्त्रा० वि०, भा० १, आ० १, पृ० १५६
४. तन्त्रा०, भा० १, आ० १, पृ० १७६–१७७
५. तन्त्रा० वि०, भा० १, आ० १, पृ० १७७–१७८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सम्यग् बुद्धस्तु विज्ञेयः ... ... ... ... ।
नानाकारैर्विभावैश्च भ्राम्यते नटवद् यथा ।
स्वबुद्धिभावरहितमिच्छाक्षेमबहिष्कृतम् ।... ...।
ज्ञेयस्वभावश्चिद्रूपस्तच्छाया नैव छादयेत् ।

( ६ )

[1]श्रीमत्त्रिशिरसि प्रोक्तं परज्ञानस्वरूपकम् ।
शक्त्या गर्भान्तर्वर्तिन्या शक्तिगर्भं परं पदम् ॥

( ७ )

[2]कलाव्याप्तिर्महादेव पदसंज्ञा महेश्वर ।
अतिसंक्षेपतो ब्रूहि ... ... ... ... ...॥
कला सप्तदशी याऽसौ ... ... ... ... ।

( ८ )

[3]उपासाश्च द्वयाद्वैतव्याप्तिश्चाकारयोगतः ।
श्रीमत्त्रैशिरसे तच्च कथितं विस्तराद् बहु ॥

( ९ )

[4]जीवः शक्तिः शिवस्यैव सर्वत्रैव स्थितापि सा ॥
स्वरूपप्रत्यये रूढा ज्ञानस्योन्मीलनात् परा ।

( १० )

[5]कदलीसंपुटाकारं सबाह्याभ्यन्तरान्तरम् ।
ईक्षते हृद्यान्तःस्थं तत्पुष्पमिव तत्त्ववित् ॥

---

१. तन्त्रा०, भा० १ आ० २, पृ० २६
२. तन्त्रा०, वि०, भा० २, आ० ३, पृ० १४१
३. तन्त्रा०, भा० २, आ० ३, पृ० २३७
४. तन्त्रा०, भा० ३, आ० ५, पृ० ३१७
५. तन्त्रा०, भा० ३, आ० ५, पृ० ३३१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ११ )

[1]शृणु देवि प्रवक्ष्यामि मन्त्रभूम्यां प्रवेशनम् ॥

( १२ )

[2]श्रीमत्त्रैशिरसेऽप्युक्तं मन्त्रोद्धारस्य पूर्वतः ।...
अधुना श्रोतुमिच्छामि मन्त्रोद्धारस्य लक्षणम् ॥

( १३ )

[3]प्राण एव शिखा श्रीमत्त्रिशिरस्युदिता हि सा ॥...
शिखा परिमिता शक्तिर्भैरवस्य तु कथ्यते ।
क्रियाशक्तिरिति ख्याता ... ... ... ... ॥
स चन्द्रो विद्यमानोऽपि अपानो हृदि मध्यतः ।
यदा तूत्सन्नतां याति जीवादित्यो न चोद्गमेत् ॥
प्राभातिकीति विज्ञेया आत्मतत्त्वप्रबोधिनी ।
क्षपा शशी तथाऽपानो नाद एकत्र तिष्ठति ॥
तुट्यर्धं ज्ञानमहसा सन्ध्या वै समुदाहृता ।...
ऊर्ध्ववक्त्रः स्थितो भानुश्चन्द्रमाऽधोमुखः स्थितः ॥...
तदन्तराले उदितस्ताल्वाकाशान्तगोचरे ।
प्रमाणरहितो भाव्यः सुशान्तः शान्तबोधनात् ॥
व्योमवद् व्योमवह्निस्तु तुट्यर्धं कालकल्पनात् ।
माध्याह्निकी तु विज्ञेया सन्ध्या मोक्षप्रदायिका ॥
व्योममध्यस्थितः सूर्यः परादित्येति कथ्यते ।
अनस्तमितसारो हि जन्तुचक्रप्रबोधकः ॥...
बिन्दुः प्राणोऽप्यहश्चैव रविरेकत्र तिष्ठति ।
सुप्रशान्तं तु संतिष्ठेन्मनोव्यावृत्तिवर्जितः ॥

---

१. तन्त्रा०, भा० ३, आ० ५, पृ० ३९५
२. तन्त्रा० वि०, भा० ३, आ० ५, पृ० ४४९
३. तन्त्रा० वि०, भा० ४, आ० ६, पृ० २२-२९



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



कृत्वा प्रशान्तभूमौ च स्वरूपं सन्धिदेशतः ।
महासन्ध्या तु विज्ञेया तृतीया परिकीर्तिता ॥...
तया निबद्धया देहे सन्निधानं गुणेश्वराः ।
विदध्युः साधकेन्द्राणां देवि नास्त्यत्र संशयः ॥

( १४ )

[1]त्रिशिरःशासने बोधो मूलमध्याग्रकल्पितः ।

( १५ )

[2]बुद्धयस्मितासुसंरूढो गुणान् पूर्वं विभेद्य च ।
विचारयेद् भूतधर्मान् पृथिव्यादिक्रमेण तु ॥...
षट्त्रिंशत्तत्त्वविषये यद् भेदेन विकल्पना ।
स्मृतिः सुस्फुटभेदात्मा मितमाता तदुच्यते ॥
प्रान्तावस्थितिविज्ञानं स्थौल्यं बोधस्य भैरवि ।
समस्ततत्त्वभावोऽयं नावलोक्यो विभागशः ॥
स्वात्मनि संस्थितं विन्द्याद् बोधमध्यं तदुच्यते ।
आधाराधेयभावोऽयमुभयावस्थितस्य च ॥
तत्त्वभेदविभागेन स्वभावस्थितिलक्षणम् ।
तत्पदस्थो न विन्देत चिद्व्योमान्तरवर्तिनः ॥
तदतीतं विजानीयान्मध्यमं प्राप्त्यवस्थितम् ।
प्रान्तावस्थितिविज्ञेयं बोधाग्रं तदिहोच्यते ॥
शक्तिज्ञानं विजानीयात् परमानन्दलक्षणम् ।
नित्योदितं सुखं विद्धि निस्तरङ्गं तु कथ्यते ॥
बृहत्सुखेति कथितं चिद्बोधं तु निगद्यते ।

( १६ )

[3]ब्रह्माण्डबाह्यतोऽनन्तो विश्वाधारस्तु कथ्यते ।

---

१. तन्त्रा०, भा० ५, आ० ८, पृ० ९
२. तन्त्रा० वि०, भा० ५, आ० ८, पृ० १०-११
३. तन्त्रा० वि०, भा० ५, आ० ८, पृ० १५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १७ )

[१]श्रीमत्त्रिशिरसि प्रोक्तं मद्यशीधुसुरादिना ।
सुस्वादुना प्रसन्नेन तनुना सुसुगन्धिना ॥...
निरीक्षणं मन्त्रदृशा प्रोक्षणं चार्घवारिणा ।
ताडनं चास्त्रराजेन नेत्रेणाप्यायनं तथा ॥
गुण्ठनं कवचेनापि ... ... ... ... ... ... ।
सिञ्चेत्तु विग्रहं तेन बद्ध्वा मुद्रां तु कालशीम् ॥
कृत्वाऽभिषेकं विधिवत् तर्पयेन्मन्त्रदेवताः ॥

( १८ )

[२]नादिनी तु शिखाग्रस्था नकाराक्षरसंज्ञिता ।
ऋ ॠ ऌ ॡ निवृत्त्याद्या मालिका शिरसि स्थिता ॥
थ शिरोग्रं सती देवी ध नेत्रे प्रियदर्शना ।
ई गुह्यशक्तिर्नासास्था व्याप्तास्ते नेत्रमध्यतः ॥
व्यापयित्वा स्थिता देवी च तृतीयं च लोचनम् ।
चामुण्डा परमेशानी ललाटस्था विराजते ॥
बकारो वदनं तस्या वज्रिणी शक्तिरव्यया ।
कवर्गो दशनास्तीक्ष्णाः कङ्कटा कालिका शिवा ॥
घोरघोषा शिविराख्या कवर्गे संप्रकीर्तिताः ।
मायादेवी इ जिह्वा तु अ वाग् वागीश्वरी मता ॥
नारायणी ण कर्णौ तु तयोरु ऊ च भूषणम् ।
मोहनी च तथा प्रज्ञा व कण्ठशिखिवाहनी ॥
लामा विनायिका देवी डढौ बाहुद्वयं विभोः ।
पूर्णिमा ह्रस्तदेशस्था ठकाराख्या विभोर्मता ॥

---

१. तन्त्रा० वि०, भा० ९. आ० १५, पृ०३७-३९
२. तन्त्रा० वि० भा० ९ आ० १५, पृ० ६४-६५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



झङ्कारी कुन्दना चैव झञावङ्गुलयः क्रमात् ।
कापालिनी वामकरे टकारः परमेश्वरी ॥
दीपनी शूलदण्डश्च रेफः सम्यगुदाहृतः ।
ज जयन्ती भवेच्छूलं देवदेव्या महेश्वरि ॥
भीषणी वायुवेगा च स्कन्धयोरुभयोर्भ यौ ।
पावनी तु प हृल्लग्ना उदरं षश्च लम्बिका ॥
संहारिका क्षकारोऽयं नाभौ देवस्तु भैरवि ।
छगली पूतना चेति स्तनौ छ लौ प्रकीर्तितौ ॥
आ मोटरी तद्गतं तु क्षीरमा परिकीर्तितम् ।
परमात्मा सकारोऽयं ह प्राणः शक्तिरम्बिका ॥
इच्छाशक्तिर्विसर्गाख्या व्याप्य प्राणात्मनि स्थिता।
म नितम्बं महाकाली श गुह्यं कुसुमायुधा ॥
शुक्रा देवी भवेच्छुक्रमनुस्वारस्तु भैरवी ।
तारा तकार ऊरुस्था ए ऐ ज्ञानक्रिये उभे ॥
जानुनी संस्थिते देवि भैरव्यास्तु महात्मनः ।
गायत्री चैव सावित्री ओ औ जङ्घे प्रकीर्तिते ॥
दहनी दक्षपादस्था वामे फेत्कारिका द फौ ।

( १९ )

[1]संपूज्य द्वार ऊर्ध्वे तु गणेशं दक्षिणे तथा ।
वामे श्रियं च वागीशीं मध्ये संचिन्त्य पूजयेत् ॥

( २० )

[2]उक्तं च त्रिशिरस्तन्त्रे स्वाधारस्थं यथास्थितम् ॥
द्वादशाङ्गुलमुत्थानं देहातीतं समं ततः ।
द्वासप्ततिर्दश द्वे च देहस्थं शिरसोऽन्ततः ॥

---

१. तन्त्रा० वि०, भा० ९, आ० १५, पृ० ९५
२. तन्त्रा०, भा० १०, आ० १६, पृ० ४६-४७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पादादारभ्य सुश्रोणि ! अनाहतपदावधि ।
देहातीतेऽपि विश्रान्त्या संवित्तेः कल्पनावशात् ॥
देहत्वमिति तस्मात् स्यादुत्थानं द्वादशाङ्गुलम् ।
इति निर्णेतुमत्रैतदुक्तमष्टोत्तरं शतम् ॥

( २१ )

[1]उक्तं त्रैशिरसे तन्त्रे सर्वसंपूरणात्मकम् ।
मूलादुदयगत्या तु शिवेन्दुपरिसंप्लुतम् ॥
जन्मान्तमध्यकुहरमूलस्रोतःसमुत्थितम् ।
शिवार्करश्मिभिस्तीव्रैः क्षुब्धं ज्ञानामृतं तु यत् ॥
तेन संतर्पयेत् सम्यक् प्रशान्तकरणेन तु ।

( २२ )

[2]तेन सर्वं हुतं चेष्टं त्रैलोक्यं सचराचरम् ।
ज्ञानिने योगिने वापि यो ददाति करोति वा ॥
दीक्षोत्तरेऽपि च प्रोक्तमन्नं ब्रह्मा रसो हरिः ।
भोक्ता शिव इति ज्ञानी श्वपचानप्यथोद्धरेत् ॥
सर्वतत्त्वमयो भूत्वा यदि भुङ्क्ते स साधकः ।
तेन भोजितमात्रेण सकृत् कोटिस्तु भोजिता ॥
अथ तत्त्वविदेतस्मिन् यदि भुञ्जीत तत् प्रिये ! ।
परिसंख्या न विद्येत तदाह भगवाञ्छिवः ॥
भोज्यं मायात्मकं सर्वं शिवो भोक्ता स चाऽप्यहम् ।
एवं यो वै विजानाति दैशिकस्तत्त्वपारगः ॥
तं दृष्ट्वा देवमायान्तं क्रीडन्त्योषधयो गृहे ।
निवृत्तमद्यैवास्माभिः संसारगहनार्णवात् ॥

१. तन्त्रा०, भा० १०, आ० १७, पृ० १९१
२. तन्त्रा०, भा० ११, आ० २८, पृ० ३१-३३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



यदस्य वक्त्रं सम्प्राप्ता यास्यामः परमं पदम् ।
अन्येऽपानभुजो ह्यूर्ध्वे प्राणोऽपानस्त्वधोमुखः ॥
तस्मिन् भोक्तरि देवेशि ! दातुः कुलशतान्यपि ।
आश्वेव परिमुच्यन्ते नरकाद्यातनार्णवात् ॥....
चतुर्वेदार्थविदुषां ब्राह्मणानां महात्मनाम् ।
आचार्ये भोजिते देवि ! कोटिर्भवति भोजिता ॥

( २३ )

[1]श्रीमत्त्रैशिरसेऽप्युक्तं सूर्येन्दुपुटवर्जिते ॥
जुगुप्साभावभङ्गस्थे सर्वतः स्तम्भवत् स्थिते ।
सर्वव्यापत्तिरहिते प्रमाणप्रत्ययातिगे ।
तस्मिन् बोधान्तरे लीनः कर्मकर्ताऽप्यनञ्जनः ।
प्रधानं घट आकाश आत्मा नष्टे घटेऽपि खम् ॥
न नश्येत्तद्वदेवासावात्मा शिवमयो भवेत् ।
स्वतन्त्रोऽवस्थितो ज्ञानी प्रसरेत् सर्ववस्तुषु ॥
तस्य भावो न चाभावः संस्थानं न च कल्पना ।

( २४ )

[2]षण्मण्डलविनिर्मुक्तं सर्वावरणवर्जितम् ।
ज्ञानज्ञेयमयं कौलं प्रोक्तं त्रैशिरसे मते ॥

( २५ )

[3]सुभगा सत्यशीला च देशिकाज्ञानुवर्तिनी ।
प्रियवादिनी सुस्वरूपा सात्त्विका सङ्गवर्जिता ॥

---

१. तन्त्रा०, भा० ११, आ० २८, पृ० १२७
२. तन्त्रा०, भा० ११, आ० २९, पृ० ६
३. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ६९-७०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



भैरवाचारसम्पन्ना अमृतानां च सस्पृहा।
सदैवाद्वैतनिरता अभ्यासस्था दृढव्रता॥
पुत्रवत् पश्यते सर्वान्न जुगुप्सेत् प्रसन्नधीः।
सदाचारकुलोत्पन्ना अप्रसूता सुकेशिनी॥
मद्यकाममत्तमृद्वङ्गी शुक्राढ्या चारुहासिनी।
सुस्निग्धा च विनीता च सदातिथ्यसुभाविता॥
मन्त्रार्पितस्वरूपा च निर्मला निरहङ्कृतिः।
पारम्पर्यक्रमस्था तु लोकाचारानुवर्तिनी॥
नित्ये नैमित्तिके चैव क्रमपर्वसु वर्तिनी।
कामतन्त्रक्रियानिष्ठा जानाना देवतर्पणम्॥
सन्तुष्टा सर्वभावेषु··· ··· ··· ··· ···· ···।

( २६ )

[1]उक्तं च त्रिशिरस्तन्त्रे विमलासनगोचरः।
अक्षषट्कस्य मध्ये तु रुद्रस्थानं समाविशेत्॥

( २७ )

[2]स्रोतोद्वयस्य निष्ठान्तमूर्ध्वाधश्चक्रबोधनम्॥
विश्रामं च समावेशं सुषीणां मरुतां तथा।
गतभेदं च यन्त्राणां सन्धीनां मर्मणामपि॥
द्वासप्ततिपदे देहे सहस्रारे च नित्यशः।
गत्यागत्यन्तरा वित्ती संघट्टयति यच्छिवः॥
तत्प्रयत्नात् सदा तिष्ठेत् संघट्टे परमे पदे।
उभयोस्तन्निराकारभावसंप्राप्तिलक्षणम्॥
मात्राविभागरहितं सुस्फुटार्थप्रकाशकम्॥

---

१. तन्त्रा०, भा० ११, आ० २९, पृ० ७९
२. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १००-१०१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २८ )

[1]क्षेपमाक्रमणं चैव चिदुद्बोधं च दीपनम् ।
स्थापनं चैव संवित्तिस्तदापत्तिस्तथैव च ॥
कारणक्रमयोगेन शास्त्रेऽस्मिन् सुरसुन्दरि ।
आधाराधेयभावेन मूर्तिः सप्तविधा स्मृता ॥

इत्युपक्रम्य—

क्षेपस्तु कथितो बिन्दुराक्रान्तिर्नाद उच्यते ।
चिदुद्बोधः परावस्था दीपनं शक्तिरुच्यते ॥
स्थापनं व्यापिनी प्रोक्ता संवित्तिः समना स्मृता ।
उन्मना च तदापत्तिरित्येषा मूर्तिरुच्यते ॥

( २९ )

[2]एवं परापरा देवी पदाष्टकविभूषिता ।
अष्टत्रिंशाक्षरा सैषा प्रोद्धृता परमेश्वरी ॥
अर्धाक्षरद्वयं चास्या ज्ञातव्यं तत्त्ववेदिभिः ।

( ३० )

[3]गायत्रीं पञ्चधा कृत्वा शुक्रया तु समन्विताम् ।
हृदयायेति मन्त्रोऽयं सर्वज्ञो हृदयं परम् ॥
वागीशीं केवलां गृह्य नितम्बं तु समालिखेत् ।
निवृत्तिस्थं तु तं कृत्वा तारा तु तदनन्तरम् ॥
द्विधायोज्य ज्ञानशक्त्या युक्ता शूलं समुद्धरेत् ।
दण्डेन रहितं कृत्वा गायत्र्या तु समन्वितम् ॥

---

१. तन्त्रा० वि०, भा० १२, आ० ३०, पृ० १८०

२. तन्त्रा० वि०, भा० १२, आ० ३०, पृ० १८६

३. तन्त्रा० वि०, भा० १२, आ० ३०, पृ० १९८-१९९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



महाकाली पयोयुक्ता मायाशक्त्या तु पूतना ।
नादिनी जिह्वया युक्ता परमा कण्ठसंयुता ॥
पयोन्वितां तु तां कृत्वा अम्बिका पयसा युता ।
शिरश्चिशिरनाथस्य तृप्तियुक्तमुदाहृतम् ॥
ज्ञानशक्तिस्तु कण्ठस्था दहनीं केवलां न्यसेत् ।
द्विधायोज्य समालिख्य नादिनी तदनन्तरम् ॥
मायया तु समायुक्ता मोहिनी अम्बिकायुता ।
शुक्रादेव्या समायुक्ता फेङ्कारी तदनन्तरम् ॥
कपालं चैव तस्यान्ते स्वरार्धेन विवर्जितम् ।
अनादिबोधसंज्ञा तु शिखा प्रोक्ता सुरेश्वरि ! ॥
शिखिनीं केवलां दद्याज्जयन्ती दण्डसंयुता ।
जिह्वायुक्ता तु संयोज्या दृग्युक्ता च जनार्दनी ॥
शिखिनी केवलोद्धार्या त्रिशूलं दण्डसंयुतम् ।
प्रियदर्शन्यतो दण्डः पयसा तु समन्वितः ॥
वायुवेगा तु परमा शिखिनी पयसा युता ।
अम्बिका पयसा युक्ता अभेद्यं कवचं विदुः ॥
चामुण्डा परमा शक्तिरम्बिका च ततोद्धरेत् ।
सावित्र्या सहिताः सर्वा बिन्दुना समलङ्कृताः ॥
नेत्रत्रयं तु देवस्य आख्यातं तव सुव्रते ।
कुसुमा पूतना चैव गुह्यशक्तिसमन्विता ॥
शुक्रया मस्तकोपेता हृदयं केवलं ददेत् ।
गुह्यं मोहनयाभेद्य अम्बिका बिन्दुसंयुता ॥
प्रज्ञाशक्तिसमारूढा फेङ्कारी तु कपालिनीम् ।
भिन्नां तु योजयेच्चाशु अस्त्रं भानुसमप्रभम् ॥
महापाशुपतं ख्यातं सर्वसिद्धिविनाशनम् ।



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३१ )

[1]अघोरा परमाघोरा घोररूपा तथा परा।
घोरवक्त्रा तथा भीमा भीषणा वमनी परा ॥
पिबनी चाष्टमी प्रोक्ता.................. ।



## दामोदरः

[2]पूर्णाविच्छिन्नमात्रान्तर्बहिष्करणभावगाः ।
वामेशाद्याः परिज्ञानाज्ञानात् स्युर्मुक्तिबान्धवाः ॥



## दीक्षोत्तरागमः

( १ )

[3]ब्रह्मानन्तात् प्रधानान्तं विष्णुः पुंसः कलान्तगम् ॥
रुद्रो ग्रन्थौ च मायायामीशः सादाख्यगोचरे ।
अनाश्रितः शिवस्तस्माद् व्याप्ता तद्व्यापकः परः ॥

( २ )

[4]उक्तं दीक्षोत्तरे चैतज्ज्वालासंपातशोभिना ॥
दत्तेन शिवहस्तेन समयी स विधीयते ।
सायुज्यमीश्वरे तत्त्वे जीवतोऽधीतियोग्यता ॥

---

१. तन्त्रा० वि०, भा० १२, आ० ३३, पृ० ३४१
२. प्र० हृ०, पृ० ७०-७१
३. तन्त्रा०, भा० ५, आ० ८, पृ० ७
४. तन्त्रा०, भा० ९, आ० १५, पृ० २३१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

शिवादेवात्मनां मोक्षः ।



## देवलाचार्यः

[२]पुंसि कर्तृत्वमारोप्य बुद्धावपि चिदात्मताम् ।



## देवीपञ्चशतिका ( पञ्चशतिकम् )

( १ )

[३]निष्क्रियानन्दनाथश्च ज्ञानदीप्त्या सहैकतः ।
विद्यानन्दश्च रक्ता च द्वितीयं कथितं तव ॥
शक्त्यानन्दो महानन्दा तृतीयं सिद्धपूजितम् ।
शिवानन्दस्तथा ज्ञेया समया तच्चतुर्थकम् ॥

( २ )

[४]हृदयार्णं नितम्बार्णं दक्षजानुगतं प्रिये ।
सा देवी स शिवस्तच्च विश्वं तस्यान्यविस्तरः ॥
ग्रन्थकोटिसहस्राणामेतत् सारं विचिन्तयेत् ।
प्रभावोऽस्या न शक्येत वक्तुं कल्पशतैरपि ॥



---

१. न० प० टी०, पृ० २५६
२. ई० प्र० वि० वि०, भा० १, पृ० १७०
३. तन्त्रा० वि०, भा० ११ आ० २९, पृ० ३१
४. तन्त्रा० वि०, भा० १२, आ० ३०, पृ० १९७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## देवीमन्त्रकल्पः

[1]आदिनाथ ऋषिच्छन्दो दैवी गायत्रि उच्यते ।
देवता परमानन्दसंविदत्रोपदिश्यते ॥

## देवीयामलम्

( १ )

[2]तन्मध्ये तु परा देवी दक्षिणे च परापरा ।
अपरा वामशृङ्गे तु मध्यशृङ्गोर्ध्वतः शृणु ॥
या सा संकर्षिणी देवी परातीता व्यवस्थिता ।

( २ )

[3]अध्वानं निखिलं देवि ! तत्त्वषट्त्रिंशदुज्ज्वलम् ।
चिन्तयन् सद्य आप्नोति पदं शाश्वतमुत्तमम् ॥

( ३ )

[4]ये मृता जन्तवस्तत्र ते व्रजन्तीह तत्पदम् ।...
एतेष्वपि मृताः सम्यग्घित्वा लोकानशेषतः ।
दीप्यमानास्तु गच्छन्ति स्थानेष्वेतेषु ते प्रिये ॥

( ४ )

[5]अयं पथद्वये कालः स्थूलश्चरति योगिनाम् ।
सव्यापसव्ये मध्ये च शक्तित्रयविभूषितः ॥

---

१. त० व्या० कु०, पृ० १४
२. तन्त्रा० वि० भा० २, आ० ३, पृ० ८२; तन्त्रा० वि०, भा० १२, आ० ३१, पृ० २७१
३. तन्त्रा० वि०, भा० ५, आ० ८, पृ० १२
४. तन्त्रा० वि० भा० ५, आ० ८, पृ० १४९
५. तन्त्रा० वि०, भा० ९, आ० १५, पृ० १६९-१७०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



सा ग्रसेत् त्रिविधं कालं कालसंकर्षिणी तथा।...
कालसंकर्षिणी नाम्ना कालं सुखचिले स्थितम्।
श्वासनिःश्वासकलनी तस्य संकर्षणं हृदि॥
पूरकेण समन्तात्तु कुम्भकेन च धारयेत्।
रेचकेनोत्थिता देवी कालं संग्रसते क्षणात्॥...
इच्छाशक्तिः परा नाम्ना शक्तित्रितयबोधिनी।
याज्या कर्षयते सर्वं कालाधारप्रभञ्जनम्॥

( ५ )

[1]अष्टारं चक्रमालिख्य नाभिनेमिसमन्वितम्।
अरकैश्चान्तरालैश्च त्रिशूलोपरि लाञ्छितम्॥

इत्युपक्रम्य—

........................नाभिस्थं भैरव न्यसेत्।...
अघोराद्यष्टकं पूज्यं ........................।
अराष्टकस्थितास्तास्तु ........................।
सिन्दूरारुणसंकाशा शूलस्था तु परापरा।
अपरा तु परा देवी बाह्यनेमिसमाश्रिता॥...
चक्रभैरवमध्यस्थं भ्रमणमरुणप्रभम्।...
करे ध्यात्वा महाचक्रं ज्वालामालासमाकुलम्।
वामपादं न्यसेत्तत्र शूलदण्डे समन्ततः॥
अरकेषु च सर्वत्र युक्तं दक्षिणजानुना।...
दर्शनात् स्तोभमायाति स्पर्शनान्म्रियते ध्रुवम्।

( ६ )

[2]मूलकन्दनभोनाभिहृत्कण्ठालिकतालुगम्।
अर्धेन्दुरोधिकानादतदन्तव्यापिशक्तिगम्॥

---

१. तन्त्रा० वि०, भा० ९, आ० १५, पृ० २३३-२३४
२. तन्त्रा०, भा० १०, आ० २३, पृ० २७६-७७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



समनोन्मनशुद्धात्मपरचक्रसमाश्रितम् ।
यत्र यत्र जपेच्चक्रे समस्तव्यस्तभेदनात् ॥
तत्र तत्र महामन्त्र इति देव्याख्ययामले ।

( ७ )

[1]आचार्यं संप्रवक्ष्यामि सर्वशास्त्रविशारदम् ।
चतुष्पात्संहिताभिज्ञः कल्पस्कन्धे विशारदः ॥
शास्त्रे कल्पैकदेशे वा आचारचरणक्षमः ।

( ८ )

[2]दश रुद्रा महाभागास्तन्त्रे गुरुवराः स्मृताः ।

इत्युपक्रम्य—

जटामुकुटधारी च लिङ्गार्चनरतः सदा ॥
मद्यमांसरतो नित्यं मन्त्रसेवादृढव्रतः ।
स्वशक्तिं रमयेच्चापि शास्त्राधीती च यत्नतः ॥
उच्छुष्मांशसमुद्भूतो दैशिकः शास्त्रपारगः ।
शबरांशसमुद्भूतस्तत्त्वमार्गावलम्बकः ॥
गुप्ताचारक्रियो नित्यं गुप्तदाराभिमैथुनी ।
क्रोधनोऽतिप्रचण्डश्च मद्यमांसरतः सदा ॥
चण्डांशवंशो गुरुश्चैव दीक्षानुग्रहकृत् सदा ।
क्षमी आमिषलौली च यज्ञे पशुनिपातकः ॥
मतङ्गांशसमुद्भूतो गुरुः शास्त्रार्थवेदकः ।
अभिमानी क्रोधनश्च मैथुनाभिरतः सदा ॥
सुगूढोऽत्यन्तदक्षश्च घोरांशश्च गुरुः स्मृतः ।
जपहोमक्रियासक्तं लिङ्गाद्यभ्यर्चने रतम् ॥

---

१. तन्त्रा० वि०, भा० ११, आ० २८, पृ० १६४
२. तन्त्रा० वि०, भा० ११, आ० २८, पृ० १६७-१६८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



यमांशं गुरवः प्राहुर्दीक्षाकर्मणि निष्ठुरम् ।
धातुवादरसादीनि ओषध्यादिरसायनम् ॥
नित्यं सेवेत् सदा योगी शिष्यानुग्रहतत्परः ।
उग्रांशो गुरुभिः प्रोक्तो योऽसौ हलहलः स्मृतः ॥
क्रोधः सर्वत्र जायेत मानी योगरतः सदा ।
मन्यते तृणवत् सर्वं मत्तुल्यं नास्ति मन्यते ॥
दुराराधो जनैः सर्वैः कष्टसेव्य उपासिभिः ।
शिष्यानुग्रहकृन्नित्यं क्रोधिनोंऽशः प्रकीर्तितः ॥
दीक्षाकर्मणि निष्णातो मद्यमांसाशनः सदा ।
कुले हुलहुले जातो दैशिकः परिकीर्तितः ॥
दशैते गुरवः प्रोक्ताः स्वतत्त्वज्ञानगर्विताः ।
ये तदंशसमुद्भूतास्तत्स्वभावानुचारिणः ॥
तैस्तु येऽनुगृहीतास्तु ते तदाचारवर्तिनः ।

( ९ )

[1]..................पीठाधः पद्ममालिखेत् ।
..................मध्ये वागीशिपूजनम् ।
दक्षिणे गुरवः पद्मे उत्तरे तु गणेश्वरः ।
पीठाधो यद् भवेत् पद्मं कल्पेशं तत्र पूजयेत् ॥...
पादिकश्चात्र सम्बन्ध अन्यः पाटलिकः प्रिये ।
पादार्थः सौत्रवाक्यार्थ एतत् सम्बन्धपञ्चकम् ॥
चतुष्पात् संहिता यावत् तस्यां पादो यथोदितः ।
आदिमध्यावसानैश्च ग्राहयेदर्थसन्ततिम् ॥
परस्पराविभेदेन अविरुद्धा यथा भवेत् ।
एवं पादगतं ज्ञात्वा व्यवार्ण्य कुरुते गुरुः ॥

---

१. तन्त्रा० वि०, भा० ११, आ० २८, पृ० १७०-१७२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



यत् तत् पाटलिकं वस्तु पटलान्ते समर्पयेत् ।
अभिसन्ध्याऽन्यपटलमेतत् पाटलिकं स्मृतम् ॥
यः पदार्थोऽभिगम्येत तत्पादार्थेन निश्चितम् ।
अपरस्परभेदेन व्याख्यानं कुरुते गुरुः ।
एष पादार्थिको नाम्ना अन्यत् सूत्रगतं शृणु ।
सूत्रे सङ्गृहीतं वस्तु सुपरीक्ष्यार्थसन्ततिः ॥
भेदभिन्ना तथाऽत्रैव सूत्रेणान्येन सुन्दरि ! ।
एतत्सूत्रं विचार्येत वाक्येन परिनिष्ठितम् ॥
संस्कृतैः शब्दविषयैर्नदीस्रोतःप्रवाहकैः ।
वातोर्मिवेगभङ्गेन व्याख्यां द्विपगतिं च वा ॥
मण्डूकप्लुतिरेवात्र अथ सिंहावलोकितम् ।
ज्ञात्वा न्यायं तु शिष्यं हि तादृशेन प्रबोधयेत् ॥
स्वरूपेणार्थविषयं पादभेदेन वाऽथवा ।
देशिकः कुरुते व्याख्यां यादृशं तेन पृच्छितम् ॥
तादृशं तस्य वक्तव्यं स्वाम्नायस्थितिपालनात् ।

( १० )

[1]नाशार्णं च नितम्बं च प्राणं शूलार्धयोजितम् ।
नितम्बं प्राणमुद्धृत्य क्षीरवर्णेन संयुतम् ॥
त्रिलोचनं कर्णवर्णं बाहुदक्षिणयोजितम् ।
बाहुस्कन्धं तु तद्वामं दक्षजङ्घानियोजितम् ॥
दन्तार्णं तृतीयोद्धृत्य दक्षजानुसुसंस्थितम् ।
गुह्यकण्ठे निवेश्येत शूलदण्डं तु जिह्वयोः ॥
शिरोमालार्णद्वितीयं हस्तयोर्योजितं पुनः ।
नेत्रं तथैव परत उत्तमाङ्गं तथैव च ॥
वामपादं कपालस्थं पञ्चधा योजयेत् ततः ।

१, तन्त्रा० वि०, भा० ११, आ० २९, पृ० ४९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



त्रिदशैरपि सम्पूज्या विद्या सप्तदशाक्षरा ॥
कालसङ्कर्षिणी नाम्ना........................ ।

( ११ )

[1]पञ्चधा हृदयं चास्य आदिवर्णं तु यत् स्मृतम् ।
वागर्णं च नितम्बं च शिरोमालाद्यसंस्थितम् ॥
ऊरुं दक्षिणजानुस्थं द्विधा कृत्वा समन्ततः ।
परतस्तूद्धरेद् वर्णं शूलमोकारदीपितम् ॥
नितम्बं क्षीरयुक्तं तु शिरोमालातृतीयकम् ।
नि स्वाहा शिर आख्यातं प्रणवादिविभूषितम् ॥
प्रणवं कण्ठवर्णं च रक्षजानुनियोजितम् ।
द्विधा कृत्वा ततः पश्चात् सव्यपादं च मध्यतः ॥
सव्यपादं ततोद्धृत्य जिह्वार्णेन शिखा युता ।
अपरान्त्यद्वयं योज्य शिखा वज्रिण उद्धरेत् ॥
कण्ठार्णं च त्रिशूलं च नेत्रे परत उद्धरेत् ।
क्षीरार्णे शूलदण्डं य स्वाहान्ते कवचोऽग्रतः ॥
प्रणवं शूलवर्णं तु कर्णपूरेण भूषितम् ।
दक्षिणेन नितम्बाढ्यमात्मा योज्यो विसर्गवान् ॥
नेत्रं देव्या भवेदेतन्मृत्युञ्जयकरं परम् ।
श्लीं पशु प्रणवाद्यं च प्राणं परत एव च ॥
युक्तं च सर्वतः कुर्याद् वामश्रवणभूषणे ।
शिखान्ताद् योजयेद् वर्णमस्त्रं परमदारुणम् ॥

( १२ )

[2]तस्य मध्ये महाशृङ्गं शतयोजनविस्तृतम् ।

इत्युपक्रम्य—

तत्रासावमरैः सार्धं शूली वसति सर्वदा ।

---

१. तन्त्रा० वि०, भा० १२, आ० ३०, पृ० २००

२. स्व० उ०, भा० ५, प० १०, पृ० ८५



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १३ )

[1]प्रभासाद्या तु तीर्थानां कोटिरेका वरानने ।
पञ्चाष्टकं तु तत्रैव लोकानुग्राहकं सदा ॥

## देवीसंस्थानागमः

( १ )

[2]आत्मा त्वादित्यहंसोऽयं पक्षौ चास्य सितासितौ ।
तदन्तर्वर्तते राहुस्तत्र सन्ध्ये गमागमे ॥
कृष्णे संक्रमते नाडी शुक्ले निष्कलवाहिनी ।
एतत्पक्षद्वयं वाहे प्राणाचार्यस्तु चन्द्रमाः ॥

## देव्यामतसूत्रम्

( १ )

[3]ज्ञानं द्विविधमाख्यातं परं चैवापरं स्मृतम् ।
परं चैवावबोधाख्यमपरं शास्त्रमुत्तमम् ॥

( २ )

[4]अशरीरं यदात्मानं पश्यति ज्ञानचक्षुषा ।
तदा भवति शान्तात्मा सर्वतो विगतस्पृहः ॥

---

१. स्व० उ०, भा० ५, प० १०, पृ० १०४
२. ज्ञा० वि०, प० ८ क
३. श० र० सं०, पृ० ६
४. श० र० सं०, पृ० ७९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# धर्मशिवः

( १ )

[१]एतेषां लक्षणं वच्मो गुरुपारम्परागतम् ।

इत्युपक्रम्य इत्थं व्याख्याताः—

श्रवणाङ्गुलिसंयोगाद्यः शब्दः संप्रवर्तते ।
दीप्तवह्निस्वनाभासः स शब्दो घोष उच्यते ॥
तदन्तेऽनुभवो यस्य ईषन्मर्मविसर्पिणः ।
भिन्नकांस्यनिभो रूक्षः स रावः स्यात्तदन्तगः ॥
ततो वंशध्वनिप्रख्यो निवाते सौम्यवर्षवत् ।
स नादः स्वन इत्युक्तस्तत्परः कथितो ह्यसौ ॥
चतुर्थः स तु वै शब्दः सर्वशब्दभवारणिः ।
आत्मानं रावयन् नादः खे यथा भ्रमरीरवः ॥
वाक्यस्य स्फुटतां धत्ते वर्णभेदावभासकः ।
स्फोट इत्युदितो नादः पञ्चमः शास्त्रभिस्ततः ॥
ततोऽतितानधर्मित्वान्नादः श्रोत्रसुखावहः ।
विपञ्च्याः पञ्चमीं तन्त्रीं हत्वा तीव्रप्रयत्नतः ॥
यथा व्यज्यत आकाशे स षष्ठो ध्वनिसंज्ञितः ।
सर्वतन्त्रीसमाघाताद् वीणायामिव साधु यः ॥
मृदुस्तब्धं निनदति झाङ्कारः सप्तमस्त्वसौ ।
घण्टानिनादानुकृतिः कदाचिद् व्यज्यतेऽन्यथा ॥
तुङ्गमेघध्वनिनिभः सोऽष्टमो ध्वङ्कृतः स्मृतः ।



१. स्व० उ०, भा० ६, प० ११, पृ० ८-९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# नन्दिशिखातन्त्रम्

( १ )

[1]कोटियोजनतः स्थौल्यं ब्रह्माण्डस्य कटाहके।
तथैवोर्ध्वं स्थितं ज्ञेयमन्तरं कथ्यते प्रिये॥
अष्टानवतिकोटीभिर्ब्रह्माण्डं समुदाहृतम्।....
कटाहाधःस्थितं देवि! हूहुकं भुवनेश्वरम्।
शक्त्याधारं तु जानीयादनन्तं वरवर्णिनि॥

( २ )

[2]अष्टौ भुवनपाला ये क्रोधेशश्चण्डसंज्ञकः।
संवर्तः पिङ्गलो ज्योतिस्तथा पञ्चान्तको विभुः॥
एकवीरः शिखोदश्च गुणानां परतः स्थिताः।

( ३ )

[3]अत्राधिकारवानेवमीश्वरः शिवचोदितः।
तज्जपध्याननिष्ठा ये ते व्रजन्त्यैश्वरं पदम्॥

( ४ )

[4]तेजेश्वरो ध्रुवेशश्च शक्त्यावरणसंस्थितौ।...
ब्रह्मा रुद्रः प्रमाणाख्यः प्रतोदोऽनन्तसंज्ञकः।
प्रमाणावरणे ह्येते चत्वारः परिकीर्तिताः॥

( ५ )

[5]कथितं त्वैश्वरं तत्त्वमत ऊर्ध्वं सदाशिवः।

---

१. तन्त्रा० वि०, भा० ५, आ० ८ पृ० १५
२. तन्त्रा० वि०, भा० ५ आ० ८. पृ० १८६
३ तन्त्रा० वि०, भा० ५, आ० ८, पृ० २३७
४. तन्त्रा० वि०, भा० ५, आ० ८, पृ० २४१
५. तन्त्रा० वि०, भा० ५, आ० ८, पृ० २४३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ६ )

[१]तत ऊर्ध्वं शक्तितत्त्वं कथ्यमानं निबोध मे ।
प्रसुप्तभुजगाकारा ऊर्णातन्तुसमप्रभा ॥
आधारः सर्वतत्त्वानां भुवनानां च सुव्रते ।

( ७ )

[२]सर्वत्र समता ह्यत्र व्रते देवि ! विधीयते ।
न कषायैर्व्रती भिक्षुर्न मौनी संयतो भवेत् ॥
यावन्न परमेशानो विज्ञातः सर्वगः शिवः ।
तस्मादन्तर्मुखो नित्यं साधनातत्परो व्रती ॥
सर्वभूतान्तरस्थायी यस्मादेकः शिवः प्रिये ! ।
तस्मात् समत्वं मूलं तु व्रतानां परमं व्रतम् ॥
येऽन्ये केचिद् व्रता भद्रे ! तेऽङ्गभावं व्रजन्त्यतः ।
अङ्ग्यसौ कथितो देवि ! व्रतानां परमो व्रतः ॥

( ८ )

[३]उपायो देवदेवेशि ! विवेकस्तत्र वै परः ।
हेयतां चैव संसारे ज्ञात्वा जन्तुर्विमोचयेत् ।
अनित्येऽस्मिञ्छिवो ह्येकः शिवः सर्वगतः प्रभुः ॥
मायीयान्युज्झ्य भावानि यदा भावेन भावयेत् ॥
ददात्यस्य च सुश्रोणि ! प्रातिभं ज्ञानमुत्तमम् ।
यदा प्रातिभसंयुक्तो मुच्यते मोचयेत्तदा ॥
परशक्तिनिपातेन ध्वस्तमायामलः पुमान् ।
परं याति पदं यत्र गत्वा भूयो न जायते ॥...

---

१. तन्त्रा० वि०, भा० ५, आ० ८, पृ० २५६
२. तन्त्रा० वि०, भा० ७, आ० १२, पृ० ९९
३. तन्त्रा० वि०, भा० ८, आ० १३, पृ० १०६-१२४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



दीक्षयोन्मोच्य देवेशि ! अध्वबन्धात् सुदारुणात् ।
सर्वज्ञादिगुणांश्चैव शिशोरापादयेद् गुरुः ॥
दीक्षया पूर्वमेवोक्तः पुद्गलस्य भवार्णवात् ।
मोक्षोऽधुना वदस्येवं प्रातिभस्येव तत् कथम् ॥
प्रमाणमत्र देवेश ! प्रातिभं वाथ दीक्षणम् ।
एतन्मे वद कामारे ! स्फुटार्थेन महेश्वर ! ॥
तत्त्वं त्रिविधमाख्यातं नरशक्तिशिवात्मकम् ।
शिवात्मकं सर्वगतं निष्प्रपञ्चमलेपकम् ॥
तद्धर्मधर्मिणी शक्तिस्त्वयाख्याता महेश्वर ।
वध्यबन्धनभावेन नरतत्त्वमुदाहृतम् ॥
कर्तृत्वे करणत्वे च शक्तितत्त्वं त्वयोदितम् ।
तच्च गुर्वागमात् साध्यमणुभिश्चोदितं स्फुटम् ॥
विवेकात् तत्कथं लभ्यं भूय एवोच्यते त्वया ।
प्रातिभस्य तु ज्ञानस्य गुर्वाम्नायागतस्य च ॥
द्वैधं किमेतदुद्दिष्टं मोहनाय ममाधुना ।
उत्तरोत्तरमस्मात्तु स्फुटमाख्याहि शङ्कर ! ॥
येन निःसंशया सिद्धिर्मुक्तिरन्ते भवत्यणोः ।
कथं विवेकः किं वास्य देवदेव ! विविच्यते ॥
तदागमवशात् साध्यं गुरुवक्त्रान्महाधिपे ।
शिवशक्तिकरावेशाद् गुरुः शिष्यप्रबोधकः ॥
अधरोत्तरगैर्वाक्यैः प्रभुशक्त्युपबृंहितः ।
तच्छक्त्या सुप्रबुद्धस्य ध्वस्तमायामलस्य च ॥
दीक्षासिच्छिन्नपाशस्य भावनाभावितस्य च ।
विकासं तत्त्वमायाति यत्तज्ज्ञानमिदं प्रिये ! ॥
प्रातिभं तत्समाख्यातं तत्त्वज्ञानस्य भावनात् ।
यथाग्निर्भस्मना च्छन्नस्तदपास्येन्धनेधितः ।
समीरणबलाविष्टो भूरितेजा वरानने ! ॥

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



प्रभविष्णुः प्रकाशार्चिरेवमेतद् भवेत् स्फुटम् ।···
यथोप्तं कालतो बीजं तत्सुसिक्तमथ क्रमात् ।
अङ्कुरैः पल्लवैराढ्यं तत्पुष्पादिफलान्वितम् ॥
व्यापकं विटपं तद्वद् गुरुतः प्रातिभं प्रिये ! ।···
विवेकोऽतीन्द्रिये भावे यदायाति विवेचनम् ।
पशुपाशपतिज्ञानं स्वयमेति विचारताम् ॥
प्रातिभे तु समायाते ज्ञानमन्यत्तु सेन्द्रियम् ।
वागक्षिश्रुतिगम्यं तु अन्यापेक्षं वरानने ! ॥
तत् यजेद् बुद्धिमास्थाय प्रदीपं तु यथा दिवा ।···
प्रादुर्भूतविवेकस्य लक्षणं यत् प्रवर्तते ।
तथा ते कथयिष्यामि येन येनेन्द्रियेण तु ॥
साध्यं यत् तस्य तस्यैवं पाटवं जायते भृशम् ।
दूराच्छ्रवणविज्ञानं मननं चावलोकनम् ॥···
क्रीडाकर्माण्यथोक्तानि सर्वतन्त्रोदितानि तु ॥
क्षणेनाऽनुभवेत् तानि शक्तिज्ञानोपबृंहितः ॥
षट्चक्रं षोडशाधारं कुलं जानाति सुव्रते ! ।
मन्त्रवेधादि कुरुते स्वस्थावेशादिकानि तु ॥
क्षणादन्यानि विशते पुराणि नगनन्दिनि ! ॥···
सर्वभावविवेकेन सर्वभावपराङ्मुखः ।
विवेकी सुविरक्तात्मा शिवभावैकतत्परः ॥
प्राकाम्यमेतत् सुश्रोणि ! प्रातिभस्य विधीयते !···
यथादर्शगतां छायां पश्यति स्वां तथा प्रिये ! ।
बहिरन्तःस्थितं देवं शिवं सर्वगतं विभुम् ॥···
स्वप्नेन्द्रजालवत् सर्वं सिद्धियोगं विभावयेत् ।
दृष्ट्वैवं लक्षणं भद्रे ! प्रातिभस्य तु साधकः ॥
हेयोपादेयतत्त्वज्ञस्तदा ध्यायेच्छिवं विभुम् ।···

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



यदा देवि! महान् स्थूलो गुणत्रयसमन्वितः।
भूतेन्द्रियादियोगेन बध्यते चाऽप्यणुस्तदा॥
संसारे संसरेत् तेन बद्धोऽणुर्वरवर्णिनि!।
स एव प्रतिभायुक्तः शक्तितत्त्वं निगद्यते॥
तत्पातावेशतो जन्तुर्मुच्यते तु भवार्णवात्।
हित्वा कारणषट्कं तु शिवतत्त्वे लयं व्रजेत्॥
इति ते सर्वमाख्यातं यथाभेदद्वयं प्रिये!।...
सेन्द्रियं चैव गुरुतो ज्ञानमुक्तमतीन्द्रियम्।
विवेकजन्म नो बुद्धया विना देव! प्रवर्तते॥
निरिन्द्रियत्वं तु कथं प्रोच्यते तस्य शङ्कर!।
एतच्छशविषाणेन प्रतिभाति समं मम॥...
इन्द्रियत्वं मनोबुद्धयोर्वासनातः सुरेश्वरि!।
जडत्वात् तेषु तद्भावादिन्द्रियत्वं तु बन्धकम्॥
विवेकयुक्त्या तच्छेदः शिवतत्त्वप्रकाशकः।
संस्कारः सर्वभावानां परता परिकीर्तिता॥...
परभावात् तु तत् सूक्ष्मं शक्तितत्त्वं निगद्यते॥...
बुद्धितत्त्वं महादेवि! प्रधानाशयगोचरम्।
तमो रजस्तथा सत्त्वमुत्तमाधममध्यमम्॥
अणिमादिविभेदेन भोगजालसमावृतम्।...
प्रातिभेन महेशान मुच्यते यदि पुद्गलः।
तत् किमर्थं शिशोर्दीक्षा क्रियते तु शिवाध्वरे॥

( ९ )

[1]उक्तं नन्दिशिखातन्त्रे प्राच्यषट्के महेशिना।
अभिलाषः शिवे देवे पशूनां भवते तदा॥....

---

१. तन्त्रा० वि०, भा० ८, आ० १२, पृ० १५५-५६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



यदा शैवाभिमानेन युक्ता वै परमाणवः ।
तदैव ते विमुक्तास्तु दीक्षिता गुरुणा यतः ॥
प्राप्तिमात्राच्च ते सिद्धसाध्या इति हि गम्यते ।....
समाश्राय यदा शक्त्या गुरुमूर्तिं तदा विभुः ।
आविश्य दीक्षयाणूनां स्वशक्त्या शक्तिमान् पतिः ॥
कृन्तते बन्धजालं तु कृत्यन्ते बन्धसञ्चयाः ।
तेन बन्धनिकृन्ती सा कथिता तु शिवाध्वरे ॥

( १० )

[1]वामं गुह्यं समाख्यातममृतं खेचरीप्रियम् ।
रहस्यं सर्वभूतानां वामशब्देन कीर्त्यते ॥

( ११ )

[2]श्रीमन्नन्दिशिखायां च श्रीमदानन्दशासने ।
तदुक्तं स्रुक् च पूर्णायां स्रुवश्चाज्याहुतौ भवेत् ॥
शेषं वामकरेणैव पूजाहोमजपादिकम् ॥...
पूर्णाहुतिप्रयोगं तु कथयाम्यधुना तव ।
ऋजुकाय ऋजुग्रीवः समपादो व्यवस्थितः ॥
नाभिस्थाने स्रुचो मूलमुत्तानाग्रमुखं समम् ।
स्रुच्युपरि स्रुवं देवि ! कृत्वा चैवमधोमुखम् ॥
पुष्पं दत्त्वा स्रुगग्रे तु दर्भेण सहितौ करौ ।
मुष्टिना चैव हस्ताभ्यां गृहीत्वा यत्नतोऽपि च ॥
अग्रतो दक्षिणं हस्तं वामं वै पृष्ठतः प्रिये ।
मुष्टिभ्यां संगृहीत्वा वै उत्तानकरयोगतः ॥

( १२ )

[3]... .... ... ... ...सर्वसाम्यं परं व्रतम् ।

---

१. तन्त्रा० वि०, भा० ९, आ० १५, पृ० १३८
२. तन्त्रा० वि०, भा० ९, आ० १५, पृ० १४०-१४१
३. तन्त्र० अभि०, पृ० २७



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १३ )

[1]एकवक्त्रो महाभीमः.... ... ... .... ...।
... ... ... ... ...स्निग्धविद्रुमसंनिभः ॥
पाशाङ्कुशाकारशिराः साध्यस्याकर्षणः परः ।

( १४ )

[2]यदा शिवेऽभिलाषो वै जायते च नृणां सदा ।
तदा शिवाभिमानास्ते जायन्ते परमाणवः ॥
मुक्तास्तदैव ते दीक्षां प्राप्नुवन्ति गुरोस्ततः ।

## नयसंगतिः

[3]नास्ति नादात् परो मन्त्रो न देवः स्वात्मनः परः ।
नानुसन्धेः परा पूजा नहि तृप्तेः परं फलम् ॥

## नरेश्वरविवेकः

( १ )

[4]न प्रथेताप्रथारूपं नाश्वेतं श्वेतते यथा ।

( २ )

[5]सर्वे चैते प्रमातारः प्रकाशत्वाच्छिवात्मकाः ।
सर्वज्ञाः सर्वकर्तारः सर्वतश्चाविभेदिनः ॥

---

१. ने० उ०, भा० २, पृ० २४७
२. सा० प० टी०, पृ० ४२
३. म० म० प०, पृ० ११७
४. म० म० प०, पृ० ३६
५. म० म० प०, पृ० ५४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]अणवश्चिदचिद्रूपाश्रित्वादेको महेश्वरः ।
तेन केचिदचित्वात्तु कथमाक्षेपभूमयः ॥

( ४ )

[2]नहि यथा गोत्वं शाबलेयादिविशेषरूपमेव, तथा नीलपीतादिविशेषमयमेव तत् ।

( ५ )

[3]परेषामपि केशादौ भ्रान्ता संविद् बहिर्मुखा ।

( ६ )

[4]नीलादिकोपरागेण न प्रथैव विशिष्यते ।
अविशिष्टप्रथारूपोपगमात् सर्ववादिनाम् ॥

( ७ )

[5]स्वयं प्रासादो न श्वेतो नाप्यश्वेतः······ ।

( ८ )

[6]···न चानुपपन्नं मायाशक्त्यापि शक्यते कर्तुम् ।

( ९ )

[7]निर्मित्सायां च निर्मेयमेष्टव्यमपृथक्प्रथम् ।
अन्यथेदन्तया भानाद् भवेन्निर्मितिरेव सा ॥

---

१. ई० प्र० वि० वि०, भा० १, पृ० ९०-९१; भा० ३, पृ० २६०
२. ई० प्र० वि० वि०, भा० १, पृ० १४१
३. ई० प्र० वि० वि०, भा० १, पृ० २४९
४. ई० प्र० वि० वि०, भा० १, पृ० २६५
५. ई० प्र० वि० वि०, भा० १, पृ० २७४; भा० २, पृ० ३५
६. ई० प्र० वि० वि०, भा० २, पृ० ५३
७. ई० प्र० वि० वि०, भा० २, पृ० १६७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तस्या अपि च निर्मित्सा अगुपेया तथापि च ।
एषा वार्ताऽनवस्थैवं ततश्च प्रकृते क्षतिः ॥

( १० )

[1]तेन मायाभिधा शक्तिः सहैव कुरुते द्वयम् ।
वेद्यान् सदसतः सर्वान् कांश्चिद्वेद्यांश्च वेदकान् ॥

( ११ )

[2]वेद्यीकरणमर्थानां मलो मायाख्य उच्यते ।
मलं ... ... ... .... ... ... ... ... ... ॥

( १२ )

[3]... ... ... ... सा च दशा रुद्राधिदेवता ।
निषेधरूपाप्यैशाने पदेऽहं सर्वमित्यपि ॥

## नवनित्याविधानम्

[4]अङ्गुष्ठानामिकाभ्यां तु तर्पयेत् परमेश्वरीः ।

## (भट्ट) नायकस्तोत्रम्

( १ )

[5]नपुंसकमिदं नाथ ! परं ब्रह्म फलेत् कियत् ।
तत्पौरुषनियोक्त्री चेन्न स्यात् त्वच्छक्तिसुन्दरी[6] ॥

---

१. ई० प्र० वि० वि०, भा० २, पृ० ३२३; भा० ३, पृ० २४५
२ ई० प्र० वि० वि०, भा० ३, पृ० २८२
३. ई० प्र० वि० वि०, भा० ३, पृ० ३६६
४. तन्त्रा० वि०, भा० ९, आ० १५, पृ० १३९
५. स्तव० क्षेम०, पृ० ८४; स्पन्द०, क्षेम०, पृ० १८
६. त्वद्भुक्ति–स्पन्द० क्षेम० ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]महान्ति पातकान्याहुर्यदाज्ञावशतः सुराः ।
पावनानि नमस्तस्मै स्वच्छन्दाय हराय ते ॥



## नित्यातन्त्रविदः

[2]नित्यातन्त्रविदः कृष्णं कार्तिकाच्चरमं दिनम् ॥
कुलस्य नित्याचक्रस्य पूर्णत्वं यत्र तन्मतम् ।

यदुक्तम्—

दीपकर्मणि कर्तव्यं विधानमिदमुत्तमम् ।
कुलं शक्तिः समाख्याता सा च नित्या प्रकीर्तिता ॥

इत्याद्युपक्रम्य—

पूर्णत्वमेव भवति तत्र तस्या महेश्वरि ! ।...
मध्यमेवात्र(?) सदा देवि सर्वारिष्टनिवृत्तये ।
अनेन तु विधानेन नित्याचक्रं प्रपूजयेत् ॥



## निर्मर्यादशास्त्रम्

( १ )

[3]श्रीनिर्मर्यादशास्त्रेऽपि तदित्थं सुनिरूपितम् ।
धरादेश्च विशेषोऽस्ति वीरसाधकसंमतः ॥

---

१. ई० प्र० वि० वि०, भा० ३, पृ० ९६
२. तन्त्रा० वि०, भा० ११, आ० २८, पृ० ५१
३. तन्त्रा०, भा० ९, आ० १५, पृ० ३६-३७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



रणरेणुर्वीरजलं वीरभस्म महामरुत् ।
श्मशानारण्यगगनं चन्द्रार्कौ तदुपाहितौ ॥
आत्मा निर्धूतनिःशेषविकल्पातङ्कसुस्थितः ।
स्नानार्चादावित्युपास्यं वीराणां विग्रहाष्टकम् ॥

( २ )

[1]देवः सर्वगतो देव ! निर्मर्यादः कथं शिवः ।
आवाह्यते क्षम्यते वेत्येवं पृष्टोऽब्रवीद् विभुः ॥
वासनाऽऽवाह्यते देवि ! वासना च विसृज्यते ।
परमार्थेन देवस्य नावाहनविसर्जने ॥

## निर्वाणयोगोत्तरम्

[2]हिमवति गङ्गाद्वारे वाराणस्यां कुरौ प्रयागे वा ।
वेश्मनि चण्डालादेः शिवतत्त्वविदां समं मरणम् ॥

## निशाचारः ( निशाटनम् )

( १ )

[3]वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित् ।
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः ॥

( २ )

[4]बौद्धाज्ञाननिवृत्तौ तु विकल्पोन्मूलनाद् ध्रुवम् ।
तदैव मोक्ष इत्युक्तं धात्रा श्रीमन्निशाटने ॥

---

१. तन्त्रा०, भा० १०, आ० २६, पृ० ३४४
२. पर० योग०, पृ० १६०
३. तन्त्रा० वि०, भा० १, आ० १, पृ० ४९; परा० अभि०, पृ० ९२
४. तन्त्रा०, भा० १, आ० १, पृ० ८८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]तेजसास्य शिवस्यैव व्याप्तं सर्वं चराचरम् ।
पश्यन्ति मुनयः सिद्धा वीरसंज्ञाश्च देवताः ॥
विकल्पोज्झितचित्तास्तु पश्यन्ति भुवि मानवाः ।
[2]विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत् ॥
विकल्पक्षीणचित्तस्तु आत्मानं शिवमव्ययम् ।
पश्यते भावशुद्ध्या यो जीवन्मुक्तो न संशयः ॥

( ४ )

[3]तस्येच्छा या स्मृता शक्तिः पीठत्वं समुपागता ।
पीठमाधारभूतं स्यात् तत्रस्थं सचराचरम् ॥
तेन पीठाभिधानं तु शक्तेर्नैमित्तिकं स्मृतम् ।...
ततः पीठद्वयं जातं बिन्दुनादमयं प्रिये ।
वामे बिन्दुर्विनिर्दिष्टो दक्षिणे नाद उच्यते ॥
अग्रपीठं तु पूर्वोक्तं शाक्तं तु परमेश्वरि ।
एवं पीठत्रयं जातं कामरूपादि यत् स्मृतम् ॥
अग्रं तत्कामरूपं स्याद् दक्षे पूर्णगिरिः स्मृतः ।
उड्डियानाभिधानं तु उत्तरे तु तृतीयकम् ॥
शक्तेः शाक्तं महापीठं कौण्डलीपद्मध्यगम् ।
बिन्दोस्तु बैन्दवं पीठं चतुष्कलमगोलकम् ॥
नादजं व्याप्त्यधो ज्ञेयं द्विरन्ध्रस्योर्ध्वगं प्रिये ।
उपपीठत्रयं ह्येतद् वाह्यतः शृणु नामतः ॥
देवीकोट्टं स्मृतं शाक्तं बिन्दुश्चोज्जयिनी स्मृता ।
कौलो गिरिः स्मृतो मध्ये व्यापिन्यां व्याप्त्यधोगतिः ।...

---

१. तन्त्रा० वि०, भा० ८, आ० १४, पृ० २३८
२. तन्त्रा० वि०, भा० १, आ० १, पृ० ८९
३. तन्त्रा० वि०, भा० ९, आ० १५, पृ० ४७-५०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



पुनः संदोहसंज्ञास्तु त्रयस्त्वेते वरानने ! ।
ललनागर्तकं शाक्तं बैन्दवं पुटमध्यतः ॥
नादजं व्याप्तिमध्यस्थं त्रयस्त्वेते समासतः ।
पुण्ड्रवर्धनसंज्ञस्तु ललनायामुदाहृतः ॥
वारेन्द्रं बैन्दवं ज्ञेयमेकाम्रं व्याप्तिसंज्ञितम् ।...
क्षेत्राष्टकं तु पत्राणि हृत्पद्मस्य वरानने ! ।
उपक्षेत्रा दलाग्राणि संदोहा दलसन्धयः ।
चतुर्विंशतिरेवं स्यात्... ... .... ... ... ...॥
खेटकं च कुरुक्षेत्रं संदोहा वीरनायकाः ।
द्विपथं वामदक्षाभ्यां नाड्योर्वाहः परो मतः ।
त्रिपथं परया प्रोक्तं तदेव तु विशिष्यते ॥
यत्तत्पूर्वं समाख्यातं व्याप्त्यधः पिण्डमुत्तमम् ।
चतुष्पथं तु तत्रैकं द्वितीयं तालुमध्यतः ॥
तृतीयं चूलिकाग्रे तु त्रिकं तत्तु विजानत ।
भ्रूमध्ये तु परं प्रोक्तं चतुष्पथमतः परम् ॥...

( ५ )

[1]कथितं पूर्वमेवं यन्मया तुभ्यं वरानने ।
सिद्धिसाधनकं ह्येतद्विधानं सिद्धिकाङ्क्षिणाम् ॥
मोक्षार्थी सर्वमेतत्तु सर्पकञ्चुकवत् त्यजेत् ।
युक्तस्तेनैव कालेन यदा श्रोत्रपथं गतम् ॥
गुरोर्वक्त्राद् विनिर्यातं ज्ञानं परमदुर्लभम् ।
सकृज्ज्ञात्वा स्वसंवित्तिं किमन्यत्तु जिगीषति ॥

( ६ )

[2]गोदोहमिषुपातं वा नयनोन्मीलनात्मकम् ।
सकृद्युक्तः परे तत्त्वे स मुक्तो मोचयेत् परान् ॥

---

१. तन्त्रा० वि०, भा० ९ आ० १५, पृ० ५५
२. पर० योग०, पृ० १६३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



यस्मात् पूर्वं परे न्यस्तो येनात्मा ब्रह्मणि क्षणम् ।
स्मरणं तु कथं तस्य प्राणान्ते समुपस्थिते ॥



# निःश्वासकारिका

( १ )

[1]शिवार्कशक्तिदीधित्या समर्थीकृतचिद्दृशा ।
शिवं शक्त्यादिभिः सार्धं पश्यत्यात्मा गतावृतिः ॥

( २ )

[2]उल्काहस्तो यथा कश्चिद् द्रव्यमालोक्य तां त्यजेत् ।
ज्ञानेन ज्ञेयमालोक्य पश्चाज्ज्ञानं परित्यजेत् ॥

( ३ )

[3]अनाख्ये तु निरालम्बे अग्राह्ये मानवर्जिते ।
निस्तत्त्वे योजितो मुक्त इति शास्त्रस्य निश्चयः ॥

( ४ )

[4]इन्द्रियार्थे यथा चित्तं नित्यं गच्छति देहिनाम् ।
तथा चैवेन्द्रियातीते तस्य नैराकृते पदे ॥...
क्षीरक्षयाद् यथा वत्सः स्तनान्मातुर्निवर्तते ।
रागक्षयात् तथा पुंसां मनः शीघ्रं निवर्तते ॥

---

१. श० र० सं०, पृ० ८२
२. श० र० सं०, पृ० ८३
३. श० र० सं०, पृ० ८५
४. श० र० सं०, पृ० ८७



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ५ )

[1]कायानुबन्धचलने नासौ चलति निश्चलः ।
यस्य ज्ञेयमिदं सर्वं मनस्तस्य सुनिश्चलम् ॥
एवं यो निर्जितो धीरैः स त्वा किं करिष्यति ।...
गोदोहमिषुपातं वा नयनोन्मीलनमात्रकम् ।
सकृत् परपदे युक्तो न पुनर्भवमाप्नुयात् ॥
पशुभावाद् यदातीत्य पतिभावेन तिष्ठति ।
तत् तस्य गमनं नाम सर्वगे गमनं कुतः ॥

## निःश्वासोत्तरम्

[2]वारिणा तु सकृत् स्नात्वा त्रिसन्ध्यं भस्मना पुनः ।
स्नायात् यथातुरो नित्यं ... ... ... ... ॥

## निष्क्रियानन्दनाथः

[3]करास्त्रयोदशाकाराः सर्वाक्षक्षोभवृत्तयः ।
अङ्कं तु निर्निकेतायाः संविदो देहविस्तरः ॥
एतत्कराङ्कमाख्यातं तस्य ग्रासादनावृतम् ।
निष्करङ्कं समुद्दिष्टं निरालम्बं परं वरम् ॥

---

१. श० र० सं०, पृ० ८८
२. मृ० वृ० क्रि०, पृ० १४
३. वि० भै० वि०, पृ० ६७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



## पञ्चामृतम्

[1]तर्जनी शत्रुविजये मध्यमा तर्पणे स्मृता ।
अनामा शोषणे योज्या कनीया हीनकर्मसु ॥
तस्मात् सर्वप्रयत्नेन मध्यमाङ्गुष्ठयोगतः ।
तर्पयेद् देवदेवेशं मातृचक्रं विशेषतः ॥
सर्वकर्मसु सामर्थ्यान्मध्यमा तु प्रशस्यते ।

तथा—

अङ्गुष्ठो भैरवः साक्षाच्चामुण्डा मध्यमा भवेत् ।
उभयोः संगमो ह्येष सर्वसिद्धिकरः परः ॥



## पञ्चार्थप्रमाणम्

[2]घोरेति पाशजालाख्यं पापयुक्तं भयानकम् ।
तद् येषां तु न विद्येत ह्यघोराः परिकीर्तिताः ॥
वामेश्वरादयो रुद्रा जालमूलोपरि स्थिताः ।
ते ह्यघोराः समाख्याताः शृणु घोरान् समासतः ॥
प्रोक्ता गोपतिपूर्वा ये रुद्रास्तु गहनान्तगाः ।
ते तु घोराः समाख्याता नानाभुवनवासिनः ॥
विद्येश्वरा ह्यनन्तान्ता महामाहेश्वराश्च ये ।
घोरघोरतरास्त्वन्ये विज्ञेयास्त्वध आश्रिताः ॥
एते अघोरा घोराश्च घोरघोरतरास्तथा ।
एतेष्ववस्थिता नित्यं शक्तयः पारमेश्वराः ॥
स्थितिप्रलयसर्गेषु बन्धमोक्षक्रियासु च ।
सर्वार्थप्रेरकत्वेन रूपेष्वेतेषु शक्तयः ॥

---

१. तन्त्रा० वि०, भा० ९, आ० १५, पृ० १४०
२. स्व० उ०, भा० १, प० १, पृ० ३८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



रूपेभ्य एभ्यः सर्वेभ्यो नमस्कारं करोत्यणुः ।
नमस्कारः परित्यागः कार्यकारणलक्षणः ॥



## पद्संगतिः

( १ )

[1]शक्तिपाताद्यभावात् कुम्भकारस्यापि घटकरणे सर्वशक्तिशिवात्मता, तदपरिज्ञानात्तु कुम्भकारतेत्यर्थः ।

( २ )

[2]तस्मात् तत्रापि विभक्तियोगेन कारकत्वे सति सत्तैव शिवताख्या ।

( ३ )

[3]चिदाकाशमये स्वाङ्गे विश्वालेख्यविधायिने ।
सर्वाद्भुतोद्भवभुवे नमो विषमचक्षुषे ॥



## पद्महस्तभट्टारकः

[4]प्राणार्कौ सन्नयेत् पश्चाच्छक्त्यन्तमयते यदा ।
त्रिपथे जायते सन्ध्या तन्त्रस्था कुलयोगिनाम् ॥



१. म० म० प०, पृ० ४९
२. म० म० प०, पृ० ७७
३. म० म० प०, पृ० १२१
४. ज्ञा० वि०, प० ८ क

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# पराख्यसंहिता

( १ )

[1]करणं करणापेक्षमाजाविभकरास्त्रवत् ॥

( २ )

[2]पवित्राः पावना गावः सर्वदैवतविग्रहाः ।
गोमूत्रे स्वःसरिन्मुख्या तटस्था मृच्च गोमयम् ॥
अमृतं तत्पयो दिव्यं तद्विकारो दधि स्थितम् ।
तद्घृतं तद्गतः सारस्तत्सदामरतर्पणम् ॥

( ३ )

[3]लेख्या चात्र सिता रेखा शालिपिष्टकृता पुरः ।
हरिद्रावर्णसंमिश्रा कर्णिका पीतपिञ्जरा ॥
सितपीतारुणानां स्यात् केसराणां त्रयं दले ।
तानि शुक्लानि वा कुर्याद् हरितान्यन्तराणि वा ॥
कोणा रक्ताः सितं पीठं प्रतिरेखा सिताङ्गुलात् ।

तथा—

अङ्गुष्ठः शक्तिमान् बिन्दुश्चतस्रोऽङ्गुलयः कलाः ।
तदाधारं रजः कृत्वा शक्तिस्पर्शी च बिन्दुना ॥
पातयेच्छक्तिगर्भं तत्तेन तच्छक्तिमण्डलम् ।

( ४ )

[4]अवीचिर्वीचिभिश्छन्नः पूयासृक्कर्दमादिभिः ।
रुदन्तः प्राणिनो यत्र निक्षिप्यन्ते स रौरवः ॥

---

१. मृ० वृ० वि०, पृ० २३१
२. स्व० उ० भा० १, प० ३, पृ० १८१
३. स्व० उ०, भा० ३, प० ५, पृ० २३
४. स्व० उ०, भा० ५, प० १०, पृ० १६-५२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तामिस्रस्तमसा मिश्रः शर्वरीध्वान्तधूसरः ।
तथारूपोऽन्धतामिस्रस्त्वविभावितदिङ्मुखः ॥
पद्मः पद्मसमाकारः सुशीतो हिमकर्दमः ।
महापद्मस्तथारूपः किन्तु शीतहिमोत्तरः ॥
कालसूत्रोऽसितः पाशस्त्रिकण्टदृढवेष्टनः ।
सूचीमुखः सुतीक्ष्णाग्रसूचीवत् प्रविभेदकः ।
क्षुरधारो लुनात्यङ्गं क्षुरधारानिरन्तरः ।
खड्गश्छिनत्ति गात्राणि खड्गधारापरिग्रहः ।
तालस्तालवदङ्गस्थैर्विदारयति वल्कलैः ।
कुम्भीपाको बृहद्घोरः कुम्भवक्त्रोज्ज्वलच्छिखः ।
अम्बरेषोऽम्बराद् यस्मात् सुतीक्ष्णेषून् प्रवर्षति ।
तप्ताङ्गारोऽग्निसङ्काशो लोहाङ्गारनिकेतनः ॥
सुतप्तस्तापकृत् प्रोक्तः केवलोज्ज्वलितानलः ।
जतुपङ्को ज्वलल्लाक्षाप्रलेपप्लुष्टविग्रहः ॥
शीतः शीतज्वरारम्भः समस्ततनुतापकृत् ।
विण्मूत्रो विट्छिलाशीर्णचूर्णास्यकृतपूरणः ।
त्रिर्निवासः पिपासार्तिबुभुक्षापीडितोदरः ।
क्विति क्षितिः समुद्दिष्टा तस्यासूष्माणुलोमतः ।
सोऽण्डे यद्वद् दुरालोकः कूष्माण्डस्तद्वदुत्कटः ॥
समन्तात् सर्वरत्नानां भासो यस्माद् विभान्त्यलम् ।
तद् धर्म्याणां च तत् स्त्रीणामाभासं तेन तत् स्मृतम् ॥
आभासे शङ्कुकर्णाख्यः कुटिलो विकलः पतिः ।
वरतालेऽपि प्रह्लादो वासुकिर्लोहिताननः ॥
नितले शिशुपालाख्यः कम्बलो यमदंष्ट्रकः ।
गभस्त्याख्ये सकर्कन्धुः कर्कटो विकटाननः ॥
महातले हिरण्याख्यः कालाङ्गश्च कराङ्गकः ।
रसातले बृहद्भोगो दुर्दशो भीमनिःस्वनः ।

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



षडेतानि त्रिखण्डानि भोगान्यैर्भिर्महात्मभिः ।
सुतले संस्थितोऽधस्ताद् बलिस्तक्षकपिङ्गलौ ॥

( ५ )

[1]निषिद्धो यत्र वै तार्क्ष्यः शेषाहिं हन्तुमुद्यतः ।...
हेमकूटस्तथा सोऽद्रिर्यत्र दत्तः प्रजापतेः ।
सुवर्णस्य महाकूटो यागार्थं धनदेन तु ॥...
... ... ... ... ....हिमवान् हिमकूटवान् ।
रत्नाढ्योऽपि हिमप्रायस्तेनासौ हिमवान् गिरिः ॥...
शनिस्तत्र सुनीलाभो जातो नीलस्त्वतो गिरिः ।
नीलवच्च गिरिः श्वेतो यत्र श्वेतो महामुनिः ॥
मृत्युना ग्रस्यमानोऽपि रक्षितश्चन्द्रमौलिना ।...
श्वेतवच्च त्रिशृङ्गोऽद्रिर्वज्रपातोपमर्दनः ।
त्र्यश्रितस्तेषु शृङ्गेषु किल देवास्त्रयः स्थिताः ॥...
दृष्ट्वा माल्यानि दिव्यानि ब्रह्मसेवार्थमागतैः ।
सम्भृतानि यतः सिद्धैर्माल्यवांस्तेन लप्यते ॥...
मदमत्ता पुरा दृष्टा माल्या विद्याधरी किल ।
ऋषिणा नारदेनाऽस्मिन्नाघ्राता मोदभाविता ॥
गन्धो मे मादनो विप्रेत्युक्तस्तद् गन्धमादनः ।...
इला नामाऽप्सरा दिव्या रूपयौवनशालिनी ।
दृष्टा साऽमृतरूपेण विचरन्ती मनोहरा ॥
भुजाभ्यामावृता रागात् तेनेलावृतमुच्यते ।...
देवासुराणामारम्भे दारुणे समुपस्थिते ।
अकस्मात् तत्र केतूनां या माला सहसोत्थिता ॥
तां दृष्ट्वा विबुधा भीताः केतुमालमतो मतम् ।...

---

१. स्व० उ०, भा० ५, प० १०, पृ० ८३–१०१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



उच्चैःश्रवास्तु भद्राश्वः क्षीरोदमथनोद्गतः ।
तस्मिंश्चरति येनाऽश्वो भद्राश्वं तेन तत् स्मृतम् ॥...
रम्यवत् कुरुवर्षाख्यमुपमन्युर्हरेण सः ।
कुर्वेवं तु पिब क्षीरं यत्रोक्तस्तेन तत् कुरु ॥...
यत्र गन्धर्वमुख्येन रमणा रमिता बलात् ।
रमणं तत्परं वर्षम्... ... ... ... ... ... ॥
उर्वशी याऽप्सरा भद्रा दृष्टा चन्द्रमसा किल ।
प्रोक्ता रम्येति तद्वाक्यात् तेनेदं रम्यनामकम् ॥...
यत्र नागेन शेषेण हरिराराधितस्तथा ।...
यत्र विद्याधरी रम्या विद्याधरकरच्युता ।
किं त्वया पुरुषस्त्यक्त इत्युक्ता... ... ... ॥...
भरतेन भृतं दुःखं यत्र पुत्रैः कुमार्गगैः ।...

( ६ )

[1]पञ्चाशीतिमितैर्लक्षैः स्वर्लोकः स्वर्गसंश्रयः ।
कोटिद्वयं महर्लोको महान्तो यत्र संस्थिताः ॥...
तद् ब्रह्मोर्ध्वं भवेद् विष्णुः स च कोटिचतुष्टयात् ।
षड्भिः स कोटिभिर्देवः शङ्करः संस्थितो हरः ॥

( ७ )

[2]निमित्तमीश्वरस्तेषामुपादानं स बिन्दुराट् ।

( ८ )

[3]कर्तृशक्तिं व्यनक्त्यस्य कलास्यातः प्रयोजिका ।
ततः कलासमायुक्तो भोगेऽणुः कर्तृकारकः ॥

---

१. स्व० उ०, भा० ५, प० १०, पृ० २२१, २३२
२. त० प्र०, पृ० २६
३. भो० का०, पृ० ५१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ९ )

[1]पूर्ववर्णजसंस्कारयुक्तोऽन्त्योऽर्णोऽभिधायकः ।

( १० )

[2]क्षुद्रसिद्ध्यै जपः कार्यो भाष्योऽन्यश्रवणात्मकः ।
उपांशुर्मध्यसिद्ध्यादौ स्वसंवेद्यलघुध्वनिः ॥
श्रेष्ठः श्रेष्ठतमे कार्यसिद्ध्यादौ मानसो जपः ।

( ११ )

[3]पञ्चाङ्गुलपरीणाहो दण्डः स्याद् द्विदशाङ्गुलः ।

( १२ )

[4]उक्तं च श्रीपरेऽहानादानः सर्वदृगुल्वणः ।
मुहूर्तान्निर्दहेत् सर्वं देहस्थमकृतं कृतम् ॥

( १३ )

[5]ज्ञानमेतच्छिवक्ष्मोत्थं संगृहाणात्मभेषजम् ।
परिणामसुखं स्वादु विशेषगुणदर्शकम् ॥

( १४ )

[6]बिन्दुः क्षुब्धस्तदिच्छातः शब्दराशिरभूत् तदा ।

( १५ )

[7]स्वल्पेऽपि व्यञ्जके स्वल्पं महन्महति तत् स्थितम् ।
यादृक् तादृग् भवेत् तस्य प्रदीपस्तिमिरे यथा ॥

---

१. वा० का०, पृ० ९
२. मृ० वृ० क्रि०, पृ० ४२; च०, पृ० २३२
३. मृ० वृ० क्रि०, पृ० ६७-६८
४. तन्त्रा०, भा० ६, आ० ९, पृ० १०७
५. श० र० सं०, पृ० १२
६. श० र० सं०, पृ० ४५
७. श० र० सं०, पृ० ७१



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १६ )

[1]ईश्वराधिष्ठितात्माऽसावस्वतन्त्रो यतस्तु सः ।



## परातन्त्रम्

[2]गदिता येऽब्धयः सप्त तेऽत्र गर्भे यतः स्थिताः ।
प्रथितस्तेन गर्भोदः समस्ताब्धिरसोद्वहः ॥



## परामतम्

[3]परीकर्तुं निजं तत्त्वं स्वात्मीकर्तुं तथोभयम् ।
एकीकर्तुं न किं कर्तुं विमर्शो जगति क्षमः ॥



## परासूक्तम्

[4]कृत्येषु देवि ! तव सृष्टिमुखेषु नित्यं
स्वाभाविकेषु विसरत्सु यदुन्मुखत्वम् ।
इच्छेति तत्किल निरूपितमागमज्ञै-
र्जानासि येन विदधासि च तं तमर्थम् ॥



---

१. श० र० सं०, पृ० ७३
२. स्व० उ०, भा० ५, प० १०, पृ० १४०
३. म० म० प०, पृ०-७७
४. म० म० प०, पृ० ४०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## पश्चिमम्

( १ )

[१]पूजा होमः क्रमश्चर्या व्रतं शास्त्रनिषेवणम् ।
तपो ध्यानं जपः शौचं तत्त्वहीनस्य निष्फलम् ॥

( २ )

[२]सा सिद्धिः सर्वसिद्धीनां सिद्धित्वे परिकीर्तिता ।
ज्ञानं ह्यकलितं चैकं मुद्रा चैका ग्रहात्मिका ॥
द्वावेतौ यस्य जायेते सोऽन्वयी सिद्धशासने ।



## पारमेश्वरागमः

[३]व्रतानि व्रतबन्धेऽस्मिन् शोध्यान्येव चतुर्दश ।
तत्रादौ मेखला दण्डमजिनं त्र्यायुषं तथा ॥
सन्ध्याग्न्युपासने भिक्षा मेखलाव्रतसप्तकम् ।
भूतेशं पाशुपत्यं च गणं गाणेश्वरं तथा ॥
उन्मत्तमसिधाराख्यं गणेशं सप्तमं तथा ।
चर्याव्रतानि शोध्यानि ........................ ॥....
अष्टका पार्वणी श्राद्धं श्रावण्याग्रायणी ततः ।
चैत्री चाश्वयुजी चेति शोध्याः पाकमखास्त्विमे ॥
आधेयमग्निहोत्रं च दर्शं वै पौर्णमासिकम् ।
चातुर्मास्यं ततः शोध्यं पशुबन्धं च शोधयेत् ॥
सौत्रामणिं च सप्तैते हविर्यज्ञा मता इमे ।....

१. म० म० प०, पृ० १०८
२. म० म० प०, पृ० १२६
३. मृ० वृ० क्रि०, पृ० १७८-१७९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



अग्निष्टोमस्ततः शोध्योऽत्यग्निष्टोमस्तथैव च ।
उक्थ्यः षोडशिकश्चैव वाजपेयातिरात्रकौ ॥
अप्तोर्यामश्च सप्तैते सोमसंस्था मतास्त्विह ।
पादत्वग्गर्भमेदोऽस्थिशुह्यार्चिर्नाभिताल्लुकाः ।
श्रोत्रनेत्रा हिरण्याद्या दश चैकाधिका मखाः ॥
अश्वमेधो हिरण्याद्येकादशैवैंदिका मखाः ।
वनवासः पारिव्राज्यं शोध्या चान्त्येष्टिरेव च ॥
दया स्पृहाऽनसूया च शान्तिः शौचं तु मङ्गलम् ।
अकार्पण्यमनायासः शोध्या आत्मगुणा बुधैः ॥



## पिचुशास्त्रम्

( १ )

[1]श्रीमत्पिचुमते चोक्तमादौ यत्नेन रक्षयेत् ॥
प्रवेशं संप्रविष्टस्य न विचारं तु कारयेत् ।

( २ )

[2]श्रीपिचौ च स्मृतेरेव पापघ्नत्वे कथं विभो ॥
प्रायश्चित्तविधिः प्रोक्त इति देव्याः प्रचोदिते ।



## पुष्पदन्तः

[3]श्रुतिसामान्याद्वा सिद्धम् ।



१. तन्त्रा०, भा० ११, आ० २८, पृ० १६३
२. तन्त्रा०, भा० ११, आ० २८, पृ० १७५
३. परा० अभि०, पृ० १७३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# पूजनस्तोत्रम्

[1]अहो स्वादुरसः कोऽपि शिवपूजामयोत्सवः ।
षट्त्रिंशतोऽपि तत्त्वानां क्षोभो यत्रोल्लसत्यलम् ॥

# पूर्व( तन्त्रम् )

( १ )

[2]क्रमसंकोचगुलिका तद्विकासैकमूलिका ।
तत्तत्स्वरूपा वीरादिवीरान्ता पातु पादुका ॥

( २ )

[3]द्रवद्रव्यसमायोगात् स्नपनं तस्य जायते ।
गन्धपुष्पादिगन्धस्य ग्रहणं यजनं स्मृतम् ॥
षड्रसास्वादनं तस्य नैवेद्याय प्रजायते ।
यमेवोच्चारयेद् वर्णं स जपः परिकीर्तितः ॥

( ३ )

[4]सर्वमन्यत् परित्यज्य चित्तमत्र निवेशयेत् ।
मृद्धातुशैलरत्नादिभवं लिङ्गं न पूजयेत् ॥
अर्चयेच्चिन्मयं लिङ्गं यत्र लीनं चराचरम् ।

( ४ )

[5]बहिर्लिङ्गस्य लिङ्गत्वमनेनाधिष्ठितं यतः ।
अतः प्रपूजयेदेतत् परमाद्वैतमाश्रितः ॥

१. तन्त्रा०, भा० ९, आ० १५, पृ० ७८
२. म० म० प०, पृ० ९६
३. म० म० प०, पृ० १०९
४. म० म० प०, पृ० ११८
५. म० म० प०, पृ० ११९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# पौष्करागमः

( १ )

[1]अन्याभिरिह दीक्षाभिर्न निर्वाणमवाप्यते ।
गाणपत्यपदं ताभिः ... ... ... ... ... ॥

( २ )

[2]अनन्तरं यत्पटलात् सूत्रं तन्त्रे प्रवर्तते ।
वक्तव्यस्तस्य सम्बन्धः पञ्चधा समवस्थितः ॥
तन्त्रवस्तुत्रयात् सूत्राद् वाक्यात् प्रकरणात्तथा ।
पटलाच्च ... ... ... ... ... ... ॥

( ३ )

[3]गृही यथाङ्गमालभ्य तिलकैर्वा त्रिपुण्ड्रकैः ।

( ४ )

[4]अभूतलनिसृष्टैस्तु कपिलावृषगोमयैः ।...
कपिलावृषभाभावादारण्यांस्तु समाहरेत् ।
शुचीनुपलकान् शुद्धान् ... ... ... ... ॥

( ५ )

[5]उत्तमान् मानसान्मन्त्रान् मध्यमानप्युपांशुना ।
अधमानपि मन्त्रांस्तु भाष्येणेह जपेद् बुधः ॥

( ६ )

[6]प्रागग्रैश्चोदगग्रैश्च कुशैः कुण्डे चतुष्पथम् ।

---

१. प० का०, पृ० ६
२. मृ० वृ० वि०, पृ० ९७
३. मृ० वृ० क्रि०, पृ० १३
४. मृ० वृ० क्रि०, पृ० १४
५. मृ० वृ० क्रि०, पृ० ४२; च०, पृ० २३३
६. मृ० वृ० क्रि०, पृ० ५४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ७ )

[1]प्राच्याश्चरुपुरोडाशाः पञ्चसंस्कारसंस्कृते ।
अनाहूतशिवे वह्नौ होमस्त्वावाहिते भवेत् ॥

( ८ )

[2]लिङ्गप्रासादपद्मादिध्वजच्छत्रसमाकृतिः ।
हंसतार्क्ष्यद्विपवृषैः शुभैश्च सदृशः शुभः ॥
वेणुवीणाघ्ननिर्ह्रादैः शङ्खतूर्यसमस्वनः ।
वृषध्वजनिनादश्च सिंहनादस्तु शस्यते ॥

( ९ )

[3]यागः श्वो भवितेत्यादौ कर्तव्यमधिवासनम् ।

( १० )

[4]ध्रुवः परिग्रहार्थं तु शङ्कुं सूत्रे निवेशयेत् ।
शङ्कुभिः सूत्रयेन्नैव मण्डलं तु कदाचन ॥

( ११ )

[5]सद्योऽधिवासनं कार्यमकृते त्वधिवासने ।
पूर्वोक्तेन विधानेन दन्तकाष्ठचरूज्झितम् ॥

( १२ )

[6]कालाग्निरुद्रात् प्रभृति क्रमात् पञ्चाष्टकावधि ।
लौकिकानुग्रहः कार्यः ... ... ... ... ॥
वैदिकः सोमसंस्थोऽर्थ इष्टधर्म इति स्मृतः ।

१. मृ० वृ० क्रि०, पृ० ६२
२. मृ० वृ० क्रि०, पृ० ७८
३. मृ० वृ० क्रि०, पृ० ८३, ११९
४. मृ० वृ० क्रि०, पृ० ८८
५. मृ० वृ० क्रि०, पृ० ११७
६. मृ० वृ० क्रि०, पृ० १४६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १३ )

[१]एकस्य दीक्षा कर्तव्या द्वयस्याथ त्रयस्य वा ॥

( १४ )

[२]उत्तमं द्विजभैक्षं तु ग्राह्यमेतत् त्वया सदा ।
तद्धि सान्तानिकं नाम भैक्षं हि परिकल्पितम् ॥

( १५ )

[३]उत्तमाः शिवमन्त्राद्या मन्त्रेशाद्यास्तु मध्यमाः ।
गणाश्च रुद्रमन्त्राश्च भगिन्यो मातरस्तथा ॥
अधमाः कीर्तिता मन्त्राः ........................ ।

( १६ )

[४]गृहाद् गृहं पर्यटतो भैक्षं माधूकरं स्मृतम् ।

( १७ )

[५]पीठं तेषां तु मन्त्राणां कार्यं पद्माङ्कितोदरम् ।
श्रीपर्णिकादिदारूत्थं वृत्तं तु शुभलक्षणम् ॥

( १८ )

[६]अचेतनं जगद् विप्राश्चेतनप्रेरणं विना ।
प्रवृत्तौ वा निवृत्तौ वा न स्वतन्त्रं रथादिवत् ॥
योऽत्र प्रवर्तकः शक्तः स पतिः परिपठ्यते ।
विवादाध्यासितं विश्वं विश्ववित्कर्तृपूर्वकम् ॥
कार्यत्वादावयोः सिद्धं कार्यं कुम्भादिकं यथा ।

---

१. मृ० वृ० क्रि०, पृ० १८२
२. मृ० वृ० च०, पृ० २१०
३. मृ० वृ० च०, पृ० २३३
४. मृ० वृ० च०, पृ० २३४
५. मृ० वृ० च०, पृ० २३४
६. श० र० सं०, पृ० १६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १९ )

[1]अनादिरूपो भगवानिच्छयाऽस्यावतारकः ।

( २० )

[2]नास्ति शक्तिरुपादानं चिद्रूपत्वाद् यथा शिवः ।
परिणामोऽचितः प्रोक्तश्चेतनस्य न युज्यते ॥
चितो विवर्त एवोक्तस्तथात्वे कार्यशून्यता ।
सर्वप्रमाणसंसिद्धं चिद्विवर्तः कथं जगत् ॥

( २१ )

[3]यद्यभिन्नं तु सर्वेषां भोक्तुमिच्छैकदा भवेत् ।
भोक्तुमिच्छा यदैकस्य गन्तुमिच्छा परस्य च ॥
तदैव तस्माच्चैतन्यं भिन्नरूपमिति स्मृतम् ।

## प्रज्ञालङ्कारः

( १ )

[4]एवं तर्हि जगदेकस्यैव कस्यचिदनंशस्य यथोक्तविधिना रूपमस्तु । किं नः क्षीयते ।

( २ )

[5]निजधर्माप्रहाणेन परस्यानुपकारिता ।
प्रतिबिम्बात्मता सोक्ता खड्गादर्शतलादिवत् ॥

१. श० र० सं०, पृ० २२
२. श० र० सं०, पृ० २४–२५
३. श० र० सं०, पृ० ३४
४. तन्त्रा० वि०, भा० २, आ० ३, पृ० ५४
५. तन्त्रा० वि०, भा० २, आ० ३, पृ० ६२



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]तस्मात् सत्यपि बाह्येऽर्थे धीरेकानेकवेदनात् ।
अनेकसदृशाकारा नानेकैव प्रसज्यते ॥

( ४ )

[2]प्ररोहोऽस्याः संविदः पटीयस्त्वं स एव संस्कारो वाच्यः ।

( ५ )

[3]सिद्धं सिद्धतया वस्तु निरूप्यं न तथा ततः ।

( ६ )

[4]साक्षात्कारः स्वतःसिद्धः सा स्फुरद्रूपतास्य हि ।



## प्रमाणस्तुतिः

[5]ये यौष्माके शासनमार्गे कृतदीक्षाः
संगच्छन्तो मोहवशाद् विप्रतिपत्तिम् ।
नूनं तेषां नास्ति भवद्भानुनियोगः
संकोचः किं सूर्यकरैस्तामरसानाम् ॥
ज्ञातज्ञेया धातृपदस्था अपि सन्तो
ये त्वन्मार्गात् कापथगास्तेऽपि न सम्यक् ।
प्रायस्तेषां लैङ्गिकबुद्ध्यादिसमुत्थो
मिथ्याबोधः सर्षपसादीपजकल्पः ॥

---

१. तन्त्रा० वि०, भा० २, आ० ३, पृ० ६४
२. ई० प्र० वि० वि०, भा० १, पृ० २३४; भा० २, पृ० २२०
३. ई० प्र० वि० वि०, भा० २, पृ० १६
४. ई० प्र० वि० वि०, भा० २, पृ० १९९
५. तन्त्रा०, भा० ८, आ० १४, पृ० २२०-२२१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



यस्माद् विद्धं सूतकमुख्येन नु ताम्रं
तद्वद् भूयः स्वां प्रकृतिं नो समुपेयात् ।
नो तैः पीतं भूतलसंस्थैरमृतं तद्
येषां तृट्क्षुद्दुःखविबाधाः पुनरस्मिन् ॥



## प्रयोगमञ्जरी

[1]पाशास्त्रयो निगलयन्ति ।



## प्रशस्तिभूतिपादः

[2]ये ये भावा ह्लादिन इह दृश्याः सुभगसुन्दराकृतयः ।
तेषामनुभवकाले स्वस्थितिपरिपोषणं सतामर्चा ॥



## बहुरूपगर्भस्तोत्रम्

[3]... ... ... ... कोटिद्वितयसङ्गिने ॥...
भोगपाणे ! नमस्तुभ्यं योगीशैः पूजितात्मने ।
द्वयनिर्दलनोद्योगसमुल्लासितमूर्तये ॥



१. त० व्या० कु०, पृ० ३२
२. तन्त्रा० वि०, भा० २, आ० ३, पृ० २१९
३. भा०, भा० १, पृ० ७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## बृहस्पतिपादः ( शिवतनुशास्त्रकर्ता )

( १ )

[१]यन्माहात्म्यं भगवति परमशिवेऽनुपममव्ययमचिन्त्यम् ।
तन्माहात्म्यं सिद्धे हतबन्धनमण्डले भवति ॥

( २ )

[२]भवभोक्तृभोगसाधनतदुपादानादि यो विजानाति ।
तमृते भवेन्नहीदं पुंस्कर्माशयविपाकज्ञम् ॥

( ३ )

[३]अपि सर्वसिद्धवाचः क्षीयेरन् दीर्घकालमुद्गीर्णाः ।
मायायामानन्त्यान्नो[४]च्येत स्रोतसां संख्या ॥

( ४ )

[५]जन्तोर्विभात्यतिश्लेषात् सा द्वितीयेव चेतना ।

( ५ )

[६]स्वपरविमर्शक्षमचित्तत्त्वयुतः स्याद् विपश्चित्तु ।....
परं विमृशतीति णिचि क्विपि परं विमृशन्ती चिदस्य ।

( ६ )

[७]मायातोऽव्यक्तकलयोः कलातो रागविद्ययोः ।



---

१. मृ० वृ० वि०, पृ० ९६
२. मृ० वृ० वि०, पृ० ११२
३. मृ० वृ० वि०, पृ०१८७, ३४७; भो० का०, पृ० ६१
४. ह्नोच्यते—भो० का० ।
५. मृ० वृ० वि०, पृ० २०८
६. ई० प्र० वि० वि०, भा० १, पृ० १४
७. तन्त्रा० वि०, भा० ६, आ० ९, पृ० ४१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## बृंहणी

[1]शिवो देवः शिवा देवी शिवं ज्योतिरिति त्रिधा ।
अलिङ्गमपि यत्तत्त्वं लिङ्गभेदेन कथ्यते ॥

## ब्रह्मयामलम्

[2]प्रतिष्ठितस्य दूरादेर्दर्शनेऽनधिकारिणा ॥
प्रायश्चित्तं प्रकर्तव्यमिति श्रीब्रह्मयामले ।
ब्रह्मघ्नो गुरुतल्पघ्नो वीरद्रव्यहरस्तथा ॥
देवद्रव्यहृदाकारप्रहर्ता लिङ्गभेदकः ।
नित्यादिलोपकृद् अष्टस्वकमात्रापरिच्छदः ॥
शक्तिव्यङ्गत्वकृद् योगिज्ञानिहन्ता विलोपकः ।
नैमित्तिकानां लक्षादिक्रमाद् द्विद्विगुणं जपेत् ॥
व्रतेन केनचिद्युक्तो मितभुग् ब्रह्मचर्यवान् ।
दूतीपरिग्रहेऽन्यत्र गतश्चेत् काममोहितः ॥
लक्षजापं ततः कुर्यादित्युक्तं ब्रह्मयामले ।

## भर्गशिखा

[3]नैष वर्णो न वा शब्दो न चैवायं कलात्मकः ।
केवलः परमानन्दो वीरो नित्योदितो रविः ॥

---

१. त० व्या० कु०, पृ० १७
२. तन्त्रा०, भा० ११, आ० २८, पृ० १७८–१८०
३. सा० प० टी०, पृ० ३४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



नास्तमेति न चोदेति न शान्तो न विकारवान् ।
सर्वभूतान्तरचरो भानुर्भर्ग इति स्मृतः ॥



## भार्गवोत्तरम्

[1]अन्यतन्त्रेषु ये मुक्ता धर्माधर्मक्षयान्नराः ।
तेऽत्र रुद्राणवः प्रोक्ता गुणत्रयविवर्जिताः ॥



## भुवनेश्वरीकल्पः

[2]बोधस्वरूपवाची संवित् प्रोक्ता च देवता गुरुभिः ।



## भूतक्षोभः

[3]मुद्रां कापालिनीं बद्ध्वा दक्षहस्तेन साधकः ।
पात्रं तदुपरि स्थाप्यं मध्यमाङ्गुष्ठयोगतः ॥
क्षिप्त्वैकं विप्रुषं वक्त्रे तर्पयेद् देवतागणम् ।



## भूतशुद्धितन्त्रम्

[4]अन्यथाख्यामुपाश्रित्य सांख्यवच्छिवशासनम् ।
या अनिर्वचनीयेति तथा सिद्धान्तवादतः ॥
वेदान्तवादिनां दृष्टिमाश्रितं वैष्णवं मतम् ।



---

१. मृ० वृ० वि०, पृ० ६३
२. त० व्या० कु०, पृ० १५
३. तन्त्रा० वि०, भा० ९, आ० १५, पृ० १४०
४. त० व्या० कु०, पृ० ६८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# भूतिराजः

( १ )

[1]श्रीभूतिराजमिश्रा गुरवः प्राहुः पुनर्वही रुद्रशतम् ।

( २ )

[2]क्षेपाज्ज्ञानाच्च काली कलनवशतयाऽथ··· ··· ।

( ३ )

[3]सर्वङ्कोडीकारेण स्थितत्वाद् देव्येव मन्त्रः ।

# भैरवकुलम्

( १ )

[4]उक्तं श्रीभैरवकुले पञ्चदीक्षासुसंस्कृतः ।
गुरुरुल्लङ्घिताधःस्थस्रोता वै त्रिकशास्त्रगः ॥

( २ )

[5]श्रीभैरवकुलेऽप्युक्तं कुलपर्वप्रपूजने ।
स्थण्डिलेऽग्नौ पटे लिङ्गे पात्रे पद्मेऽथ मण्डले ॥
मूर्तौ घटेऽस्त्रसंघाते धटे सूत्रेऽथ पूजयेत् ।
स्वेन स्वेनोपचारेण संकरं वर्जयेदिति ॥

१. तन्त्रा०, भा० ५, आ० ८, पृ० २६५
२. तन्त्र० अभि०, पृ० ३०
३. म० म० प०, पृ० १२२
४. तन्त्रा०, भा० ८, आ० १३, पृ० १८२
५. तन्त्रा०, भा० १०, आ० २७, पृ० ३७५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[१]पूजनात् कुलपर्वेषु (?) ........................ ।
........................ कुलपर्वसु पूजनात् ॥

## भैरवयामलम्

( १ )

[२]बैन्दवे जगदुत्पत्तिस्थितिसंहारकारिणी ।
सदाशिवेन संपृक्ता तत्त्वातीता महेश्वरी ॥
ज्योतीरूपा पराकारा तस्या देहोद्भवाः शिवे ।
किरणाश्च सहस्रं च द्विसहस्रं च लक्षकम् ॥
कोटिरर्बुदमेतेषां परा संख्या न विद्यते ।
तामेवानुप्रविश्यैव भाति सर्वं चराचरम् ॥
यस्या देव्या महेशान्या भासा सर्वं विभासते ।
तद्भासा रहितं किञ्चिन्न च यच्च प्रकाशते ॥
तस्याश्च शिवशक्तेश्च चिद्रूपायाश्चितिं विना ।
आन्ध्यमापद्यते नूनं जगदेतच्चराचरम् ॥
तेषामनन्तकोटीनां मयूखानां महेश्वरि ।
मध्ये षष्ट्युत्तरं तेऽमी त्रिशतं किरणाः शिवे ॥
ब्रह्माण्डं व्यश्नुवानास्ते सोमसूर्यानलात्मना ।
अग्नेरष्टोत्तरशतं षोडशोत्तरकं रवेः ॥
षट्त्रिंशदुत्तरशतं चन्द्रस्य किरणाः शिवे ।
ब्रह्माण्डं भासयन्त्येते पिण्डाण्डमपि पार्वति ॥

१. तन्त्रा० चि०, भा० ११, आ० २८, पृ० ९

२. चि०, पृ० ५४; ल० सौ० टी०, पृ० १००–१०१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



दिवा सूर्यस्तथा रात्रौ सोमो वह्निश्च सन्ध्ययोः ।
प्रकाशयन्तः कालास्ते तस्मात् कालात्मकास्त्रयः ॥
षष्ट्युत्तरं च त्रिशतं दिनान्येव तु हायनम् ।
हायनात्मा महादेवः प्रजापतिरिति श्रुतिः ॥

( २ )

[1]कलाविद्या परा शक्तिः श्रीचक्राकाररूपिणी ।
तन्मध्ये बैन्दवं स्थानं तत्रास्ते परमेश्वरी ॥
सदाशिवेन संपृक्ता सर्वतत्त्वातिगा सती ।

( ३ )

[2]चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ॥

( ४ )

[3]त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ॥
बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम् ।
चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात् ॥
त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।
दशारयोः षोडशारं भूगृहं भुवनाश्रके ॥
शैवानामपि शाक्तानां चक्राणां च परस्परम् ।
अविनाभावसंबन्धं यो जानाति स चक्रवित् ॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
मनुकोणं चतुष्कोणं कोणचक्राणि षट् क्रमात् ॥

---

१. चि०, पृ० ५७
२. ल० सौ० टी०, पृ० ३, २१, ७०, ७१
३. ल० सौ० टी०, पृ० ७१-७२



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम् ।
अनाहतं विशुद्ध्याख्यमाज्ञाचक्रं विदुर्बुधाः ॥
तवाधारस्वरूपाणि कोणचक्राणि पार्वति ।
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपः शिवः स्मृतः ॥
अविनाभावसंबन्धस्तस्माद् बिन्दुत्रिकोणयोः ।

( ५ )

[1]साधु साधु महाभागे पृष्टं त्रैलोक्यसुन्दरि ।
गुह्याद् गुह्यतमं ज्ञानं न कुत्रापि प्रकाशितम् ॥
कलाविद्या परा शक्तिः श्रीचक्राकाररूपिणी ।
तन्मध्ये बैन्दवं स्थानं तत्रास्ते परमेश्वरी ॥
सदाशिवेन संपृक्ता सर्वतत्त्वातिगा सती ।
चक्रं त्रिपुरसुन्दर्या ब्रह्माण्डाकारमीश्वरि ॥
पञ्चभूतात्मकं चैव तन्मात्रात्मकमेव च ।
इन्द्रियात्मकमेवं च मनस्तत्त्वात्मकं तथा ॥

( इतः परं चिद्वल्ली( पृ० ५४ )स्थाः श्लोकाः ) ततः परम्—

प्रजापतिर्लोककर्ता मरीचिप्रमुखान् मुनीन् ।
सृजन्त्येते लोकपालान् ते सर्वे लोकरक्षकाः ॥
संहारश्च हरायत्त उत्पत्तिर्भवनिर्मिता ।
रक्षा तु मृडसंलग्ना सृष्टिस्थितिलये शिवः ॥
नियुक्तः परमेशान्या जगदेवं प्रवर्तते ।



१. ल० सौ० टी०, पृ० १००-१०१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## भैरवागमः

[1]भुजङ्गकुटिलाकारा अधो नाभेर्व्यवस्थिता ।
प्रबुद्धा फणिवद् गच्छेत् फणापञ्चकभूषिता ॥
पञ्चकात् पञ्चकं यावद् वेधं भुजङ्गसंज्ञितम् ।

## भोगहस्तकम्

[2]समयी तु करस्तोभादिति श्रीभोगहस्तके ।

## मतङ्गटीका

[3]प्रमातृभूमिगतानां मन्त्राणां परभूमिगतानां च शब्दानां न तु वागिन्द्रियस्य कदाचित् । वागिन्द्रियं हि मायापद एव स्थितम् । शब्दस्तु परतन्मात्ररूपः परव्योममहाभूतमयः परमेश्वरस्य पञ्चब्रह्मविन्यासे वक्त्रमुच्यते ।

## मतशास्त्रम्

( १ )

[4]यत्र यत्र मनस्तुष्टिस्तत्र तत्रैव धारयेत् ।
तत्र तत्र परानन्दस्वरूपं संप्रकाशते ॥

१. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १५५
२. तन्त्रा०, भा० ११, आ० २९, पृ० १२९
३. शि० इ० वृ०, पृ० १०४
४. अ० र०, पृ० ८०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]संवर्तामण्डलान्ते क्रमपदनिहितानन्दशक्तिः सुभीमा ।

( ३ )

[2]न नद्यो मधुवाहिन्यो न पलं पर्वतोपमम् ।
स्त्रीमयं न जगत्सर्वं कुतः सिद्धिः कुलागमे ॥

( ४ )

[3]आमोदार्थी यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
विज्ञानार्थी तथा शिष्यो गुरोर्गुर्वन्तरं त्विति ॥

( ५ )

[4]स्वयं तु शङ्कासङ्कोचनिष्कासनपरायणः ।
भवेत् तथा यथान्येषां शङ्का नो मनसि स्फुरेत् ॥



## मतोत्तरम्

( १ )

[5]एतत् तन्मण्डलं दिव्यं यत्र विश्वं प्रतिष्ठितम् ।

( २ )

[6]पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्तितः ।
रूपं विन्दुः समाख्यातो रूपातीतं तु निष्कलम् ॥

---

१. अ० र०, पृ० २०५
२. तन्त्रा० वि०, भा० ९, आ० १५, पृ० ८६
३. तन्त्रा०, भा० १०, आ० २२, पृ० २६०
४. तन्त्रा०, भा० १०, आ० २६, पृ० ३५५
५. अ० र०, पृ० १९
६. अ० र०, पृ० २४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]भैरवोऽहं कुलोऽहं वै बिन्दुस्त्वं नादकुण्डली ।
उभयोः सङ्गमो योऽयं परानन्दस्वभावकः ॥

( ४ )

[2]प्रेक्षते कामरूपाणि तत्रस्था परमेश्वरी ।
तं तत्त्वं कामसंज्ञं तु अवाप्ता परमेश्वरी ॥....
कामरूपो ह्यहं देवि अनङ्गो रूपवर्जितः ।
क्षोभयामि प्रजाः सर्वा नित्यं वै क्लेदयामि च ॥

( ५ )

[3]त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ।
सर्वसंक्षोभणं देवि सर्वसौभाग्यदायकम् ॥
सर्वार्थसाधकं चक्रं सर्वरक्षाकरं तथा ।
सर्वरोगहरं देवि सर्वसिद्धिप्रदं तथा ।
सर्वानन्दमयं चापि नवमं सुरसुन्दरि ॥

## मन्त्रराजः

[4]अष्टापदे चाष्टशूले गदा चाष्टसु सर्वदा ।
अष्टाष्टकपदव्यापी स गुरुर्भैरवागमे ॥
वृत्तद्वये चतुर्द्वारे चतुरश्रत्रये प्रिये ।
गणेशादिपदव्यापी स गुरुर्भैरवागमे ॥
षोडशाधारचक्रस्थः षोडशस्वरवाचकः ।
षोडशान्तकलाधारी स गुरुर्भैरवागमे ॥

१. अ० र०, पृ० १३९
२. अ० र०, पृ० २४६
३. भ्र० वि०, पृ० १३३
४. अ० र०, पृ० ८१-८२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



अष्टानामष्टधारूपः पदव्यक्तिक्रमेण यः ।
इति मध्याष्टकं वेत्ति स गुरुर्भैरवागमे ॥
चतुर्दशपदान्तस्थश्चतुर्दशविराजितः ।
न चतुर्दशभिर्न्यूनः स गुरुर्भैरवागमे ॥
दशधा दशगर्भान्तर्विचित्ररचनोज्ज्वलः ।
दशभूमिपदान्तस्थः स गुरुर्भैरवागमे ॥
दशकौलेश्वरो धीमान् दशदिग् दशभैरवः ।
दशाश्वमेधमध्यस्थः स गुरुर्भैरवागमे ॥
अष्टधा स्फुरते साधुर्वशिन्यादिभिरष्टधा ।
वेत्ति तां यन्त्रचक्रस्थां स गुरुर्भैरवागमे ॥
चतुर्धा क्रमविज्ञाने चतुर्धा सन्ततो यथा ।
यः समाक्रोशचण्डेशः स गुरुर्भैरवागमे ॥



## मन्त्रवार्त्तिकम्

[1]शाक्तस्य हि तन्मनसस्त्विच्छा ह्येषा क्रियाशक्तिः ।



## मन्त्रवार्त्तिकटीका

( १ )

[2]इच्छा न मनोवृत्तिरस्मदादीनामपि, किन्तु बुद्ध्यभिव्यङ्ग्या ज्ञानशक्तिरिव मनोऽभिव्यङ्ग्या क्रियाशक्तिरेवेत्युक्तमस्माभिर्मन्त्रवार्त्तिकटीकायाम्—

शाक्तस्य हि तन्मनसस्त्विच्छा ह्येषा क्रियाशक्तिः ।

(इत्यत्र)

१. न० प०, पृ० २७०
२. मो० का०, पृ० ४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]यथा क्वचिल्लिङ्गे मण्डले आचार्यादौ चानुग्राहकत्वेन विशेषसन्निधानादभिव्यक्त उच्यते। अत एव पूजानमस्कारादयस्तत्र क्रियमाणाः कर्तॄणां फलहेतवो भवन्ति नान्यत्र, तद्वत् स्थूलेऽपि पाशरूपे मन्त्रतन्त्रशब्दे तत्कलासु नादविन्द्वाद्यासु भगवानभिव्यक्तश्चैतन्यं समर्थयन् स्वात्मानं पुंसां दर्शयतीत्यपूर्वमिदं मन्त्राणामभिधायकत्वं घटाद्यभिधायकेभ्य इत्युक्तमस्माभिर्मन्त्रवार्त्तिकटीकायाम्।

( ३ )

[2]अन्यच्च कर्तृत्वं हिताहितप्राप्तित्यागफललिप्सया सर्वान्यकारकप्रवृत्तिनिवृत्तिकारणत्वेन स्वातन्त्र्यात्मकं शिवत्वाव्यभिचारि स्वसंवेदनसिद्धमिति वक्ष्यामो मन्त्रवार्त्तिके।

## मयसंग्रहः

( १ )

[3]पीठमन्त्रान् न्यसेत् पीठे मूर्त्यादीन् लिङ्गविग्रहे।

( २ )

[4]कुण्डबिम्बार्धमानेन नाभिस्त्र्यंशेन वा हिता।

( ३ )

[5]द्वादशाङ्गुलविस्तीर्णमर्घ्यपात्रं प्रशस्यते।

१. मो० का०, पृ० ५८
२. प० का०, पृ० ७
३. मृ० वृ० क्रि०, पृ० ३१
४. मृ० वृ० क्रि०, पृ ६९
५. मृ० वृ० क्रि०, पृ० ७४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

( ४ )

[1]जयादिस्तम्भने लस्थैर्विद्वेषे हुंसमन्वितैः ।
उच्चाटे वायुबीजस्थैः सविसर्गैश्च सिद्धये ॥
मारणे हुंकृतैर्दीप्तावूर्ध्वाधो रेफसंयुतैः ।
छेदने फट्पदप्रान्तैः पुष्टावाप्यायने वषट् ॥
अमृताक्षरकैर्मृत्युनिवृत्तौ ङ ह्यविचसाः ।

( ५ )

[2]आवारिदर्शनाद् यद्वा शल्यकाङ्क्षानिवृत्तितः ।...
तामश्मभिः करापूरैश्चतुष्कलमृदन्तरैः ।
संशोध्य... ... ... ... ... ... ... ...॥

( ६ )

[3]मण्डपं शाङ्करं धाम निवृत्त्यादिकलामुखम् ।
सादाशिवद्विजश्रेष्ठाः पताकाशक्तिलक्षिताः ॥

( ७ )

[4]... ... ... .........आषाढ्याश्चादिमेऽहनि ।

( ८ )

[5]बाहूपबाहू वस्वङ्ककलौ सन्धिः कलादलम् ।
तद्वत् पाण्युपबाह्वोश्च... ... ... ... ... ...॥

( ९ )

[6]वृषो धर्मः स देवस्य गुणो ज्ञानक्रियात्मकः ।
धत्ते स चिदचिद् यस्माद् धर्मस्तेनोच्यते बुधैः ॥



१. मृ० वृ० क्रि०, पृ० ८१
२. मृ० वृ० क्रि०, पृ० ८६
३. मृ० वृ० क्रि०, पृ० ९२
४. मृ० वृ० च०, पृ० २५०
५. ने० उ०, भा० १, पृ० ९२
६. स्व० उ०, भा० ५, प० १०, पृ० २०५

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS
CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



## मलय(तन्त्रम्)

[1]सर्वत्र त्रिगुणो नाहः ... ... ... ... ... ... ।



## महावनमुनिः

[2]अलिपिशितपुरन्ध्रीभोगपर्याकुलोऽहं
बहुविधकुलयोगारम्भसंभावितोऽहम् ।
पशुजनविमुखोऽहं भैरवीसंश्रितोऽहं
गुरुचरणपरोऽहं भैरवोऽहं शिवोऽहम् ॥



## महेश्वरानन्दः

[3]अश्वेषु गच्छत्सु रथः प्रयाती-
त्युदेतु वादो रथमध्यवर्ती ।
सुखं निषण्णो विषयान्तरं च
प्राप्तः पुमान् किन्नु चकार शम्भो ॥



## माधवकुलम्

( १ )

[4]कुलाम्नायस्थिता वीरद्रव्यबाह्यास्तु ये न तैः ।
पशुभिः सह वस्तव्यमिति श्रीमाधवे कुले ॥

---

१. स्व० उ०, भा० ५, प० १०, पृ० ११२
२. म० म० प०, पृ० १६४
३. म०, म० प०, पृ० ५७
४. तन्त्रा०, भा० ९, आ० १५, पृ० २६१



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]उक्तं श्रीमाधवकुले शासनान्तरसंस्थितान् ।
वेदोक्तिं वैष्णवोक्तिं च तैरुक्तं वर्जयेत् सदा ॥

( ३ )

[2]उक्तं श्रीमाधवकुले शासनस्थो मृतेष्वपि ।
पिण्डपातोदकास्त्रा(स्ना)दि लौकिकं परिवर्जयेत् ॥

( ४ )

[3]पीठक्षेत्रादिभिः साकं कुर्याद्वा कुलपूजनम् ।

( ५ )

[4]सृष्टिक्रमं तु प्रथमसवतारं द्वितीयकम् ।
संहारं तु तृतीयं स्यादनाख्येयं चतुर्थकम् ॥

इत्युपक्रम्य—

स कालीकुलसंभूतो भावनां भावयेत् स्फुटम् ।....
पीठक्रमेण चाम्नायं सङ्कर्षण्या त्वधिष्ठितम् ।
तैर्विना न भवेत् सिद्धिस्तत्पदं कथयामि ते ॥

( ६ )

[5]दक्षिणे सक्थ्नि नगरं वामे स्यात् पौण्ड्रवर्धनम् ।
वामोरौ तु पुरस्तीरमेलापुरं तु दक्षिणे ॥
कुण्ड्याकेशी दक्षजानौ सोपानं चोत्तरे स्मृतम् ।
क्षीरकं वामजङ्घायां वामपुर्यपि दक्षिणे ॥
आम्रातकेश्वरं गुल्फे वामे राजगृहं शुभम् ।

---

१. तन्त्रा०, भा० ९, आ० १५, पृ० २७२
२. तन्त्रा०, भा० १०, आ० २४, पृ० ३१४
३. तन्त्रा०, भा० ११, आ० २९, पृ० ४०
४. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ४१
५. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ४४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ७ )

[१]नाहमस्मि न चान्योऽस्ति केवलाः शक्तयस्त्विति ।
क्षणमप्यत्र विश्रामं सहजं यदि भावयेत् ॥
तदा स खेचरो भूत्वा योगिनीमेलनं लभेत् ।...
मातङ्गी कज्जली सौनी कार्मुकी चर्मकारिणी ।
ध्वजिनी चास्थिदलनी धीवरी चक्रिणी प्रिये ॥...
नवयागरता देव्यः पूजयन्ति यथेश्वरम् ।
तद्वत् पूजा प्रकर्तव्या नवधा नवचक्रगा ॥...
मातङ्गीवेश्म सुभगे प्रयागं परिकीर्तितम् ।
कज्जली वरुणाख्यं तु सौनी कुलगिरिः प्रिये ॥
कार्मुकी चाट्टहासं च जयन्ती चर्मकारिणी ।
चरित्रं ध्वजिनी प्रोक्तमेकाम्राऽस्थिविदारणी ।
देवीकोट्टं धीवरी तु हिरण्यपुरमेव च ।
नवमं चक्रिणीपीठं यत्सुरैरपि दुर्लभम् ॥...
नवमी चक्रिणी या सा भ्रमन्ती विश्वमध्यगा ।
सर्वं बीजं पीडयन्ती रसशल्कविभागतः ॥
सा च कुण्डलिनी नाम कन्दवेष्टविनिर्गता ॥

( ८ )

[२]मोहिनी काल आत्मा च वीरनाथेति योजयेत् ।

इत्यादिना—

मदीयभूषणैर्युक्तं पञ्चधारार्घमुद्धरेत् ।



१. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ४५-४८

२. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ४९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## मायावैभवागमः

[1]एकैव मायिका माया स्थिताष्टाष्टकभेदिनी ।



## मालिनीतन्त्रम्

[2]एवं सर्वाणुसंघातमधिष्ठाय यथा स्थिता ।
तथा ते कथिता शम्भोः शक्तिरेकैव शाङ्करी ॥



## मालिनीसारः

[3]हृदये यः स्थितो ग्रन्थिरधऊर्ध्वनियामकः ।

इत्युपक्रम्योक्तम्—

कदलीगर्भदलवन्मोदकादिरसादिवत् ।
कदम्बगोलवच्चित्रात् क्रमात् कञ्चुकसम्भवः ॥



## मीनकुलम्

[4]मत्स्यवलनसंयोगाद् गलके मीनमाश्रिता ।



---

१. ई० प्र० वि० त्रि०, भा० ३, पृ० ३८४
२. परा० अभि०, पृ० ८०
३. ई० प्र० वि० वि०, भा० ३, पृ० २९३
४. ने० उ०, भा० २, पृ० २९३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS





# मुकुटसंहिता

( १ )

[1]शिवधर्मानुयायी च श्रद्धानः शिवात्मकः ।
शिवे ज्ञाने गुरौ भक्तः प्रीतः सब्रह्मचारिषु ॥
अनसूयुर्दृष्टतत्त्वः संस्कृतश्च शिवाध्वरे ।
अन्त्यजातोऽपि हीनाङ्गः साधकः स च मोक्षभाक् ।
एभिर्गुणैर्वियुक्तात्मा ब्राह्मणोऽपि न मोक्षभाक् ।
द्विजोऽपि मायी त्याज्यस्तु म्लेच्छो ग्राह्यो ह्यमायकः ॥
स प्रियस्तु महेशस्य चतुर्वेदो न दाम्भिकः ।
शिवद्वेषी पापकर्मा शिवधर्मादिदूषकः ॥
ब्राह्मणेन कृतं पापं शूद्रेण सुकृतं कृतम् ।
किं तत्र कारणं जातिर्धर्माधर्मेषु शस्यते ॥

( २ )

[2]श्रीमौकुटे तथा चोक्तं शिवशास्त्रे स्थितोऽपि यः ।
प्रत्येति वैदिके भग्नघण्टावन्न स किश्चन ॥

( ३ )

[3]ब्राह्मण्यं बीजशुद्ध्या स्यात् सा च स्त्रीषु व्यवस्थिता ।
तासां तु चपलं चित्तं चण्डालेष्वपि धावति ॥

( ४ )

[4]संविद्व्यापार एवैका युक्तिः सर्वत्र साधनी ।
भोगे वाऽप्यथवा मोक्षे तेनास्यामादृतो भवेत् ॥

---

१. तन्त्रा० वि०, भा० ९, आ० १५ पृ० २५५
२. तन्त्रा०, भा० १०, आ० २५, पृ० ३२१-३२२
३. स्व० उ०, भा० २, पृ० ३०
४. ई० प्र० वि० वि०, भा० २, पृ० २६५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# मुकुटोत्तरम्

[1]अलं द्विरिति सूक्ष्मं चेत्येवं श्रीमुकुटोत्तरे ।



# मुख्याम्नायक्रमः

[2]स्वीकुर्यात् सततं वस्तु यदानन्दमुखं भवेत् ।



# मूलतन्त्रम्

[3]पूर्वोक्तबिन्दुमध्यस्थाः कलाः पञ्च समुद्भवाः ।



# मृगेन्द्रोत्तरम्

( १ )

[4]अग्नीषोमात्मकावेतावाधारौ विहितौ चरौ ।
अमृतत्वाप्तये तत् स्यादग्नीषोमात्मकं यतः ॥

( २ )

[5]सहस्रद्वयविष्कम्भा दशोत्सेधा नवान्तराः ।



१. तन्त्रा०, भा० १२, आ० ३०, पृ० २०८
२. यो० दी०, पृ० २६५
३. शा० र० सं०, पृ० ४६
४. स्व० उ०, भा० १, प० ३, पृ० २०३
५. स्व० उ०, भा० ५, प० १०, पृ० ८७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# यज्ञसूत्रम्

( १ )

[1]त्रैविध्यं च चतुर्होत्रं गोदानं स्नानमित्यपि ।
वेदव्रतानि चत्वारि ... ... ... ... ... ॥...

( २ )

[2]पितृदेवमनुष्याणां भूतानां तर्पणं तथा ।
ब्रह्मणोऽध्ययनं चेति महायज्ञास्तु पञ्च वै ॥



# योगसंचारः

[3]शुद्धसंविन्मयी ग्राच्ये ज्ञाने शब्दनरूपिणी ।
करणे ग्रहणाकारा यतः श्रीयोगसंचरे ॥



# योगिनीकौलम्

( १ )

[4]नित्योदिते सहस्राणि एकविंशच्छतानि षट् ।
द्विकं दश सहस्राणि तथाष्टौ च शतानि तु ॥

---

१. स्व० उ०, भा० ५, प० १०, पृ० १६४
२. स्व० उ०, भा० ५, प० १०, पृ० १६५
३. तन्त्रा०, भा० ३, आ० ४, पृ० १३५
४. तन्त्रा० वि०, भा० ४, आ० ७, पृ० ११

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



त्रिके सप्त सहस्राणि द्विशतीत्युदयः स्मृतः ।
चतुष्के तु सहस्राणि पञ्च तुर्यशतानि तु ॥
पञ्चाक्षरे सहस्राणि चत्वारि त्रिशतोदयः ।
विंशाधिकः समाख्यातो ज्ञेयश्चोदयवाहिभिः ॥
षट्के तु त्रिसहस्राख्यः षट्शतान्तोदयः स्मृतः ।
सप्तके त्रिसहस्रं तु षडशीत्यधिकं स्मृतम् ॥

इत्यादि—

अष्टोत्तरशते चक्रे मन्त्रपिण्डाक्षरात्मके ।
द्विशतात्मा पुनः प्रोक्त उदयः सर्वसिद्धिदः ॥

( २ )

[1]पदमन्त्राक्षरे चक्रे विभागं शक्तितत्त्वगम् ।
पदेषु कृत्वा मन्त्रज्ञो जपादौ फलभाग् भवेत् ॥

## योगीश्वराचार्यः

[2]प्रकाशस्य विमर्शैक्यघनताप्रत्यभिज्ञानदार्ढ्यात् परानन्दाविर्भावः सकलीकरणम् ।

## रत्नदेवः

[3]भुक्तिर्वाप्यथ मुक्तिश्च नान्यत्रैकपदार्थतः ।
भुक्तिमुक्ती उभे देवि ! विशेषे परिकीर्तिते ॥

---

१. तन्त्रा०, भा० ४, आ० ७, पृ० ३२
२. वि० प० वि०, पृ० २१
३. म० म० प०, पृ० १३२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# (कुल)रत्नमाला (कुलागमः)

( १ )

[1]उक्तं श्रीरत्नमालायां ज्ञात्वा कालमुपस्थितम् ॥
मोक्षार्थी न भयं गच्छेत् त्यजेद् देहमशङ्कितः ।
तीर्थायतनपुण्येषु कालं वा वञ्चयेत् प्रिये ॥
अयोगिनामयं पन्था योगी योगेन वञ्चयेत् ।
वञ्चने त्वसमर्थः सन् क्षेत्रमायतनं व्रजेत् ॥

( २ )

[2]यस्य वै स्नातमात्रस्य हृत्पादौ वाथ शुष्यतः ।
धूमो वा मस्तके नश्येद् दशाहं न स जीवति ॥

( ३ )

[3]श्रीरत्नमालाशास्त्रे तु वर्णसंख्याः प्रदीपकाः ।
वर्णाश्च मुख्यपूजाया विद्याया गणयेत् सुधीः ॥

तदुक्तं तत्र—

प्रदोषे विलीने मन्त्री दीपान् दद्याद् वरानने ।
वर्णसंख्यान् वरारोहे चतुर्दिक्षु गतान् न्यसेत् ॥

( ४ )

[4]मूलदण्डं समुद्धृत्य नाभिस्थं वर्णमुद्धरेत् ।
शूलदण्डासनस्थं तु वामभूषणसंयुतम् ॥
वामजङ्घासमायुक्तं नितम्बालङ्कृतं प्रिये ।
दिव्यास्त्रमेतत् परमं नापुण्यो लभते स्फुटम् ॥

---

१. तन्त्रा०, भा० ११, आ० २८, पृ० १००-१०१
२. तन्त्रा० वि०, भा० ११, आ० २८, पृ० १०१
३. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ३९-४०
४. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १२७



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



इत्युपक्रम्य—

शिवहस्ते महेशानि ! इदं कूटं तु योजयेत् ।
यावत् स्तुभ्यत्यसौ देवि ! स्वयमेव चलत्यसौ ॥

( ५ )

[1]ततो न्यसेत्तु शिष्यस्य मालिनीं जगदम्बिकाम् ।
ज्वलज्ज्वलनसंकाशां पादाद् यावच्छिखान्तकम् ॥
नादिफान्तसमुच्चारात् पातयेद् विह्वलेन्द्रियम् ।
एषा दीक्षा महादेवी मालिनीविजये प्रिये ॥

( ६ )

[2]अधोऽवस्था यदा ऊर्ध्वं संक्रमन्ति वरानने ।
सैव मोक्षपदावस्था सैव ज्ञानस्य भाजनम् ॥
ऊर्ध्वचक्रगताऽवस्था यदाधः संभवन्ति च ।
तदा पैशाच आवेशः स वै विघ्नस्य कारणम् ॥

( ७ )

[3]दीक्षान्ते दीपकाः कार्याः पचित्वा साधकैः सह ।
चरुः प्राश्यः कुलाचार्यैर्महापातकनाशनः ॥

( ८ )

[4]उक्तं श्रीरत्नमालायामेतच्च परमेशिना ॥
अशेषतन्त्रसारं तु वामदक्षिणमाश्रितम् ।
एकत्र मिलितं कौलं श्रीषडर्धकशासने ॥
सिद्धान्ते कर्म बहुलं मलमायादिरूषितम् ।
दक्षिणं रौद्रकर्माढ्यं वामं सिद्धिसमाकुलम् ॥

---

१. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १३२
२. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १४९
३. तन्त्रा० वि०, भा० ११, आ० २९. पृ० १६८
४. तन्त्रा०, भा० १२, आ० ३७, पृ० ४००

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## रससारसंग्रहः

[1]विद्यां तु नवमीं सम्यक् प्रवक्ष्यामि समासतः ।
कीलिता या रहस्यत्वान्मादनेत्यादितः क्रमात् ॥
मादनः प्राणरूपस्तु विकासः शिव उच्यते ।
सकारस्त्वपरो ज्ञेयः संकोचः शक्तिरूपवान् ॥
संकोचः परमा शक्तिर्विकासः परमः शिवः ।
संकोचश्च विकासश्च हस इत्यक्षरद्वयम् ॥
तयोराधाररूपेण कर्तनं बिन्दुमालिनी ।
प्राणो बिन्दुरिह प्रोक्तः साहचर्यादपानके ॥
अधो धरेन्द्रमाकाशं ज्वलनं च तयोरधः ।
मायाबिन्दूर्ध्वगौ चैव वाग्भवोऽसावकीलितः ॥

## रहस्यविधिः

[2]गुरुरन्नमयीं शक्तिं बृंहिकां वीर्यरूपिणीम् ।
ध्यात्वा तया समाविष्टं तं साध्यं चिन्तयेत् सुधीः ॥
ततोऽस्य पाशवांशो यो भोगरूपस्तमर्पयेत् ।
भोक्तर्यैकात्मभावेन शिष्य इत्थं शिवीभवेत् ॥

## राजभैरवसूत्रम्

[3]पामरप्रवृत्तिः प्रमाणम् ।

---

१. ऋ० वि०, पृ० ११०; अ० र०, पृ० ११४; चि०, पृ० ३९
२. ने० उ०, भा० २, पृ० १२४
३. म० म० प०, पृ० १४६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## राजराजभट्टारकः

[1]वर्णात्मको न मन्त्रो दशभुजदेहो न पञ्चवदनोऽपि।
संकल्पपूर्वकोटौ नादोल्लासो भवेन्मन्त्रः ॥



## रात्रिकुलम्

[2]श्रीमद्रात्रिकुले चोक्तं मोक्षः शङ्कापहानितः ।
अशुद्धवासनस्यैषा मोक्षवार्ताऽपि दुर्लभा ॥



## रामकण्ठः

( १ )

[3]चित्रालोकविकल्पकल्पितनवाकल्पाङ्गनानाकृतिं
नृत्यन्तीं बहुधा बहिः स्ववपुषोऽप्यन्तर्न भिन्नां पुनः ।
नित्यं नूतनकौतुकः प्रियतमां स्वां शक्तिमालोकयन्
अच्छिन्नाप्रतिमप्रमोदमहिमा शम्भुर्जयत्येककः ॥

( २ )

[4]नित्योद्दामसमुद्यमाहृतजगद्भावोपहारार्पण-
व्यग्राभिस्तव तैजसीप्रभृतिभिर्यच्छक्तिभिस्तर्प्यते ।
तन्मांसास्रवसास्थिकूटकलिले काये श्मशानालये
रूपं दर्शय भैरवं भवनिशासंचारवीरस्य मे ॥

---

१. म० म० प०, पृ० १२२
२. तन्त्रा०, भा० ९, आ० १५, पृ० २७८
३. स्पन्द० राम०, पृ० १३४
४. पर० योग०, पृ० १४५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]समाधिवज्रेणाप्यन्यैरभेद्यो भेदभूधरः ।
परामृष्टश्च नष्टश्च त्वद्भक्तिबलशालिभिः ॥

## रुद्रयामलसारः

[2]माया विमोहिनी नाम कलायाः कलनं स्थितम् ।

## रौरववार्त्तिकम्

( १ )

[3]पुंसां सितानि कर्माणि कुर्वतामसितानि च ।
सिद्धयतः स्वर्गनिरयावत्र क्षिप्रं परापरौ ॥

( २ )

[4]योजनानां सहस्राणि समतिक्रम्य विंशतिम् ।
विद्युत्वानिति विख्यातः समुद्रे दक्षिणे स्थितः ॥
सहस्राण्यायतस्त्रीणि तावानेवोच्छ्रितोऽचलः ।
सहस्रविपुलस्तत्र तृणपर्णफलाशनाः ॥
मलोपचितदिग्धाङ्गा दीर्घश्मश्रुशिरोरुहाः ।
गोधर्माणो जना नग्ना वत्सराशीतिजीविनः ॥
तत्रायन्त्रबिलद्वारप्रवेशाः पुरसम्पदः ।

१. प्र० हृ०, पृ० ६५; स्पन्द० राम०, पृ० १३५
२. ई० प्र० वि० वि०, भा० ३, पृ० २८५
३. तन्त्रा० वि०, भा० ५, आ० ८, पृ० ७०
४. तन्त्रा० वि०, भा० ५, आ० ८, पृ० ७६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[१]आवृत्त्याण्डं स्थिता ह्येते मधु यद्वन्मधुव्रताः ।
कदम्बकुसुमं यद्वत् केसरैः परिवारितम् ॥...
पञ्चाशीतिर्योजनानां नियुतानां तथा परा ।
कोटिश्च तन्निवेशस्य विस्तारः परिकीर्तितः ॥...
श्रीकण्ठाधिष्ठितास्ते च देवानां मनसेप्सितम् ।
ऐश्वर्यं संप्रयच्छन्ति हरन्ति च महौजसः ॥



## रौरवसंग्रहः

( १ )

[२]ततोऽधिष्ठाय विद्येशो मायां स परमेश्वरः ।
क्षोभयित्वा स्वकिरणैरसृजत् तैजसीं कलाम् ॥
कलातत्त्वाद् रागविद्ये द्वे तत्त्वे संबभूवतुः ।
अव्यक्तं च ततस्तस्माद् गुणांश्चाप्यसृजत् प्रभुः ॥

( २ )

[३]क्रोधेशश्चण्डसंवर्तौ ज्योतिः पिङ्गलसूरकौ ।
पञ्चान्तकैकवीरौ च शिखी देशहितेश्वराः ॥

( ३ )

[४]अथात्ममलमायाख्यबन्धत्रयनिवृत्तये ।
व्यक्तये तु शिवत्वस्य शिवाज्ज्ञानं प्रवर्तते ॥



---

१. तन्त्रा० वि०, भा० ५, आ० ८, पृ० १३२
२. तन्त्रा० वि०, भा० ६, आ० ९, पृ० ४१
३. स्व० उ०, भा० ५, प० १०, पृ० ४०२
४. ई० प्र० वि० वि०, भा० २, पृ० ३०५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# रौरवागमः

( १ )

[1]सृष्टिसंरक्षणादानभावानुग्रहकारिणः ।

( २ )

[2]वामादिशक्तिभिर्युक्तः शिवेच्छाविधिचोदितः ॥
विद्याराजाधिराजेशो मायां विक्षोभ्य मन्त्रराट् ॥
कलामुत्पादयामास .... ... ... .... .... ... ।

( ३ )

[3]कलातत्त्वाद् रागविद्ये द्वे तत्त्वे संबभूवतुः ।
अव्यक्तं च ततः... ... ... ... ... ... ...॥

( ४ )

[4]दीक्षापूता गणपतिगुरोर्मण्डले जन्मवन्तः
सिद्धा मन्त्रैस्तरुणदिनकृन्मण्डलोद्भासिदेहाः ।
भुक्त्वा भोगान् सुचिरममरस्त्रीनिकायैरुपेताः
स्वस्तोत्कण्ठाः शिवपदपरैश्वर्यभाजो भवन्ति ॥

( ५ )

[5]अनन्तः परमेतेषां महतां चक्रवर्तिनाम् ।
विहितं सर्वकर्तृत्वकारणं परमं पदम् ॥

१. त० प्र०, पृ० १०
२. त० प्र०, पृ० ३६
३. त० प्र०. पृ० ३९, भो० का०, पृ० ५३; तन्त्रा० वि०, भा० ६. आ० ९, पृ० १७४
४. त० सं०, पृ० ३५; मृ० वृ० वि०, पृ० ५९; क्रि०, पृ० ११९
५. त० सं० पृ० ४०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ६ )

[१]मायोपरि महामाया

( ७ )

[२]शिवतत्त्वं परं ह्येकम्

( ८ )

[३]सर्वाञ्जनविनिर्मुक्तं शिवशक्तिकलोत्थितम् ।
आत्मतत्त्वमिदं शुद्धं साधकानां प्रकीर्तितम् ॥
तत्स्थो लीनः स्वतत्त्वेन तां कलां चिन्तयेद् बुधः ।

( ९ )

[४]यां सांख्ययोगविद्वांसो गतिं मोहात् प्रपेदिरे ।
वेदान्तज्ञानविद्वांसो गतिमिच्छन्ति वैदिकीम् ॥
पाञ्चरात्ररता ये च ये च योगिमहेश्वराः ।
प्रमाणाग्नेयकर्तृत्वविशिखामलकारकाः ॥
प्रवदन्ति मलासिद्धा ये चान्ये मोक्षवादिनः ।

( १० )

[५]सर्वज्ञः सर्वकर्ता च शिवशक्तिसमन्वितः ।

( ११ )

[६]अग्निरूपाः स्मृता मन्त्रा यजमानेच्छया स्थिताः ।
सर्वान् कामान् प्रयच्छन्ति त्रैलोक्ये दुर्लभानपि ॥

---

१. त० सं०, पृ० ४२; मृ० वृ० वि०, पृ० २७२
२. त० सं०, पृ० ४४
३. मो० का०, पृ० ४७; त० सं०, पृ० ३०
४. प० का०, पृ० १
५. न० प०, पृ० १०३
६. मृ० वृ० क्रि०, पृ० ८१

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १२ )

[1]सव्यं प्रक्षाल्य हस्तं तु कृत्वा गन्धाद्यलङ्कृतम् ।
न्यसेद् ब्रह्माणि शाखासु पञ्च पञ्चस्वनुक्रमात् ॥
गन्धमण्डलकं कृत्वा वामाङ्गुष्ठेन मध्यतः ।
विन्यसेत् तत्र देवेशं विद्यादेहं परं शिवम् ॥
पूजयेदर्घ्यपाद्यैस्तु गन्धधूपपवित्रकैः ।
ब्रह्मपञ्चकसंयुक्तः शिवेनाधिष्ठितः स्वयम् ।
पाशच्छेदकरः क्षौमी शिवहस्त इति स्मृतः ॥

( १३ )

[2]अनेनालब्धमात्रस्तु देही निर्मुक्तबन्धनः ।
प्रयाति शिवसायुज्यं निर्मलो विगतज्वरः ॥

( १४ )

[3]आसनं विभजेन्मन्त्री क्रमशः पद्ममुद्रया ।

( १५ )

[4]अथात्ममलमायाख्य··· ··· ··· ··· ··· ···।

( १६ )

[5]यजन्ति विविधैर्यज्ञैर्मन्त्रतत्त्वविशारदाः ।
गुरुतन्त्राद्यनुज्ञातदीक्षासिच्छिन्नसंशयाः ॥····
न मीमांस्या विचार्या वा मन्त्राः स्वल्पधिया नरैः ।
प्रमाणमागमं कृत्वा श्रद्धातव्या विचक्षणैः ।
सर्वे मन्त्रात्मका देवाः सर्वे मन्त्राः शिवात्मकाः ।
शिवात्मकमिदं ज्ञात्वा शिवमेवानुचिन्तयेत् ॥

---

१. मृ० वृ० क्रि०, पृ० ९०
२. मृ० वृ० क्रि०, पृ० १०४
३. स्व० उ०, भा० १, प० २, पृ० ४९
४. ई० प्र० वि० वि०, भा० ३, पृ० २७८
५. तन्त्रा० वि०, भा० १, आ० १, पृ० ८४–८५; त० सं०, पृ० ३१



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १७ )

[1]नरकाणामधः पूर्वं व्यक्तिरस्योपजायते ।
सर्वस्थानोऽपि संस्तस्माद्धःस्थ इव लक्ष्यते ॥

( १८ )

[2]प्रतिलोके नियुक्तात्मा श्रीकण्ठो भगवानसौ ।
करोति हाटको भूत्वा पातालद्वारपालनम् ॥
हठेन भङ्क्त्वा यन्त्राणि पातालेषु महोद्याः ।
सिद्धीरभ्यस्तसन्मन्त्रान् साधकांल्लम्भयत्यसौ ॥

( १९ )

[3]युक्ता वर्णाश्रमाचारैः कुमार्याख्ये परं प्रजाः ।
इतरे म्लेच्छभूयिष्ठाः प्रभूतमणिकाञ्चनाः ॥



## रौरवागमवृत्तिः

( १ )

[4]देवानां यदहोरात्रं मानुषाणां स हायनः ।
शतत्रयेण षष्ट्या च नृणां विबुधवत्सरः ॥

( २ )

[5]कलादिभिरेव शुद्धैस्तत् शुद्धं द्रष्टव्यमित्यभिप्रायतोऽनभिधानं नाभावात् ।



---

१. तन्त्रा० वि०, भा० ४, आ० ६ पृ० १२३
२. तन्त्रा० वि०, भा० ५, आ० ८, पृ० ३०
३. तन्त्रा० वि०, भा० ५, आ० ८, पृ० ६६
४. तन्त्रा०, भा० ४, आ० ६, पृ० ११७
५. तन्त्रा० वि०, भा० ६, आ० ९, पृ० १७०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## लक्षणसारः

( १ )

[1]अनेन हेतुना सर्वपापविध्वंसकारिणा ।
समस्ताज्ञासिद्धिदेहदायिना तर्पयेज्जगत् ॥

( २ )

[2]अर्घाम्बसलिलं पात्रं सहेतु दत्तपुष्पकम् ।
समन्त्रं नेत्रपात्रेण त्रिधा शान्तिबलिं भजेत् ॥
मुक्तकेनालिवर्णेन सर्वविघ्नविनाशिना ।
सर्वसिद्धिप्रदेनैव ध्यात्वा भूतादिवेष्टितम् ॥

( ३ )

[3]जातवेदसि भूतेशे यातुधाने समीरणे ।
देवीमौलौ चतुर्दिक्षु क्रमाद् हृदादिकं यजेत् ॥

( ४ )

[4]कृतमण्डलपर्यन्ते हेतोर्यजनमारभेत् ।
पशुवेश्मोषिताशुद्धिशोधनायामृताय च ॥



## लक्ष्मीकौलार्णवः

( १ )

[5]अद्वैतत्वात् सुरेशानि ! भैरवो गीयते भुवि ।
न तु दंष्ट्राकरालत्वात् तस्मात् सौम्यं विचिन्तयेत् ॥

---

१. ऋ० वि०, पृ० १३५
२. ऋ० वि०, पृ० १४०-१४१
३. ऋ० वि०, पृ० २२५
४. ऋ० वि०, पृ० २२५
५. स्व० उ०, भा० १, प० २, पृ० ५३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]शशिमार्गेण शिष्याणां सूर्यस्थः प्रविशेद् हृदि ।

( ३ )

[2]द्वारत्रयं पिधातव्यं पश्चिमं न पिधापयेत् ।
तच्च पूर्वं विजानीयाद् देव्या देवस्य संमुखम् ॥
पूर्वं तु पश्चिमं ज्ञेयं पश्चिमं पूर्वसंज्ञितम् ।
उत्तरं दक्षिणं ज्ञेयं दक्षिणं चोत्तरं तथा ॥
सामान्यः सर्वमन्त्राणां क्रमोऽयं शिवभाषितः ।
गोपनीयः प्रयत्नेन शिष्याणां दुष्टचेतसाम् ॥



## लक्ष्मीसंहिता

[3]स्वस्थचेष्टाश्च ये मर्त्याः स्मरन्ति मम नारद ।
काष्ठपाषाणतुल्यांस्तानन्तकाले स्मराम्यहम् ॥
स्थिरे चेतसि सुस्वस्थे शरीरे सति यो नरः ।
धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामकम् ॥
ततस्तु म्रियमाणं तं काष्ठपाषाणसंनिभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥



## लघुचर्चाकुलम्

[4]परमानन्दमद्येन यस्य चोन्मत्तता भवेत् ।
तन्मद्यं योगिभिः सेव्यं न मद्यं गौडपिष्टजा ॥

---

१. स्व० उ०, भा० २, प० ४, पृ० ६४
२. स्व० उ०, भा० ३, प० ५, पृ० २२
३. पर० योग०, पृ० १६४
४. ज्ञा० वि०, प० २० क

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



अक्षजं च पशुं हत्वा ज्ञानखड्गेन योगवित् ।
भक्षयेदक्षजं मांसं न मृगं मेषछागजम् ॥



## ललिता

[1]नहि दीक्षासमं किञ्चित्‌… … … … …।



## लाद्यादिशास्त्रम्

[2]सा तु सप्तदशी देवी हकारार्धार्धरूपिणी ।



## लिङ्गोद्भवम्

[3]अथ दृष्ट्वा कलावर्णमृग्यजुःसामरूपिणम् ।
ईशानमीशमकुटं पुरुषाख्यं पुरातनम् ॥
अघोरहृदयं हृद्यं वामगुह्यं सदाशिवम् ।
सद्यःपादं महादेवं महायोगीन्द्रभूषणम् ॥
निष्कलं सूक्ष्ममव्यक्तं सकलं च महेश्वरम् ।
सर्गप्रतिष्ठासंहारलीलार्थं लिङ्गरूपिणम् ॥
प्रधानं लिङ्गमाख्यातं लिङ्गी च परमेश्वरः ।



---

१. ई० प्र० वि० वि०, भा० ३, पृ० ३२६
२. परा० अभि०, पृ० २०१
३. त० व्या० कु०, पृ० ४३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## लीलाकारः

[१]केवलमित्यपि केचिल्लोकालोकान्तरे रविर्न बहिः।



## वरुणपद्धतिः

[२]क्रियया वाऽथ शक्त्या वा दीक्षा सा सर्वतो मता।
दीक्षया मुच्यते देही त्रिविधाद् भवबन्धनात् ॥



## वाद्यतन्त्रम्

[३]संरुध्य रश्मिचक्रं स्वं पीत्वाऽमृतमनुत्तमम्।
कालोभयापरिच्छिन्नं वर्तमाने सुखी भवेत् ॥



## वामननाथः ( वामनदत्ताचार्यः )

( १ )

[४]आलम्ब्य संविदं यस्मात् संवेद्यं न स्वभावतः।
तस्मात् संविदितं सर्वमिति संविन्मयो भवेत् ॥

( २ )

[५]यत्रेन्धनं द्वैतवनं मृत्युरेव महापशुः।
अलौकिकेन यज्ञेन तेन नित्यं यजामहे ॥



---

१. तन्त्रा०, भा० ५, आ० ८, पृ० ८१
२. श० र० सं०, पृ० ६९
३. परा० अभि०, पृ० ३५
४. स्पन्द० क्षेम०, पृ० ४८
५. पर० योग०, पृ० १४६; म० म० प०, पृ० १०९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## वार्त्तिककारः

( १ )

[1]...... परेण रूपेण निर्विशेषास्त्रयोऽप्यमी ।
महान्पयोनियोगित्वाद् विशिष्यन्ते परस्परम् ॥

( २ )

[2]अनन्तो परमे स्थानं तत्तु सूक्ष्मोऽधितिष्ठति ।
पदात्पदं विचरतो ह्येकैकस्य महात्मनः ॥
स्थाने शिखण्डिनस्त्वन्यं रुद्राणां कुरुते शिवः ।

## विद्याधिपतिः

[3]स्वतन्त्रः शक्तिपातोऽसौ शैवः पशुविमोक्षकृत् ।
सापेक्षत्वे हि तस्य स्यादशक्तः परमेश्वरः ॥

## विवेकाञ्जनम् ( दिवाकरवत्सस्य )

[4]प्रकाशश्चैव भावानाम् ... ... ... ... ... ।
... ... ... ... न शापोक्त्या विलीयते ॥

१. मो० का०, पृ० ४२
२. मो० का०, पृ० ४९
३. मो० का०, पृ० ३७
४. ई० प्र० वि०, भा० १, पृ० २४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# विश्वसारोत्तरसूत्रम्

( १ )

[१]अचेतनस्य मायादेः प्रवर्तकतया पतिः ।
सिद्धः सर्वार्थवित् कर्ता व्यापकः सततोदितः ॥

( २ )

[२]वागीश्वरी च शुद्धाध्वमूलोपादानकारणम् ।
नोपादानं विना कार्यं कदाचिदुपलभ्यते ॥

( ३ )

[३]याऽथ कुण्डलिनी शक्तिर्मायाकर्मानुसारिणी ।
नादबिन्द्वादिकं कार्यं तस्या इति जगत्स्थितिः ॥

( ४ )

[४]तस्याश्चतस्रो वाग्रूपा वृत्तयो वैखर्यादयः ।
वैखरी मध्यमा चान्या पश्यन्ती सूक्ष्मसंज्ञिता ॥



# विंशतिकत्रिकम्

[५]मन्त्रचक्रोदयज्ञस्तु विद्याचक्रोदयार्थवित् ।
क्षिप्रं सिद्ध्येदिति प्रोक्तं श्रीमद्विंशतिके त्रिके ॥



---

१. श० र० सं०, पृ० १५
२. श० र० सं०, पृ० ४०
३. श० र० सं०, पृ० ४१
४. श० र० सं०, पृ० ४५
५. तन्त्रा०, भा० ४, आ० ७, पृ० ४३-४४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## वीरनागः

[1]तदुत्पत्तिर्हेतोः स्थितिरपि निजप्रत्ययबलाद्
जरा कालात् ... ... ... ... ... ... ... ।



## वीरावलीशास्त्रम्

( १ )

[2]श्रीमद्वीरावलौ चोक्तं बोधमात्रे शिवात्मके ।
चित्तप्रलयबन्धेन प्रलीने शशिभास्करे ॥
प्राप्ते च द्वादशे भागे जीवादित्ये स्वबोधके ।
मोक्षः स एव कथितः प्राणायामो निरर्थकः ॥
प्राणायामो न कर्तव्यः शरीरं येन पीड्यते ।
रहस्यं वेत्ति यो यत्र स मुक्तः स च मोचकः ॥

( २ )

[3]ऋषिभिर्भक्षितं पूर्वं गोमांसं च नरोद्भवम् ।...
यद्द्रव्यं लोकविद्विष्टं यच्च शास्त्रबहिष्कृतम् ॥
यज्जुगुप्सं च निन्द्यं च वीरैराहार्यमेव तत् ॥...
न चर्या भोगतः प्रोक्ता या ख्याता भीमरूपिणी ।
स्वचित्तप्रत्यवेक्षातः स्थिरं किं वा चलं मनः ॥...

१. ई० प्र० वि० वि०, भा० २, पृ० १९७
२. तन्त्रा०, भा० ३, आ० ४, पृ० ९५-९६
३. तन्त्रा० वि०, भा० ३, आ० ४, पृ० २६८-२६९



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]सितासितौ च यौ पक्षौ दीर्घह्रस्वौ च कीर्तितौ ।
धर्माधर्ममयौ पाशौ महाघोरौ भयानकौ ॥
द्वयोर्यत्र भवेच्छेदः क्षयेन्माया तु योगिनी ।
क्षये शून्यं परं ज्ञेयं दीक्षा ह्येषा प्रकीर्तिता ॥
नान्यथा भवते दीक्षा रजसां पातने न तु ।
नैव शास्त्रैर्भवेन्मुक्तिर्यजने नैव याजने ॥
एषा ब्रह्मविदां दीक्षा नान्यथा तु वदाम्यहम् ।...
सितासितौ कथिष्यामि नामपर्यायवाचकैः ॥...
अहः शुक्लस्तथा प्राणः ... ... ... ...
अधर्मश्च क्षपा चैव ... ... ... ... ... ॥
क्रूरकर्माणि तत्रैव कुर्वन् सिद्धिमवाप्नुयात् ।
शुभकर्माणि कृष्णे च न च सिद्ध्यन्ति सुव्रते ॥...
तदारभ्य च कर्माणि शुभान्याभ्युदयानि च ।
ध्यानमन्त्राभियुक्तस्य सिद्ध्यन्ते नात्र संशयः ॥

( ४ )

[2]श्रीवीरावलिहृदये सप्त स्थानानि शक्तिकमलयुगम् ।
सुरपथचतुष्पथाख्यश्मशानमेकान्तशून्यवृक्षौ च ।
इति निर्वचनगुणस्थित्युपचारदृशा विबोध एवोक्तः ॥

( ५ )

[3]नान्यत्र गत्या मोक्षोऽस्ति सोऽज्ञानग्रन्थिकर्तनात् ।
तच्च संविद्विकासेन श्रीमद्वीरावलीपदे ॥

---

१. तन्त्रा० वि० भा० ४, आ० ६, पृ० ६६-६७
२. तन्त्रा०, भा० ९, आ० १५, पृ० ५३
३. तन्त्रा०, भा० ९, आ० १५, पृ० ५६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ६ )

[1]उक्तः स योगिनीभूः स्वयमेव ज्ञानभाजनं रुद्रः।
श्रीवीरावलिशास्त्रे बालोऽपि च गर्भगो हि शिवरूपः॥
आदीयते यतः सारं तस्य मुख्यस्य चैष यत्।
मुख्यश्च यागस्तेनायमादियाग इति स्मृतः॥

( ७ )

[2]एष ते कौलिको यागः सद्यो योगविभूतिदः।
आख्यातः परमो गुह्यो द्वैतिनां मोहनः परम्॥
वीराणां दुःखसुखदं लीलया भुक्तिमुक्तिदम्।
योगसन्धाप्रयोगेण पूजाह्वि हवनं स्मृतम्॥
पशुमार्गस्थितानां तु मूढानां पापकर्मणाम्।
अप्रकाश्यं सदा देवि! यथा किञ्चिन्महाधनम्॥
न चात्र परमो यागः स्वभावस्थो महोदयः।
न कुण्डं नाग्नियजनं नाहुत्याचारमण्डलम्॥
आवाहनं न चैवात्र न चैवात्र विसर्जनम्।
न मूर्तियागकरणं नान्यदासनमेव च॥
व्रतचर्याविनिर्मुक्तं बहिर्द्रव्यविवर्जितम्।
स्वानन्दामृतसम्पूर्णं महदानन्दसिद्धिदम्॥
केवलं चात्मसत्तायां सर्वशक्तिमयं शिवम्।
सर्वाकारं निराकारमात्मयोनिं परापरम्॥
भावयेत् तन्महायोगी पूजयेच्चक्रनायकम्।
एतद् रहस्यं परमं गुह्यं चोत्तमयोजितम्॥
संस्फुरत्कौलिकाम्नायं त्वत्स्नेहादद्य योजितम्।
सुगुप्तं कारयेन्नित्यं न देयं वीरवत्सले!॥

---

१. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ११२
२. तन्त्रा० वि०, भा० ११, आ० २९, पृ० ११३-११४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



द्वैतिनां स्वल्पबुद्धीनां लोभोपहतचेतसाम् ।
मायिनां क्रूरसत्त्वानां जिज्ञासूनां न चैव हि ॥
पृथिवीमपि यो दत्त्वा मूकवत् क्ष्मातले वसेत् ।
तदा सिद्धयति मन्त्रज्ञः सिद्धमेलापकं लभेत् ॥
सर्वामयविनिर्मुक्तो देहेनानेन सिद्धयति ।
अनेन योगमार्गेण नानृतं प्रवदाम्यहम् ॥

( ८ )

[1]षट्कं कारणसंज्ञं यत् तथा यः परमः शिवः ।
साकं भैरवनाथेन तदष्टकमुदाहृतम् ॥
प्रत्येकं तस्य सार्वात्म्यं पश्यंस्तां वृत्तिमात्मगाम् ।
चक्षुरादौ संक्रमयेद् यत्र यत्रेन्द्रिये गुरुः ॥
स एव पूर्णैः कलशैरभिषेकः परः स्मृतः ।
विना बाह्यैरपीत्युक्तं श्रीवीरावलिभैरवे ॥

( ९ )

[2]श्रीमद्वीरावलिकुले तथा चेत्थं निरूपितम् ।
अभेद्यं सर्वथा ज्ञेयं मध्यं ज्ञात्वा न लिप्यते ॥
तद्विभागक्रमे सिद्धः स गुरुर्मोचयेत् पशून् ।



## वृत्तिकारः

( १ )

[3]दीक्षायान्ते हि क्व संभवन्ति ।

---

१. तन्त्रा०, भा० ११, आ० २९, पृ० १४६
२. तन्त्रा०. भा० ११, आ० २९, पृ० १६२
३. प० का० , पृ० १६-१७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]शिवश्चात्मनः समानजातीयः ।

( ३ )

[2]किमर्थमाक्षेपः, उपादानेषु लीनानां पुनरावर्तनमिति ।

## व्यासाक्षिणी

[3]परमशिवः सिद्धान् प्रत्युपरताधिकारोऽप्यन्येष्वनुपरताधिकारः सिद्धः । पुनरेकान्तेन सर्वत एवोपरताधिकार इति भेद इति ।

## शम्भुभट्टारकः

[4]एको भावः सर्वभावस्वभावः सर्वे भावा एकभावस्वभावाः ।
एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः ॥

## शिवतनुशास्त्रम् (बृहस्पतिपादकृतिः)

( १ )

[5]विश्वं बिभर्ति पूरणधारणयोगेन तेन च ध्रियते ।
सविमर्शतया स्वरूपतश्च संसारभीरुहितकृच्च ॥
संसारभीतिजनिताद्रवात्परामर्शतोऽपि हृदि जातः ।
प्रकटीभूतं भवभयविमर्शनं शक्तिपाततो येन ॥

---

१. प० का०, पृ० ५६
२. प० का०, पृ० ६०
३. प० का०, पृ० ७
४. पर० योग०, पृ० ५८-५९
५. तन्त्रा०, भा० १, आ० १; पृ० १३९-१४६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



नक्षत्रप्रेरककालतत्त्वसंशोषकारिणो ये च ।
कालग्राससमाधानरसिकमनस्सु तेषु च प्रकटः ॥
संकोचिपशुजनभिये यासां रवणं स्वकरणदेवीनाम् ।
अन्तर्बहिश्चतुर्विधखेचर्यादिकगणस्यापि ॥
तस्य स्वामी संसारवृत्तिविघटनमहाभीमः ।
भैरव इति गुरुभिरिमैरन्वर्थैः संस्तुतः शास्त्रे ॥
हेयोपादेयकथाविरहे स्वानन्दघनतयोच्छलनम् ।
क्रीडा सर्वोत्कर्षेण वर्तनेच्छा तथा स्वतन्त्रत्वम् ॥
व्यवहरणमभिन्नेऽपि स्वात्मनि भेदेन संजल्पः ।
निखिलावभासनाच्च द्योतनमस्य स्तुतिर्यतः सकलम् ॥
तत्प्रवणमात्मलाभात् प्रभृति समस्तेऽपि कर्तव्ये ।
बोधात्मकः समस्तक्रियामयो दृक्क्रियागुणश्च गतिः ॥

( २ )

[1]अष्टानां देवानां शक्त्याविर्भावयोनयो ह्येताः ॥
तनुभोगाः पुनरेषामधः प्रभूतात्मकाः प्रोक्ताः ।
चत्वारिंशत्तुल्योपभोगदेशाधिकानि भुवनानि ॥
साधनभेदात् केवलमष्टकपञ्चकतयोक्तानि ।
एतानि भक्तियोगप्राणत्यागादिगम्यानि ॥
तेषूमापतिरेव प्रभुः स्वतन्त्रेन्द्रियो विकरणात्मा ।
तरतमयोगेन ततोऽपि देवयोन्यष्टकं लक्ष्यं तु ॥
लोकानामक्षाणि च विषयपरिच्छित्तिकरणानि ।
गन्धादेर्महदन्तादेकाधिक्येन जातमैश्वर्यम् ॥
अणिमाद्यात्मकमस्मिन् पैशाचाद्ये विरिञ्चान्ते ।

यदुक्तं तत्रैव —

...........इच्छाधीनानि पुनर्विकरणसंज्ञानि ।

---

१. तन्त्रा० वि०, भा० ५, आ० ८, पृ० १६०-१६२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ३ )

[1]योनीरतीत्य गौणे स्कन्धे स्युर्योगदातारः ।
अकृतकृतविभुविरिञ्चा हरिर्गुहः क्रमवशात्ततो देवी ॥
करणान्यणिमादिगुणाः कार्याणि प्रत्ययप्रपञ्चश्च ।
अव्यक्तादुत्पन्ना गुणाश्च सत्त्वादयोऽमीषाम् ॥
धर्मज्ञानविरागानैश्वर्यं तत्फलानि विविधानि ।
यच्छन्ति गुणेभ्योऽमी पुरुषेभ्यो योगदातारः ॥
तेभ्यः परतो भुवनं सत्त्वादिगुणासनस्य देवस्य ।
सकलजगदेकमातुर्भर्तुः श्रीकण्ठनाथस्य ॥
येनोमागुहनीलब्रह्मार्कभुक्षकृताकृतादिभुवनेषु ।
ग्रहरूपिण्या शक्त्या प्राभ्व्याधिष्ठानि भूतानि ॥
उपसंजिहीर्षुरिह यश्चतुराननपङ्कजं समाविश्य ।
दग्ध्वा चतुरो लोकाञ्जनलोकान्निर्मिणोति पुनः ॥
यस्येच्छातः सत्त्वादिगुणशरीरा विसृजति रुद्राणी ।
अनुकल्पो रुद्राण्या वेदी तत्रेज्यतेऽनुकल्पेन ॥
पशुपतिरिन्द्रोपेन्द्रविरिञ्चैरथ तदुपलम्भतो देवै ।
गन्धर्वयक्षराक्षसपितृमुनिभिश्चित्रितास्तथा यागाः ॥....
गहनं पुरुषनिधानं प्रकृतिर्मूलं प्रधानमव्यक्तम् ॥
गुणकारणमित्येते मायाप्रभवस्य पर्यायाः ।
यावन्तः क्षेत्रज्ञाः सहजागन्तुकमलोपदिग्धचितः ।
ते सर्वेऽत्र विनिहिता रुद्राश्च तदुत्थभोगभुजः ।
मूढविवृत्तविलीनैः करणैः केचित्तु विकरणकाः ॥
अकृताधिष्ठानतया कृत्याशक्तानि मूढानि ।
प्रतिनियतविषयभाञ्जि स्फुटानि शास्त्रे विवृत्तानि॥

१. तन्त्रा०, भा० ५, आ० ८, पृ० १८३-८८

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



भग्नानि महाप्रलये सृष्टौ नोत्पादितानि लीनानि ।
इच्छाधीनानि पुनर्विकरणसंज्ञानि कार्यमप्येवम् ॥

( ४ )

[1] भगविलसहस्रकलितं गुहाशिरो यत् प्रपञ्चसर्वगतम् ।...
तत्रानघप्रभावः प्रथमश्चक्राधिपो महातेजाः ।
वामो नाम्ना बलवान् द्वितीयचक्राधिपो रुद्रः ॥
चक्रं भवोद्भवाख्यस्तृतीयमधितिष्ठति स्ववीर्येण ।
प्रभुरेकपिङ्गचक्षुश्चक्रस्य पतिश्चतुर्थस्य ॥
ईशान इति प्रथितो यच्चक्रं पञ्चमं प्रवर्तयति ।
षष्ठस्याधिष्ठाता भुवनेशो भुवनचक्रस्य ॥
प्रथितः पुरःसराख्यो यः सप्तमचक्रनायको देवः ।
अङ्गुष्ठमात्रनामा पतिरष्टमभुवनचक्रस्य ॥

( ५ )

[2] वामस्य ततो भुवनं तस्माद् भैमं ततोऽपि चोग्रस्य ।
तस्माद् भवस्य भवनं तदुपरि शर्वस्य देवस्य ॥....
तस्माद् गुणैर्विचित्रैर्भुवनवरं चैकवीरस्य ।....
अपरिमितगुणनिधानं भुवनवरं तदुपरि प्रचण्डस्य ।
यत्र प्रचण्डनामा स्थितोऽनुशास्त्येकवीरादीन् ॥

( ६ )

[3] ज्ञातज्ञेया विप्राः कापालव्रतभृतो विगतसङ्गाः ।
भस्मोपलेपनिष्ठा व्रजन्ति वामस्य सायुज्यम् ॥
उपलब्धवेदनीया अतिभीमपदेप्सवो निजशिरोभिः ।
स्वयमुल्लूनैरिष्ट्वा भैमं गच्छन्ति तद् धाम ॥

---

१. तन्त्रा० वि०, भा० ५, आ० ८, पृ० २०५-२०६
२. तन्त्रा० वि० भा० ५, आ० ८, पृ० २०७
३. तन्त्रा० वि०, भा० ५, आ० ८, पृ० २०८-२१४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



विहितोग्रयोगविधयो ये धीरा दुष्करे तपस्युग्रे ।
ध्यायन्त्युग्रमजस्रं तेऽपि लभन्ते गुणानौग्रान् ॥
विज्ञाय भवं देवं भीतानामभयदानसंसिद्धाः ।
भवपदमारोहन्तो ध्यानाहितचेतसो विप्राः ॥
स्रग्वस्त्रालङ्कारैरभिरामं रूपमात्मनः कृत्वा ।···
असिधाराव्रतनिष्ठाः पूर्वपदं ध्यायिनो यान्ति ॥
अव्यक्तमधिष्ठाय प्रकरोति जगद् यतः स देवेशः ।
संसारमहाविवरे पर्यस्तांस्त्रायते च यतः ॥
शिवयोगबलोपेतस्तस्मात् पत्युर्नियोग आसीनः ।
शुद्धाशुद्धस्त्रोतोऽधिकारहेतुः शिवो ज्ञेयः ॥···
परतो गुहा भगवती जगतामुत्पत्तिकारणं माया ।
यस्यां स्थितिमनुभूय प्रविलयीन्ते पुनर्लोकाः ॥···
··· ··· ··· ··· कारणमापूरकं च तस्यैव ।

( ७ )

[1]तस्मिन्नुदितमुदारं शाङ्करमारोहति प्रभौ धाम ।
निर्वान्ति मन्त्रकोट्योऽनेकाः परिहार्य कार्यत्वम् ॥···
तत्रोपरतेऽनन्ते परिपाट्या नायकास्तदधिकारम् ।
कुर्वन्ति सञ्चरन्तः पदात् पदं शासनात् पत्युः ॥
उपरमति पतिरनन्तस्तत्पदमधितिष्ठति प्रभुः सूक्ष्मः ।
सूक्ष्मपदमपि शिवोत्तम एष विधिः सर्वमन्त्राणाम् ॥
वामाद्यान्नव विभवान्भगवान्निजतेजसः समुद्योत्य ।
अनुगृह्याणुमपूर्वं स्थापयति पतिः शिखण्डिनः स्थाने ॥

( ८ )

[2]तस्मात् सर्वगतात्मा तेभ्यस्त्वन्या विभात्यनन्येव ।
संसाराङ्कुरकारणमाणवं चेतसोऽशुद्धिः ॥

---

१. तन्त्रा० वि०, भा० ५, आ० ८, पृ० २३३
२. तन्त्रा० वि०, भा० ६, आ० ९, पृ० १६६



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ९ )

[1]विज्ञानामृतसरिता शिवशशिनः स्पन्दमानयाऽमलया।
प्रप्लाव्य यतस्तेभ्यो निरस्यतेऽधस्ततः साऽन्या ॥
श्लिष्टा यस्मादात्मस्वनादिकालानुबन्धिनी चितिवत्।
वृत्त्याऽनुरञ्जयन्ती तस्मात् प्रतिभात्यनन्यैव ॥
एवं महता तमसा सहजेनाविद्धचेतसः पुंसः।
परमेश्वराद् गुहातः प्रवर्तते कञ्चुकत्रिविधः ॥

( १० )

[2]मायाबिलमिदमुक्तं परतस्तु गुहा जगद्योनिः।
उत्पत्त्या तेष्वस्याः पतिशक्तिक्षोभमनुविधीयमानेषु ॥
योनिविवरेषु नानाकामसमृद्धेषु भगसंज्ञा।

( ११ )

[3]भगबिलशतकलितगुहामूर्धासनगोऽष्टशक्तियुग् देवः।
गहनाद्यं निरयान्तं सृजति च रुद्रांश्च विनियुङ्क्ते ॥
उद्धरति मनोन्मन्या पुंसस्तेष्वेव भवति मध्यस्थः।
ते तेनोदस्तचितः परतत्त्वालोचनेऽभिनिविशन्ते ॥
स पुनरधःपथवर्तिष्वधिकृत एवाणुषु शिवेन।
अवसितपतिविनियोगः सार्धमनेकात्ममन्त्रकोटीभिः ॥
निर्वात्यनन्तनाथस्तद्धामाविशति सूक्ष्मरुद्रस्तु।
अनुगृह्याणुमपूर्वं स्थापयति पतिः शिखण्डिनः स्थाने ॥
इत्यष्टौ परिपाट्या यावद् धामानि यान्ति गुरुरेकः।
तावदसंख्यानां जन्तूनां निर्वृतिं कुरुते ॥

---

१. तन्त्रा० वि०, भा० ६, आ० ९, पृ० १६७
२. स्व० उ०, भा० ५, प० १०, पृ० ४७४
३. स्व० उ०, भा० ५, प० १०, पृ० ४९४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



तेऽष्टावपि शक्त्यष्टकयोगामलजलरुहासीनाः।
आलोचयन्ति देवं हृदयस्थं कारणं परमम्॥
ते भगवन्तमनन्तं ध्यायन्तः स्वहृदि कारणं शान्तम्।
सप्तानुध्यायन्त्यपि मन्त्राणां कोटयः शुद्धाः॥

( १२ )

[1]पञ्चत्रिंशत्तत्त्वी शिवनाथस्यैव शक्तिरुक्तेयम्।
तत्र चतस्रस्तु परा अन्त्यं वै पञ्चविंशकं स्थूलाः॥
मध्यास्तु सूक्ष्मरूपाः शक्तय इह साञ्जनास्तु परम्।



## शिवधर्मः

( १ )

[2]शिवस्य परिपूर्णस्य किं नाम क्रियते नरैः।
यत्कृतं शिवभक्तेषु तत्कृतं तु शिवे भवेत्॥

( २ )

[3]आगमत्वेऽपि सामान्ये कः प्रद्वेषः शिवागमे।
अनायासेन यत्रोक्ता मुक्तिरेकेन जन्मना॥



## शिवधर्मोत्तरम्

( १ )

[4]जगतस्तत्त्वसंबोधादज्ञानं विनिवर्तते।
अज्ञानविनिवृत्तौ च रागादीनामसम्भवः॥

---

१. ई० प्र० वि० वि०, भा० ३, पृ० २७१
२. स्व० उ०, भा० २, प० ४ पृ० ३२६
३. म० म० प०, पृ० १४५
४. त० व्या० कु०, पृ० १९-२०

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



रागाद्युपशमात् पुंसां पुण्यपापपरिक्षयः।
तत्क्षयाच्च शरीरेण न पुनः संप्रयुज्यते ॥
अशरीरं च संक्लेशैः सर्वैरेव न बाध्यते।
क्लेशमुक्तः प्रसन्नात्मा मुक्त इत्यभिधीयते ॥

( २ )

[1]विधिवाक्यमिदं शैवं नार्थवादः शिवात्मकम्।
लोकानुग्रहकर्ता यः स मृषार्थं कथं वदेत् ॥
सर्वज्ञपरिपूर्णत्वादन्यथा केन हेतुना।
ब्रूयाद् वाक्यं शिवः शान्तः सर्वदोषविवर्जितः ॥
यद् यथावस्थितं वस्तु गुणदोषैः स्वभावतः।
यावत्फलं च यत् पुण्यं सर्वज्ञस्तत्तथा वदेत् ॥
रागाज्ञानादिभिर्दोषैर्ग्रस्तत्वादनृतं वदेत्।
ते चेश्वरे न विद्यन्ते ब्रूयात् स कथमन्यथा ॥
अपास्ताशेषदोषेण सर्वज्ञेन शिवेन यत्।
प्रणीतममलं वाक्यं तत् प्रमाणं न संशयः ॥
तस्मादीश्वरवाक्यानि श्रद्धेयानि विपश्चिता।
यथार्थं पुण्यपापेषु तदश्रद्धो व्रजत्यधः ॥

( ३ )

[2]आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः।
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे ॥

( ४ )

[3]शिवनिन्दा गुरोर्निन्दा शिवज्ञानस्य दूषणम्।
देवद्रव्यापहरणं गुरुद्रव्यविनाशनम् ॥

---

१. त० व्या० कु०, पृ० २६
२. त० व्या० कु०, पृ० ७६
३. त० व्या० कु०, पृ० ८६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



हरन्ति ये च संमूढाः शिवज्ञानस्य पुस्तकम् ।
सुमहापातकान्याहुरित्यनन्तफलानि षट् ॥

( ५ )

[1]प्रधानादभवद् बुद्धिर्जगद्धेतुः शिवेच्छया ।
बुद्धेरपि च संक्षोभादहङ्कारस्त्रिधाऽभवत् ॥
अहङ्काराच्च सूक्ष्माणि तन्मात्राणीन्द्रियाणि च ।

( ६ )

[2]इहैकभविको मोक्ष एष तावत् परीक्ष्यताम् ।
अनेकभविका मुक्तिर्भवतां केन वार्यते ॥

## शिवसूत्रम्

[3]ब्रह्मपदे कमलशरीरस्तदुत्थप्राणिरूपेण सर्वत्र सर्वदा विचरति ।

## श्रीकण्ठपादः

[4]पश्यत्यन्यत् शृणोत्यन्यत् करोत्यन्यच्च जल्पति ।
चिन्तयत्यन्यदा भुङ्क्ते तत्र सांकेतिकी स्थितिः ॥
... ... ... ... ... ... ... ... ... ...
मनोऽप्यन्यत्र निक्षिप्तं चक्षुरन्यत्र पातितम् ।

१. त० व्या० कु०, पृ० १४७
२. पर० योग०, पृ० १९५
३. ई० प्र० वि० वि०, भा० २, पृ० ३०१
४. परा० अभि०, पृ० १९५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



# श्रीकण्ठी(यसंहिता)

( १ )

[१]स्रोतस्यूर्ध्वे भवेज्ज्ञानं शिवरुद्राभिधं द्विधा।
कामजं योगजं चिन्त्यं मौकुटं चांशुमत् पुनः॥
दीप्त ... ... ... ... ... ... न्तरं पुनः।
शिवभेदाः समाख्याता रुद्रभेदांस्त्विमाञ्छृणु॥
विजयं चैव निःश्वासं मद्गीतं पारमेश्वरम्।
मुखबिम्बं च सिद्धं च सन्तानं नारसिंहकम्॥
चन्द्रांशुं वीरभद्रं च आग्नेयं च स्वयम्भुवम्।
विसरं रौरवाः पञ्च विमलं किरणं तथा॥
ललितं सौरभेयं च तन्त्राण्याहुर्महेश्वरि।
अष्टाविंशतिरित्येवमूर्ध्वस्रोतोविनिर्गताः॥

( २ )

[२]अन्यत् संक्षेपतो वक्ष्ये गीतं यत्परमेष्ठिना।
तच्च भेदैः प्रवक्ष्यामि चतुष्षष्टिं विभागशः॥
भैरवं यामलं चैव मताख्यं मङ्गलं तथा।
चक्राष्टकं शिखाष्टकं बहुरूपं च सप्तमम्॥
वागीशं चाष्टमं प्रोक्तमित्यष्टौ वीरवन्दिते।
एतत् सादाशिवं चक्रं कथयामि समासतः॥
स्वच्छन्दो भैरवश्चण्डः क्रोध उन्मत्तभैरवः।
असिताङ्गो महोच्छुष्मः कपालीशस्तथैव च॥
एते स्वच्छन्दरूपास्तु बहुरूपेण भाषिताः।
ब्रह्मयामलमित्युक्तं विष्णुयामलकं तथा॥

---

१. तन्त्रा० वि०, भा० १, आ० १, पृ० ४०
२. तन्त्रा० वि०, भा० १, आ० १, पृ० ४१-४२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



स्वच्छन्दश्च रुरुश्चैव षष्ठं चाथर्वणं स्मृतम् ।
सप्तमं रुद्रमित्युक्तं वेतालं चाष्टमं स्मृतम् ॥
अतः परं महादेवि मतभेदाञ्छृणुष्व मे ।
रक्ताख्यं लम्पटाख्यं च मतं लक्ष्म्यास्तथैव च ॥
पञ्चमं चालिका चैव पिङ्गलाद्यं च षष्ठकम् ॥
उत्फुल्लकं मतं चान्यद्विश्वाद्यं चाष्टमं स्मृतम् ।
चण्डभेदाः स्मृता ह्येते भैरवे वीरवन्दिते ॥
भैरवी प्रथमा प्रोक्ता पिचुतन्त्रसमुद्भवा ।
सा द्विधा भेदतः ख्याता तृतीया तत उच्यते ॥
ब्राह्मी कला चतुर्थी तु विजयाख्या च पञ्चमी ।
चन्द्राख्या चैव षष्ठी तु मङ्गला सर्वमङ्गला ॥
एष मङ्गलभेदोऽयं क्रोधेशेन तु भाषितः ।
प्रथमं मन्त्रचक्रं तु वर्णचक्रं द्वितीयकम् ॥
तृतीयं शक्तिचक्रं तु कलाचक्रं चतुर्थकम् ।
पञ्चमं बिन्दुचक्रं तु षष्ठं वै नादसंज्ञकम् ॥
सप्तमं गुह्यचक्रं च खचक्रं चाष्टमं स्मृतम् ।
एष वै चक्रभेदोऽयमसिताङ्गेन भाषितः ॥
अन्धकं रुरुभेदं च अजाख्यं मूलसंज्ञकम् ।
वर्णभण्ठं विडङ्गं च ज्वालिनं मातृरोदनम् ॥
कीर्तिताः परमेशेन रुरुणा परमेश्वरि ।
भैरवी चित्रिका चैव हंसाख्या च कदम्बिका ॥
हृल्लेखा चन्द्रलेखा च विद्युल्लेखा च विद्युमान् ।
एते वागीशभेदास्तु कपालीशेन भाषिताः ॥
भैरवी तु शिखा प्रोक्ता वीणा चैव द्वितीयिका ।
वीणामणिस्तृतीया तु संमोहं च चतुर्थकम् ॥
पञ्चमं डामरं नाम षष्ठं चैवाप्यथर्वकम् ।
कबन्धं सप्तमं ख्यातं शिरश्छेदोऽष्टमः स्मृतः ॥

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



एते देवि शिखाभेदा उन्मत्तेन च भाषिताः ।
एतत् सादाशिवं चक्रमष्टाष्टकविभेदतः ॥

( ३ )

[1]अष्टाविंशतिभेदैस्तु गारुडं हृदयं पुरा ।...
पश्चिमे भूततन्त्राणि ... ... ... ... ... ॥
दक्षिणे दक्षिणो मार्गश्चतुर्विंशतिभेदतः ।
वामदेवात्तु यज्जातमन्यत्तत् साम्र(म्प्र)तं शृणु ।

( ४ )

[2]सप्रपञ्चं परित्यज्य हेयोपादेयलक्षणम् ।
तृणादिकं तथा पर्णं पाषाणं सचराचरम् ॥
शिवाद्यवनिपर्यन्तं भावाभावोपबृंहितम् ।
सर्वं शिवमयं ध्यात्वा भूयो जन्म न प्राप्नुयात् ॥

( ५ )

[3]अदृष्टविग्रहाच्छान्ताच्छिवात् परमकारणात् ।
ज्ञानरूपं विनिष्क्रान्तमनवच्छदनं महत् ॥

इत्यादिना नादस्वरूपं निरूप्य—

ततो जातमिदं सर्वं चतुर्वर्गफलप्रदम् ।

( ६ )

[4]प्रवर्ततेश्वरात् सर्वं निवर्तेत तथेश्वरात् ।
ईश्वराधिष्ठितं सर्वं जगत् स्थावरजङ्गमम् ॥
महादेवात् परं नास्ति सत्यमेतन्न चान्यथा ।

---

१. तन्त्रा० वि०, भा० १, आ० १, पृ० ४१
२. शिव० विम०, पृ० ९९
३. स्व० उ०, भा० ४, प० ८, पृ० १९
४. स्व० उ०, भा० ४, प० ९, पृ० ७९

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



( ७ )

[1]ब्रह्माण्डं कोटिविस्तीर्णं ... ... ... ...

( ८ )

[2]तत्र मध्ये महद् द्वीपं कुमारीद्वीपसंज्ञकम् ।
तत्र रुद्रशतं पूर्णमवतीर्णं शुभङ्करम् ॥
पशूनां हेतुभूतं च स्मरणात् पापनाशनम् ।

( ९ )

[3]यया विना न सर्वज्ञः शिवः सा शक्तिरैश्वरी ।
या सा शिवप्रयुक्ता तु पशूनां मोक्षयेत् ततः ॥
पतेद् दीक्षानुसन्धाने दीक्षा ज्ञानादिलक्षणा ।

## श्रीकुलम्

[4]हेलया क्रीडया वापि आदराद् वाथ तत्त्ववित् ।
यस्य संपातयेद् दृष्टिं स मुक्तस्तत्क्षणात् प्रिये ॥

## श्रीपञ्चाशिका

[5]समयी तु करस्तोभान्मुद्रया पुत्रको भवेत् ।

१. स्व० उ०, भा० ५, प० १०, पृ० ३
२. स्व० उ०, भा० ५, प० १०, पृ० १०७
३. स्व० उ०, भा० ६, प० ११, पृ० ४४
४. पर० योग, पृ० १८६
५. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १२९



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



## श्रीमाला

[१]अधोऽवस्था यदा ऊर्ध्वं संक्रमन्ति वरानने ।
सैव मोक्षपदावस्था सैव ज्ञानस्य भाजनम् ॥
ऊर्ध्वचक्रगतावस्था यदाधः संभवन्ति च ।
तदा पैशाच आवेशः स वै विघ्नस्य कारणम् ॥



## षडर्धशास्त्रम्

( १ )

[२]...............................त्रिशूलेन चतुर्थकम् ।

( २ )

[३]क्रियायाः पूरणार्थाय यागाज्ञापूरणाय च ।
चतुः सकृद्वा यः कुर्यान्न पवित्रं स निष्फलः ॥



## संवित्प्रकरणम्

[४]यथाग्निना समाविष्टं सर्वं तद्रूपमीक्ष्यते ।
तथा ज्ञानसमाविष्टं सर्वं तद्रूपमीक्ष्यताम् ॥



१. तन्त्रा० वि०, भा० ११, आ० २९, पृ० १४९
२. परा० अभि०, पृ० १७६
३. परा० अभि०, पृ० २३६
४. स्प० प्र०, पृ० ११२

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



## संवित्प्रकाशः

[1]सर्वो विकल्पः संसार इत्युक्तेरयमाशयः।
तदसत्त्वं स्रुतेः सत्त्वं शुद्धायाः संविदः स्थितम् ॥

## संकर्षणीयामलम्

[2]इत्येतत् परमानन्दं महासवमनुत्तमम्।
योगिनीवल्लभं भद्रे अर्घपात्रे प्रपूजयेत् ॥
तेनैकविप्रुषामात्रतर्पणं सर्वदा स्मृतम्।
वामहस्तेन कर्तव्यमनामाङ्गुष्ठयोगतः ॥

## संकेतपद्धतिः

( १ )

[3]प्रत्येकमंशभेदेन सर्गस्थितिलयक्रमात्।

( २ )

[4]नवचक्रक्रमो योऽसौ महावश्यादिसिद्धिदः।

( ३ )

[5]पश्यन्त्यादिक्रमो योऽसौ सूचितः श्रीशिवेन तु।
सोऽन्तर्ध्वनिमहानादः संकेतैराद्यसूत्रके ॥

---

१. म० म० प०, पृ० २५
२. तन्त्रा० वि०, भा० ९, आ० १५, पृ० १३९
३. यो० दी०, पृ० ८४
४. यो० दी०, पृ० २७२
५. अ० र०, पृ० ३६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ४ )

[1]शिखण्डचण्डरसन्यायः शिविकाख्यो द्वितीयकः ।
अयःशलाकासंज्ञोऽन्यस्त्रिविधो न्यायवैभवः ॥
त्रिविधं न्यायमुत्सृज्य वर्णानामुदयक्रमम् ।
ये वदन्ति न ते योग्या वामकेश्वरदर्शने ॥

( ५ )

[2]कामेशीं सर्वगां नित्यां गुरुरूपां नमामि ताम् ।
ज्येष्ठमध्यमबालाख्यचित्प्राणविषयात्मिकाम् ॥
ओषमित्रीशसंज्ञेयान् नौम्यहं सिद्धपुङ्गवान् ।

( ६ )

[3]एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।
तस्य शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः ॥
विमर्शाख्या च सा नित्या पाञ्चविध्यं समागता ।
आकाशानिलसप्तार्चिस्सलिलावनिभेदतः ॥
एकैकगुणवृद्ध्या तु तिथिसंख्यात्वमागता ।
विमर्शरूपिणी नित्या षोडशी सा प्रकीर्तिता ॥
गता सा षोडशैर्भेदैस्त्रिपुरा परमेश्वरी ।
सुन्दर्यादिमहापूर्वं चित्रान्तं च समन्ततः ॥
आगमादवबोद्धव्यमिह सङ्केतमात्रतः ।
प्रतिपत्प्रभृता देव्यः पौर्णमास्यन्तिकाः क्रमात् ॥
एकैकां पूजयेद्यो हि स सौभाग्यमवाप्नुयात् ।

---

१. अ० र०, पृ० ३७
२. अ० र०, पृ० ४०, २२२; ज्ञा० वि०, प० ५२ ख
३. ऋ० वि०, अ० र० ४८-४९; चि०, पृ० ३५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ७ )

[1]ब्राह्म्याद्यष्टौ च तद्युक्तमनङ्गकुसुमात्मकम् ।
सृष्टिचक्रं तथा प्रोक्तं स्थितिचक्रं ततः परम् ॥
चतुर्दशारं प्रथमं दशारं पुनरेव च ।
स्थितिचक्रं तथा प्रोक्तं संहारमपि संशृणु ॥
वशिन्यष्टौ तदादिस्थं त्र्यश्रं मध्यं क्रमात् पुनः ।
संहारस्त्रिविधः प्रोक्तस्त्वनाख्या सर्वचक्रगा ॥

( ८ )

[2]पूर्वाम्नायः सृष्टिरूपः स्थितिरूपस्तु दक्षिणः ।
संहारः पश्चिमो ज्ञेयो ह्यनाख्यस्तूत्तरः स्मृतः ॥

( ९ )

[3]तुर्यात्मकं पञ्चयुतं योगिनीजालमण्डलम् ।
यो जानाति स मुक्तात्मा सोऽन्वयी देशिकाग्रणीः ॥

( १० )

[4]त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीर्मालिनी च सिद्धाम्बा त्वष्टमी त्रिपुराम्बिका ॥
त्रिपुरा प्रथमा नित्या द्वितीया त्रिपुरेश्वरी ।
सुन्दरीति तृतीया स्याच्चतुर्थी पुरवासिनी ॥
पञ्चमी त्रिपुराश्रीः स्यात् षष्ठी त्रिपुरमालिनी ।
सप्तमी त्रिपुरासिद्धा त्वष्टमी त्रिपुराम्बिका ॥

( ११ )

[5]संकोचः परमा शक्तिर्विकासः परमः शिवः ।

---

१. ऋ० वि०, पृ० ६५-६६
२. अ० र०, पृ० ६५
३. अ० र०, पृ० ६६
४. अ० र०, पृ० १०७
५. अ० र०, पृ० १९५

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १२ )

[1]अनिकेताख्यचिद्व्योम्नः सृजन्ती पञ्चकं स्वयम् ।
शक्तिस्तुर्यात्मभेदेन लयमेत्यनिकेतने ॥

( १३ )

[2]मूर्तिवैचित्र्यविभवादिच्छायाः प्रविकस्वरम् ।
अध्वभेदं सृजत्युच्चैर्व्याप्यव्यापकभेदितम् ॥
स्थूलो व्याप्यो व्यापकोऽन्यो भुवनादिः कलान्तगः ।
एवमन्यत् समस्तं तज्ज्ञानशक्तिविपाकयुक् ॥
रौद्रीरूपं समुल्लास्य निखिलं गम्यते यदि ।

( १४ )

[3]त्र्यस्रान्तरौड्डपीठस्था महात्रिपुरसुन्दरी ।
शाक्तस्फारसमाविष्टो यो ह्येतामुच्चरेन्नरः ॥
सोऽचिराल्लभते सिद्धिं वाक्कामविषसंज्ञिताम् ।
छिन्ना रुद्धाश्च ये मन्त्राः कीलिता मूर्च्छिताश्च ये ॥
सिद्ध्यन्ति तेऽचिरात्तस्य शक्तिविस्फारबृंहिताः ।
मुद्रा विद्याश्च मन्त्राश्च यत्र यन्त्राणि संस्थिताः ॥
तमहं पीठराजेशमोङ्काराख्यं नमाम्यहम् ।
वाक्कामविषमोक्षाणामालयं सर्वसिद्धिदम् ॥
श्रीपीठं राजदुष्प्रेक्ष्यं तमहं शरणं श्रये ।
अज्ञानतिमिरध्वंसादाज्ञास्फारप्रदर्शनात् ॥
आज्ञापीठमिति प्रोक्तमोड्डपीठं नमाम्यहम् ।

---

१. अ० र०, पृ० २०१
२. अ० र०, पृ० २१०-२११
३. अ० र०, पृ० २१९-२२०; ज्ञा० वि०, प० ५० क

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( १५ )

[1]अदृष्टविग्रहा स्वान्तरुदिता परमा कला ।
अस्वराकारतामाप्ता त्र्यश्रसङ्केतमध्यगा ॥

( १६ )

[2]त्र्यश्रस्योत्तरकोणस्था भगेशी पूर्णपीठगा ।
कामादिनवसंकेतयन्त्रमन्त्रविधौ स्थिता ॥
नवसिद्धिप्रदा या सा मन्त्रपीठकृतास्पदा ।
अणिमादिमहामोक्षपर्यन्तघटनोद्यता ॥
द्वादशान्तादिताल्वन्तं जगदाह्लादकं परम् ।
पुनः कन्दादिताल्वन्तं शक्तिबीजं समुद्धरेत् ॥
पूर्णपीठे स्थिता याज्ञा विषनिर्नाशिनी परा ।
यैर्मनाक् स्मर्यते तेषामजरामरता सदा ॥
मननत्राणधर्मोऽसौ मन्त्रो यः परिकीर्तितः ।
अस्याधारो मन्त्रपीठः पूर्णाख्यो जयतादजः ॥

( १७ )

[3]त्र्यस्रदक्षिणकोणस्था वज्रेशी जालपीठगा ।
नवविद्याख्यसंकेतस्फारसिद्धिप्रदायिका ॥
करशुद्धौ देहरक्षात्मासने चक्रशासने ।
मन्त्राधारे तथा साध्यावाहने तु सुपूजिता ॥
त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीर्मालिनी च सिद्धाम्बा महात्रिपुरभैरवी ॥
विद्यासंकेतमेतत्तु गुरुपूर्वत्वमागतम् ।
श्रीमद्दीपकसन्तानसन्तत्या दर्शितं नुमः ॥

---

१. ऋ० वि० पृ० २१९
२. अ० र० पृ० २२०-२२१
३. अ० र०, पृ० २२१; ज्ञा० वि०, प० ५१ ख-५२ क

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



गुदमेढ्रनाभिचक्रहृद्गलभ्रूविभेदितम् ।
तरुणारुणसंकाशं कामराजं समुद्धरेत् ॥

( १८ )

[1]त्र्यस्राग्रकोणगा या सा कामेशी कामपीठगा ।
मुद्रादशकसंकेतदशसिद्धिप्रदायिका ॥
एका चैव महामुद्रा योनिमुद्रात्वमागता ।
तया विभक्तः स्वात्मा तु संक्षोभादिप्रभेदतः ॥
शक्तिगर्भात् प्रोच्छलन्तं हृद्ग्रन्थिप्रविभेदकम् ।
देदीप्यमानं जिह्वाग्रे वाग्भवं तु समुद्धरेत् ॥
कामपीठे स्थिता बाला कामतत्त्वप्रबोधिका ।
स्मरणाद् देशिकान्द्राणां वाग्विलासप्रदायिका ॥
द्रावणात् पाशजालस्य तत्परस्य च मोदनात् ।
मुद्रापीठमिति प्रोक्तं कामरूपं नमाम्यहम् ॥

( १९ )

[2]कन्दाग्रकोणात् प्रोच्चैर्या स्फुरन्ती सततोदिता ।

( २० )

[3]दिव्यं सिद्धत्रयं पूर्वं दम्पती च ततः क्रमात् ।
लोपामुद्रा तथाऽगस्त्यस्ताभ्यां कङ्कालतापसः ॥
तेन धर्मश्च कृपया धर्मेण च महात्मना ।
मुक्तकेशी ततस्तेन दीक्षिता मन्त्रनायिका ॥
तया दीपकनाथश्च दीपकेन महात्मना ।

---

१. अ० र०, पृ० २२१-२२२; ज्ञा० वि०, प० ५२ क
२. अ० र०, पृ० २२२; ज्ञा० वि०, प० ५२ ख
३. ऋ० वि०, पृ० २२३

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २१ )

[1]सर्वाधारेषु चक्रेषु शक्तिर्या कुटिला स्थिता।
आद्यचक्रानुसन्धानात् सा सन्ध्या चक्ररूपिणी॥

( २२ )

[2]दिङ्मातरोऽत्र विधिवदष्टदिक्षु समुद्भवाः।
पुर्यष्टकनिवासिन्यो देव्यस्ता नौम्यनुक्रमात्॥

( २३ )

[3]त्रैलोक्यमोहने चक्रे योगिन्यः प्रकटाः स्थिताः।
तासां नामप्रभेदस्तु गदितो रुद्रयामले॥
प्रत्येकमष्टकव्याप्त्या चतुष्षष्ट्याख्यसंख्यया।
पूर्णाभिषेकसमये महापर्वदिनेषु च।
अथवा नित्यमपि ताः पूज्याः............॥



# सद्योज्योतिः

( १ )

[4]उवाच सद्योज्योतिश्च वृत्तौ स्वायम्भुवस्य तत्।
बाढमेको हि पाशात्मा शब्दोऽन्यश्च शिवात्मकः॥
तस्मात्तस्यैव वर्णस्य युक्ता शोधकशोध्यता।

१. ज्ञा० वि०, प० ७ ख
२. ज्ञा० वि०, प० १२ क
३. ज्ञा० वि०, प० ४९ ख
४. तन्त्रा०, भा० १०, आ० १६, पृ० ८०



CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu  Trust. Funding by MoE-IKS



( २ )

[1]शौचमप्यात्मशुद्धेः समाधिलाभस्य च कारणम् ।



# सर्वज्ञानोत्तरम्

( १ )

[2]नान्यशास्त्रसमुद्दिष्टं न चान्यां देवतां स्मरेत् ।
विशुद्धभावनायुक्तः शिवैकगतमानसः ॥

( २ )

[3]वस्तुतः पुरुषः सूक्ष्मो व्यक्ताव्यक्तः सनातनः ।...
तत ऊर्ध्वं भवेदन्यत् कलावरणसंज्ञकम् ॥...
अत ऊर्ध्वं भवेदन्यत् कालस्यावरणं गुह ।....
अत ऊर्ध्वं भवेदन्यन्मायातत्त्वं सुदुस्तरम् ॥

( ३ )

[4]तालद्वादशको ज्ञेयः प्राणायामस्तु कन्यसः ।
मध्यश्चतुर्भिर्विंशत्या श्रेष्ठस्तद्द्विगुणो भवेत् ॥

( ४ )

[5]कर्मणां तु शरीराणि भावात् कर्मोदयो भवेत् ।
पूर्वोपार्जितकर्मणां भावः संयोगकारकः ॥

---

१. मृ० वृ० क्रि०, पृ० ७
२. तन्त्रा० वि०, भा० ३, आ० ४, पृ० २७९
३. तन्त्रा० वि०, भा० ६, आ० ९, पृ० ४५-४६
४. मृ० वृ० यो०, पृ० २०
५. श० र० सं०, पृ० ६४

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( ५ )

[1]गुरुदेवाग्निभक्ताय नित्यं भक्तियुताय च।
प्रदातव्यमिदं शास्त्रं नेतरेभ्यः प्रदापयेत्॥

( ६ )

[2]एतत्ते शिवसद्भावं शिववक्त्राद् विनिर्गतम्।
गुह्याद् गुह्यतमं गुह्यमूहनीयं प्रयत्नतः।
नाशिष्याय प्रदातव्यं नापुत्राय कदाचन॥

## सर्वज्ञानोत्तरवृत्तिः

[3]अत्र कुण्डलिनीशब्दवाच्या तु भुजङ्गकुटिलाकारेण नादात्मना स्वकार्येण प्रतिपुरुषं भेदेनाऽवस्थिता, न तु स्वरूपेण प्रतिपुरुषमवस्थितेत्यर्थः।

## सर्ववीरभट्टारकः

( १ )

[4]पेयापेयं स्मृता आपो भक्ष्याभक्ष्यं तु पार्थिवम्।
सुरूपं च विरूपं च तत्सर्वं तेज उच्यते॥
स्पृश्यास्पृश्यौ स्मृतो वायुश्छिद्रमाकाश उच्यते।
नैवेद्यं च निवेदी च नैवेद्यं गृह्णते च ये॥
सर्वं पञ्चात्मकं देवि न तेन रहितं क्वचित्।
इच्छामुत्पादयेदात्मा कथं शङ्का विधीयते॥

१. श० र० सं०, पृ० ९४
२. श० र० सं०, पृ० ९४
३. श० र० सं०, पृ० ४१-४२
४. तन्त्रा० वि०, भा० ७, आ० १२, पृ० १०६; परा० अभि०, पृ० २३६

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

Digitization by eGangotri and Sarayu Trust. Funding by MoE-IKS



( २ )

[1]परचित्तगतं ज्ञानं रूपस्य परिवर्तनम् ।
करोत्यमृतलुब्धा च ज्ञेया सा रुद्रडाकिनी ॥

इत्युपक्रम्य—

डाम्यश्चैवंविधा ज्ञेया गुप्ताचारार्चने रताः ।
स्वादयन्ति न तु घ्नन्ति छिद्रान्वेषणतत्पराः ॥
डामर्यस्त्वपरा ज्ञेया मन्त्रतद्गतचेतसः ।
परामृतं समश्नन्ति मानुषं वाहयन्ति च ॥
पर्यटन्त्यखिलां पृथ्वीं रूपं कुर्वन्त्यनेकधा ।

( ३ )

[2]मुद्रा मण्डलपीठं तु मन्त्रपीठं तथैव च ।
विद्यापीठं तथैवेह चतुष्पीठा तु संहिता ॥...
स्वच्छन्दभैरवश्चण्डः क्रोध उन्मत्तभैरवः ।
ग्रन्थान्तराणि चत्वारि मन्त्रपीठं वरानने ॥

( ४ )

[3]न तैर्विना भवेच्छब्दो नार्थो नापि चितेः (स्थितिः) ।



## सर्वागमप्रामाण्यम्

( १ )

[4]न च तच्छैवाख्यं प्रमाणं दृष्टयन्तराणामसत्यार्थत्वं प्रतिपादयति, येन तैः सहास्य विरोधः स्यात् । अपि तु प्रत्यक्षादीनामिवाल्पार्थदर्शित्वेऽपि

१. ने० उ०, भा० १, पृ० ४७-४८
२. स्व० उ०, भा० १, प० १, पृ० १०
३. ई० प्र० वि० वि०, भा० ३, पृ० ३८४
४. मो० का०, पृ० ५७

CC0. In Public Domain. Jangamwadi Math Collection, Varanasi

